॥ श्रीगणेशाय नमः ॥ विश्वस्य मातापितरौ भवानीशङ्करौ प्रभू ॥ वन्देऽहं सर्वदा भक्त्या निजं तातं च मातरम् ॥ १ ॥ नत्वा महेश्वरं साम्बं दृष्ट्वा प्राचीनपद्धतीः ॥ ग्रन्थं कुर्वे प्रतिष्ठाप्रकाशं शुक्लयजुर्विदाम् ॥ २ ॥ अथातः संप्रवक्ष्यामि प्रासादानां विधिं शुभम् ॥ कृतेन येन तेषां तु प्रतिष्ठा संप्रजायते ॥ ३ ॥ तत्रादौ सर्वदेवप्रतिष्ठाकाल उच्यते । मात्स्ये । चैत्रे वा फाल्गुने वापि ज्येष्ठे वा माधवे तथा ॥ माघे वा सर्वदेवानां प्रतिष्ठा शुभदा सिते ॥ ४ ॥ सौम्यायने शुभा प्रोक्ता निन्दिता दक्षिणायने ॥ रिक्तान्यतिथिषु स्यात्सा वारे भौमान्यके तथा ॥ ५ ॥ या तिथिर्यस्य देवस्य तस्यां वा तस्य कीर्तिता ॥ अषाढे द्वे तथा मूलमुत्तराद्वयमेव च ॥ ज्येष्ठाश्रवणरोहिण्यः पूर्वाभाद्रपदास्तथा ॥ ६ ॥ हस्तोऽश्विनी रेवती च पुष्यो मृगशिरस्तथा ॥ अनुराधा तथा स्वाती प्रतिष्ठासु प्रशस्यते ॥ ७ ॥ चन्द्रताराबलोपेते पूर्वाह्णे शोभने दिने ॥ शुभलग्ने शुभांशे च कर्तुर्नो निधनोदये ॥ ८ ॥ अयने विषुवे तद्वत्षडशीतिमुखे तथा ॥ सुराणां स्थापनं कार्यं विधिदृष्टेन कर्मणा ॥ ९ ॥ प्राजापत्ये तु शयनं श्वेते सूत्थापनं तथा ॥ मुहूर्ते स्थापनं कुर्यात्पुनर्ब्राह्मे विचक्षणः ॥ १० ॥ दिनमध्यगते सूर्ये मुहूर्तेऽभिजिदष्टमे ॥ सर्वकामसमृद्धः स्यात्सर्वोपद्रववर्जितः ॥ ११ ॥ चरराशिं परित्यज्य स्थिरराशिं प्रगृह्य च ॥ सुप्रशस्ते मुहूर्ते वै प्रतिष्ठां कारयेद्धरेः ॥ १२ ॥ सिंहे सूर्यः शिवो द्वन्द्वे लग्ने स्थाप्यः स्त्रियां हरिः ॥ कुम्भे वेधाश्चरे क्षुद्रा ह्यङ्गदेव्यः स्थिरेऽखिलाः ॥ १३ ॥ ( अथ देवतान्तरेण कालविशेषो रत्नावल्याम् ) माघफाल्गुनवैशाखज्येष्ठाषाढेषु पञ्चसु ॥ १४ ॥ श्रावणे च नभस्ये च लिङ्गस्थापनमुत्तमम् ॥ देव्या माघेऽश्विने मासेऽप्युत्तमा सर्वकामदा ॥ १५ ॥ न तिथिर्न च नक्षत्रं नोपवासोऽत्र कारणम् ॥ सर्वकालं प्रकर्त्तव्यं कृष्णपक्षे विशेषतः ॥ १६ ॥ रात्रिरूपा यतो देवी दिवारूपो महेश्वरः ॥ अतः स्वकालपूजाभिः सिद्धिदा परमेश्वरी ॥ १७ ॥ माधवीये मयूखे च । मातृभैरववाराहनारसिंहत्रिविक्रमाः ॥ महिषासुरहन्त्र्यश्च स्थाप्या वै दक्षिणायने ॥ १८ ॥ गृहे स्वे यो विधिः प्रोक्तो

विनिवेशप्रवेशयोः ॥ स एव विदुषा कार्य्यो देवतायतनेष्वपि ॥ १९ ॥ नारदः । हन्त्यर्थहीना कर्त्तारं मन्त्रहीना तु ऋत्विजम् ॥ स्त्रियं लक्षणहीना तु न प्रतिष्ठासमो रिपुः ॥ २० ॥ प्रतिष्ठापद्धतौ उदगयने माघादिपञ्चमासेषु शुक्लपक्षे चतुर्थीषष्ठीनवमीचतुर्दशीवर्जितानां सर्वासां वा कृष्णपक्षे दशम्यन्तानां निषिद्धतिथिवर्जितानामन्यतमस्यां तिथौ निषिद्धास्वपि स्वदैवत्यायां भौमवर्जितादिने अश्विनी रोहिणीमृगशिरःपुनर्वसुपुष्यउत्तरात्रयहस्तचित्रास्वात्यनुराधाज्येष्ठाश्रवणमूलधनिष्ठाशतभिषारेवतीत्येतेषु नक्षत्रेष्वन्येष्वपि स्वदैवत्येषूपदिष्टे ष्वपि प्रोक्तकालहोरायां भद्रावर्जितकरणेषु श्वेतमैत्रसावित्रवैराजरौहिणमाहेन्द्रगान्धर्वेष्वन्यतमास्मिन्मुहूर्ते गुणान्विते स्थिरे लग्ने ततोऽन्यस्मिन्नपि स्थिरेंऽशे शुभनिमित्तान्वितकालदिने यजमानस्य चन्द्रसूर्यताराबलान्विते देवानां प्रतिष्ठां कुर्यात् ॥ इति प्रतिष्ठाकालः ॥ ततो यजमानः सुमुहूर्ते प्रातःकृत्यं निर्वर्त्य शुद्धो भूत्वाऽऽचार्यहस्ते पूजासंभारान्समर्प्य सुवासिनीभिः सौभाग्यवतीभिः स्त्रीभिर्गीतवाद्यमङ्गलशब्दैः सह प्रासादाग्रे प्राच्यामुदीच्यां वा प्रतीच्यां नातिदूरे मण्डपभूमिमागत्य पादप्रक्षालनं कृत्वा आसनोपर्युपविश्याचमनं प्राणायामं च कृत्वा बद्धशिखः सपत्नीको गणेशं ध्यायन् प्राङ्मुख उदङ्मुखो वोपविश्य देशकालौ संकीर्त्य ममेह जन्मनि जन्मान्तरे वा कृतसमस्तपापक्षयार्थं श्रीपरमेश्वरप्रीत्यर्थममुकदेवप्रासादप्रतिष्ठायज्ञोपयोगिनां करिष्यमाणमण्डपादीनां निर्विघ्नतासिद्ध्ये गणपतिपूजनमाचार्यादिवरणं च करिष्ये इति संकल्प्य । ॐसुमुखश्चैकदन्तश्च० इत्यादि स्मरणपूर्वकं यथाविधि गणपतिं संपूज्य आचार्यवरणं कुर्यात् । तद्यथा–आचार्यस्य पादप्रक्षालनं पादपूजनं च कृत्वा शिरसि कुङ्कुमादिना तिलकं च कृत्वा अक्षतपुष्पादिभिः संपूज्य गुरवे नम इति नत्वा देशकालौ संकीर्त्य अमुकदेवताप्रासादप्रतिष्ठाप्रारम्भनिमित्तं तदङ्गत्वेन मण्डपं कर्तुममुकगोत्रममुकप्रवरममुकवेदशाखाध्यायिनममुकशर्माणं ब्राह्मणमाचार्यत्वेन त्वामहं वृणे । ॐ वृतो

ऽस्मीति प्रतिवचनम् । ॐ व्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम् ॥ दक्षिणाश्रद्धामाप्नोतिश्रद्धयासत्यमाप्यते ॥ इत्याचार्यं वृत्वा हस्ते कङ्कणबन्धनं कुर्यात् । तत आचार्यं पाद्यादिषोडशोपचारैः संपूज्य । आचार्यो हि यथा स्वर्गे शक्रादीनां बृहस्पतिः ॥ तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत ॥ १ ॥ इति संप्रार्थ्य तिष्ठेत् । तत आचार्यस्तत्र मण्डपार्थं भूम्यावाहनं प्रतिष्ठापनं पूजनं शोधनं च कुर्यात् । अथ भूम्यावाहनम् । भूमिं स्पृष्ट्वाऽऽचार्यः पठेत् । ॐभूरसिभूमिरस्यदितिरसिविश्वधाया विश्वस्यभुवनस्य धर्त्री ॥ पृथिवींयच्छपृथिवींदृꣳहपृथिवींमाहिꣳसीः ॥ १ ॥ ॐ घृतवतीभुवनानामभिश्रियोर्वीपृथ्वीमधुदुघेसुपेशसा ॥ द्यावापृथिवीव्वरुणस्यधर्म्मणाविष्कभितेऽअजरेभूरिरेतसा ॥ २ ॥ ॐमहीद्यौःपृथिवीचनऽइमंयज्ञंमिमिक्षताम् ॥ पिपृतान्नोभरीमभिः ॥ ३ ॥ आगच्छ सर्वकल्याणि वसुधे लोकधारिणि ॥ उद्धृतासि वराहेण सशैलवनकानना ॥ ४ ॥ रत्नाकरे विष्णुना त्वं धृता वाराहरूपिणा ॥ आगच्छ वरदे धात्रि यज्ञेऽस्मिञ्छुभदायिनि ॥ ५ ॥ एतैर्मन्त्रैर्भूम्यावाहनं कृत्वा । ॐमनोजूतिर्जुषतामाज्ज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳसमिमंदधातु ॥ विश्वेदेवासऽइहमादयन्तामों ३ प्रतिष्ठ ॥ इति प्रतिष्ठाप्य । ॐभूमिर्भूमिमिवप्रागान्माता मातरमप्यगात् ॥ भूयाम पुत्रैः पशुभिर्यो नो द्वेष्टि स नश्यतु ॥ १ ॥ इति मन्त्रेण भूमिं नत्वा ॥ ॐभूर्भुवः स्वः पृथिवीकूर्मानन्तदेवताभ्यो नमः ॥ इति मन्त्रेण षोडशोपचारैः संपूज्याञ्जलिं बद्ध्वा प्रार्थयेत् । ॐ शेषमूर्ध्नि स्थितां रम्यां नानासुखप्रदायिनीम् ॥ विश्वधात्रीं महाभागां विश्वस्य जननीं पराम् ॥ १ ॥ यज्ञभागं प्रतीक्षस्व सुखार्थं प्रणमाम्यहम् ॥ तवोपरि करिष्यामि मण्डपं सुमनोहरम् ॥ ॥ २ ॥ क्षन्तव्यं च त्वया देवि सानुकूला मखे भव ॥ निर्विघ्नं मम कर्मेदं यथा स्यात्त्वं तथा कुरु ॥ ३ ॥ इति संप्रार्थ्य स्वाभीष्टां भूमिं स्वीकृत्य ततः पञ्चगव्यं यथाविधि ताम्रपात्रे कृत्वा प्रणवेन दशवारमनुमन्त्र्य तेन हरितैः कुशैर्भूमिं प्रोक्षयेत् । तत्र मन्त्राः ।

ॐ इरावती धेनुमतीहिभूतꣳसूयवसिनीमनवेदशस्या ॥ व्यस्कभ्नारोदसीविष्णवेतेदाधर्त्थपृथिवीमभितोमयूखैःस्वाहा ॥ १ ॥ ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ॥ समूढमस्यपाꣳसुरे स्वाहा ॥ २ ॥ ॐ मा नस्तोके तनये मा नऽआयुषि मा नो गोषु मा नो ऽअश्वेषुरीरिषः ॥ मानो वीरान्रुद्र भामिनो वधीर्हविष्मन्तःसदमित्वाहवामहे ॥ ३ ॥ ॐ शन्नो मित्रꣳ शं वरुणꣳ शन्नो भवत्त्वर्य्यमा ॥ शन्न ऽइंद्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः ॥ ४ ॥ ॐ शन्न ऽइन्द्राग्नी भवतामवोभिःशन्न ऽइन्द्रावरुणारातहव्या ॥ शन्न ऽइन्द्रा पूषणा वाजसातौ शमिन्द्रा सोमासुविताय शंय्योः ॥ ५ ॥ एतान्मन्त्रान्पठित्वा ॥ ॐ जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ॥ सुब्रह्मण्य नमस्तेऽस्तु महापुरुष पूर्वज ॥ १ ॥ ॐ नृसिंह उग्ररूप ज्वल ज्वल प्रज्वल प्रज्वल स्वाहा । इति पठित्वा । ॐ देवस्यं त्वा सवितुःप्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥ सरस्वत्यै वाचो यन्तुर्य्यन्त्रेणाग्नेः साम्राज्येनाभिषिंचामि ॥ १ ॥ एतैर्मन्त्रैरि रावतीत्यारभ्याभिषिंचामीत्यन्तैः पृथिवीं प्रोक्ष्य । ततः श्वेतसर्षपान् गृहीत्वा ईशानाभिमुखः सर्वत्र विकिरेत् । तत्र मन्त्राः । ॐ भूतानि राक्षसा वापि यत्र तिष्ठन्ति केचन ॥ ते सर्वेऽप्यपसर्पन्तु विष्णुयागं करोम्यहम् ॥ १ ॥ भूतप्रेतपिशाचाद्या ह्यपक्रामन्तु राक्षसाः ॥ स्थानादस्माद्व्रजन्त्वन्यत्स्वीकरोमि भुवं त्विमाम् ॥ २ ॥ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ॥ ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ ३ ॥ इति सर्वत्र विकीर्य । पञ्चगव्येन प्रोक्ष्य । ततस्ताम्रपात्रे गन्धदूर्वाफलपुष्पयवयुतं जलं गृहीत्वा शुक्लद्विवासाः शुचिर्भूत्वा अर्घ्यहस्त उदङ्मुखो जानुभ्यामवनीं गत्वा कृताञ्जलिपुटो भूम्यै अर्घ्यं दद्यात् । तत्र मन्त्रः—वसुधे पूजितासि त्वं विष्णुना शंकरेण च ॥ पार्वत्या चैव गायत्र्या स्कन्दवैश्रवणादिभिः ॥ १ ॥ मण्डपं कारयाम्यद्य त्वदूर्ध्वे शुभलक्षणम् ॥ गृहाणार्घ्यं मया दत्तं प्रसन्ना सर्वदा भव ॥ २ ॥ एवमर्घ्यं दत्त्वा । ॐस्योनापृथिवीनोभवानृक्षरा निवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ इति मन्त्रेण प्रार्थयेत् । एवं

भूशुद्धिं भूतशुद्धिं च विधाय। तत्र भूमौ निर्विघ्नतार्थं प्रथमं भद्रपीठोपरि सामान्यतो वास्तुं संपूज्य मण्डपार्थं प्रथमं प्राचीसाधनं कृत्वा मृदैव समानरूपां भूमिं च कृत्वा गणपतिं श्रीगुरुं च मानसोपचारैर्यजन् कुलदेवतां ध्यात्वा नमस्कृत्य प्रार्थयेत् । अहं मण्डपादि कर्तुमुद्यतस्तस्य निर्विघ्नमस्तु तथा सिद्धिरस्त्विति प्रार्थ्य तिष्ठेत् ( अथ प्राचीसाधनप्रकारः प्राचीनपद्धतौ ) तत्रादौ त्रयोदशाङ्गुलं कर्कटकं प्रसार्य्य भ्रामयेत्। तेन भ्रमणेन षड्विंशांगुला २६ त्मकं मण्डलं प्राचीसाधनार्थमुत्पन्नम् ॥ पुनस्तस्मिन्नेव मण्डले नवाङ्गुलं कर्कटकं प्रसार्य्य भ्रामयेत् ॥ तेनाष्टा १८ दशाङ्गुलात्मकं मण्डलं जातम् ॥ शङ्कुसमानकरणार्थमेवं मण्डलद्वयं संपाद्य मण्डलमध्ये द्वादशा १२ ङ्गुलं शंकुं ( मूलदेशे स्थूलः धृतः सन् यथा न पताति तथा स्थूलः सूक्ष्मोऽग्रे सूचीसदृशः एवंविधं शंकुं ) वृत्तमध्ये संस्थाप्य पश्चात् पञ्चदशा १५ ङ्गुलविस्तारं शङ्कुचतुष्टयं ४ गृहीत्वा अष्टादशाङ्गुलात्मके मध्यवृत्ते तेषां शंकूनां मूलं निधाय । अग्रं तेषां शङ्कोरग्रे :निधाय चतुर्दिक्षु एवं शङ्कुसमं कृत्वा शङ्कुचतुष्टयं त्या ज्यम् ॥ मध्यादष्टादशाङ्गुलवृत्तं मार्जनं कार्य्यम् ॥ पश्चात्तत्र स्थाने सावधानतया स्थित्वा प्रातःकाले शङ्कोश्छाया षड्विंशाङ्गुलात्मके मण्डले यत्र विशति तत्र चिह्नरेखया कार्य्या ॥ तृतीयप्रहरात्किंचिदूर्ध्वं यदा शङ्कोरग्रच्छाया रेखातो यत्र निःसरति तत्र चिह्नं कार्य्यम् ॥ तयोश्चिह्नयोरुपरि सूत्रं देयं प्राची सिद्धा जाता ॥ ( अतः परं दक्षिणोत्तरसाधनम् ) षड्विंशा २६ ङ्गुलात्मके मण्डले वृत्ते यत्र स्थाने कर्कटकं स्थापयित्वा वृत्तार्थं भ्रामितं न भवति तस्मिंश्चिह्ने चतुरङ्गुलं ४ कर्कटकं प्रसार्य्य पूर्वसूत्रे चिह्नं कार्य्यम् ॥ तथैव पश्चिमतश्चतुरङ्गुलं त्यक्त्वा चिह्नं कार्य्यम् । उभयोरन्तरमष्टाङ्गुलमितं जातम् ॥ पुनरष्टाङ्गुलं कर्कटकं प्रसार्य्य पश्चिमचिह्ने कर्कटकं धृत्वा पूर्वचिह्नाद्भ्रामयेत् ॥ यथा तथाऽर्द्धचन्द्राकारा भवति ॥ उभयोर्वृत्तार्द्धयोगेन मत्स्ययुग्मं दक्षिणोत्तरं भवति ॥ इति प्राचीसाधनप्रकारः। ( प्रतिदिनजं प्राचीसाधनं पूर्वोक्तमिदं त्रिंशद्धटी ३९ मितदिनमानदिने ज्ञेयम् ) एवं भूम्यादिपूजनविधिं विधाय ब्राह्मणेभ्यो दक्षिणां दत्त्वा शिल्पिवर्गं च तोषयि

त्वा तत्र मण्डपं कुर्यात् । तस्य परिमाणम् । उत्तमोऽष्टादश १८ षोडश १६ हस्तात्मकः ॥ मध्यमश्चतुर्दश १४ द्वादश १२ हस्तात्मकः ॥ कनिष्ठो दश १० हस्तात्मकः । कनिष्ठातकनिष्ठोऽष्ट ८ हस्तात्मको यथावकाशं वा मण्डपं हस्तोच्चं द्वादशाङ्गुलोच्चं वा अथवोच्छ्रायरहितं भूमिसमं कुर्यात् ॥ तस्य मण्डपस्य भागत्रयं कार्यं मध्यभागे वेदीं चतुर्हस्तां ४ चतुरस्रां निजचतुर्थांशेन पञ्चमांशेनोच्चां वा विद ध्यात् । एवं मध्यवेदिं कृत्वा तस्याः समं द्वाविंशाङ्गुलान्तरे एकहस्तात्मकचतुरस्रकुण्डकरणार्थं भित्तिकरणं तदर्थं सूत्रं देयं तस्य व्यवहारः पूर्वस्यां दिशि मध्यवेद्या द्वादशाङ्गुलं १२ प्राचीसूत्रं त्यक्त्वा तत्र चिह्नं कार्यम् ॥ तत्रैव मध्यचिह्ने कर्कटकं द्वादशाङ्गुलं १२ प्रसार्य्य प्राचीसूत्रे चिह्नं कार्यम् ॥ एवं कृते हस्तमात्रं सूत्रं जातं कुण्डार्थं पूर्वापरम् ॥ अतः परं दक्षिणोत्तरमुच्यते ॥ यत्कुण्डमध्यार्थचिह्नं कृतं भवति तस्माच्चिह्नादुपरि चतुरङ्गुलं त्यक्त्वा प्राचीसूत्रे कुण्डमध्ये चिह्नं कार्य्यम् । पूर्वे तथा मध्यचिह्नात्पश्चिमे चतुरङ्गुलं त्यक्त्वा चिह्नं कार्य्यम् । प्राचीसूत्रे त्वेवमेव ॥ एवं कृते उभयोर्वृत्तयोगे मत्स्ययुग्मं भवति तयोरुपरि सूत्रं देयम् । इति कृते कुण्डे दक्षिणोत्तरं सिद्धं जातम् । पुनरपि द्वादशाङ्गुलं कर्कटकं प्रसार्य्य कुण्डमध्यचिह्ने धृत्वा दक्षिणे चिह्नं कार्य्यम् ॥ तथैवोत्तरे चिह्नं कार्य्यम् । ततः परं पूर्वचिह्ने द्वादशाङ्गुलं कर्कटकं संस्थाप्य मध्यचिह्नावधि अग्निकोणादारभ्य ईशकोणपर्य्यन्तं भ्रामयेत् ॥ अर्द्धचन्द्राकारो भवति । तथामुना प्रकारेण दक्षिणाचिह्ने संस्थाप्य । अग्नि कोणान्नैर्ऋतपर्य्यन्तं तथा एवमेव पश्चिमचिह्ने कर्कटकं संस्थाप्य नैर्ऋतकोणाद्वायुकोणपर्य्यन्तं भ्रामयेत् ॥ ततः परमुत्तरचिह्ने कर्कटकं संस्थाप्य वायुकोणपर्य्यन्तं भ्रामयेत् ॥ एवं चतुर्भिरर्द्धचन्द्रैश्चतुर्दिक्षु विदिक्षु च चत्वारो मत्स्या भवन्ति । तेषु चतुर्षु मत्स्येषु चत्वारि सूत्राणि देयानि । सूत्रेषु दत्तेषु सत्सु चतुरस्रं कुण्डं भवति । तेषु सूत्रेष्विष्टिकाभिर्भित्तिर्विधेया हस्तमात्रा समानरूपा इति पूर्वे चतुरस्रं कुण्डं जातम् ॥ १ ॥ अथ दक्षिणे अर्द्धचन्द्राकृति कुण्डं भवति । तदुच्यते । यद्दक्षिणोत्तरं सूत्रं प्रवर्त्तते तदुपरि मध्यवेदित एव

विंशाङ्गुलं २० त्यक्त्वा यत्पूर्वापरं तत्र प्रसारितं भवति तयोरुभयोर्योगे यत्र मत्स्योत्पत्तिर्जाता तत्र मत्स्ये चतुर्भिर्यूकाभिरधिकम् । एकोनविंशाङ्गुलं १९ यूका ४ कर्कटकं प्रसार्य्योपरि संस्थाप्य सूत्रावधि भ्रामयेत् ॥ शशिदलकुण्डं भवति ॥ तस्माज्ज्यासूत्रं पूर्वापरे सूत्रे पूर्वापरमेवं तदेव जातमङ्गुलं ३८ यवः १ एतावत्प्रमाणं ज्यासूत्रं ( पञ्चकुण्डी नवकुण्डी च तत्पूर्वापरं ज्यासूत्रमेककुण्डी चेद्दक्षिणोत्तरं ज्यासूत्रमिति विवेकः ) इति दक्षिणे अर्द्धचन्द्राकृति कुण्डम् ॥ २ ॥ अतः परं पश्चिमे वृत्तकुण्डम् । तत्प्रकार उच्यते । यत्र प्राचीसूत्रं पश्चिमे तस्योपरि मध्यवेदितो दक्षिणोत्तरं सूत्रं प्रसारितं भवति । तयोर्योगे मत्स्योत्पत्तिर्जाता तत्र मत्स्ये चतुर्यवा ४ धिकं त्रयोदशाङ्गुलं १३ यव ४ कर्कटकं प्रसार्य्य मध्ये धृत्वा कुण्डस्य मध्यार्थं चिह्नं प्राचीसूत्रे विधेयम् । पश्चात्कुण्डमध्यचिह्नोपरि तावन्मितं कर्कटकं धृत्वा भ्रामयेत् । तने भ्रमणेन वृत्तकुण्डं भवति । संपूर्णवृत्तविस्तारः सप्तविंशत्यङ्गुलो २७ भवति ॥ इति पाश्चिमे वृत्तकुण्डम् ॥ ३ ॥ अथ उत्तरे पद्मकुण्डम् । तत्प्रकार उच्यते–यद्दक्षिणोत्तरं सूत्रं प्रवर्त्तते तदुपरि मध्यवेदितो द्वाविंशत्यङ्गुला २२ त्परं यत्पूर्वापरायितं सूत्रं तस्य योगे यो मत्स्यस्तास्मिन्मत्स्ये कर्कटकम् अङ्गुल १४ यव ६ यूका २ लिक्षा ३ बालाग्रं १ रथरेणु ४ त्रसरेणु ७ कर्कटकं प्रसार्य्य दक्षिणोत्तरसूत्रे मत्स्ये धृत्वा दक्षिणोत्तरसूत्रे कुण्डमध्यार्थं चिह्नं कार्य्यम् । पुनस्तत्र मध्याचिह्ने कर्कटकं स्थापयित्वा भ्रामयेत् । तेन भ्रमणेन संपूर्णवृत्तविस्तरांगुल २८ यव ५ यूका ४ लिक्षा ६ बालाग्रं ३ रथरेणु १ त्रसरेणु ६ जातः । एतस्मिन् वृत्ते वृत्तचतुष्टयं विधेयम् । तेषां प्रकार उच्यते । कर्कटकमङ्गुलत्रयं ३ प्रसार्य्य कुण्डमध्ये चिह्ने संस्थाप्य भ्रामयेम् । तेन भ्रामणेन प्रथमं षडङ्गुलकर्णिकाख्यं वृत्तं जातम् । मध्ये तदुपरि षडङ्गुलं कर्कटकं प्रसार्य्य मध्यचिह्ने धृत्वा भ्रामयेत् ॥ तद्द्वितीये केसराख्यं वृत्तं भवति तदुपरि नवांगुलं कर्कटकं प्रसार्य्य मध्यचिह्नाद्भ्रामयेत् । तेन तृतीयं वृत्तं दलमध्यभूसंज्ञितं जातम् । ततो द्वादशांगुलं कर्कटकं प्रसार्य्य मध्यचिह्नाद्भ्रामयेत् । तेन चतुर्थं वृत्तं दलाग्रभू

मिसंज्ञितं जातम् । तदुपरि पञ्चमं पूर्वमेव कृतं भवति तस्य पञ्चमवृत्तस्य भूपरिमाणमुच्यते । कियती उर्वरी सा तस्याः प्रमाणाङ्गुलानि ३ यव ६ यूका ८ लिक्षाबालाग्रं १ रथरेणु ४ त्रसरेणु ७ ॥ अथ सर्वेषां पञ्चमण्डलानां संपूर्णता उच्यते । प्रथमवृत्तस्य षडङ्गुलो विस्तारः १ द्वितीयस्य द्वादशाङ्गुलो विस्तारः २ एवं स्वकर्कटकान्मण्डलानां द्विगुणतो विस्तारः । पञ्चममण्डलस्य सम्पूर्णविस्ताराङ्गुल २९ यव ५ यूका ४ लिक्षा ६ बालाग्र ३ रथरेणु १ त्रसरेणु ६ एतत्पञ्चमं मण्डलं दलाग्रविस्तारतुल्योच्चतां कर्णिकां कृत्वा कुण्डमध्ये स्थापयेत् ॥ दृढतया न चलति यथा ॥ इदं कुण्डमष्टदलं वा चतुर्दलं भवति ॥ इति पद्मकुण्डम् ॥ ४ ॥ अतः परं पञ्चमाचार्यकुण्डं चतुरस्रं तत्प्राचीसूत्रादारभ्य ईशकोणपर्यन्तं सूत्रं प्रमाणीकृत्य तत्सूत्रस्यार्द्धभागं कृत्वा तस्मिन्नर्द्धभागे प्रथमं चतुरस्रकुण्डरीत्या तेन समानसूत्रेण चतुरस्रं कुण्डं कार्यम् ॥ इति पञ्चकुण्डीकर्तव्यता ॥ इति एकहस्तात्मकानि कुण्डानि ॥ एकाङ्गुलः कण्ठः । तं त्यक्त्वा मेखलात्रितयं ३ तासां प्रमाणम् । प्रथमं कुण्डमुखे । सा नवाङ्गुलोच्चा ९ चतुरङ्गुल ४ विस्तृता । ततो द्वितीया षडङ्गुलो ६ च्चा त्र्यङ्गुल ३ विस्तृता । या तृतीया भूमिलग्ना सा त्र्य ३ ङ्गुलोच्चा द्य २ ङ्गुलविस्तृता । एवं मेखला विधेया । तासामुपरि पश्चिमे योनिर्विधेया सा दशाङ्गुलविस्तीर्णा । अष्टाङ्गुलायता ८ । अथवा द्वादशाङ्गुल १२ विस्तृता षडङ्गुलायता अङ्गुलद्वयोच्चा २ तत्र विवेकः एकाङ्गुलोच्चा एकाङ्गुला परिधिः एवं मिलित्वा द्यङ्गुलोच्चा वृत्तद्वयवती २ मध्ये बिलवती । अग्रतो निम्ना पृष्ठतश्चोन्नता नालं तस्यां भूमिलग्नं विधेयम् । पूर्वकुण्डदक्षिणकुण्डयोर्योनिरुत्तराग्रा पश्चिमोत्तरयोस्तु पूर्वाग्रा इति योनिव्यवहारः ॥ अथ नाभिः । सर्वेषां कुण्डानां मध्ये नाभिः पद्माकारा वा कुण्डसदृशी हस्तमात्रके कुण्डे चतुरङ्गुलविस्तारा अङ्गुलद्वयोच्चा भवति ॥ इति कुण्डरचना ॥ तत उत्तरवेद्याश्चतुष्कोणेष्वीशानकोणे ग्रहपीठं चतुस्त्रिंशा ३४ ङ्गुलविस्तारं षोडशाङ्गुलोच्च १६ मग्निकोणे मातृकापीठं हस्तमात्रं द्वाद

शाङ्गुलोच्चं नैर्ऋतकोणे वास्तुपीठं हस्तमात्रं द्वादशाङ्गुलोच्चं वायुकोणे योगिनीक्षेत्रपालपीठं हस्तमात्रं द्वादशाङ्गुलोच्चं च विधेयम् ॥ मातृकापीठे घृतधारा तदर्थं पूर्वभागे शिलारोपणं शिलाभावे हीष्टिकाभिर्भित्तिर्विधेया । इति वेदिप्रकारः ॥ अथ मण्डपरचनाप्रकारः । ( तुलादानादिपद्धतौ ) तत्र सर्वेषु मण्डपेषु प्रथमं प्राक्पश्चिमायतैर्दक्षिणोत्तरायतैश्चतुर्भिश्चतुर्भिः समान्तरालैः सूत्रैस्तुल्यदीर्घायामा नव खण्डा विधेयाः । तेषां च मध्यमखण्डे हस्तमात्रोन्नता अपक्वेष्टकादिभिर्वेदिर्विधेया ॥ सर्वेष्वपि खण्डेषु सूत्रद्वयसंलग्नतावशेन चतुष्कोणतामापन्नेषु षोडशसु स्थानेषु षोडशस्तम्भास्तथा निवेश्याः । यथा तदारोपणेन सर्व एव खण्डाश्चतुःस्तम्भवत्त्वेन प्रतीयेरन् । तथा च वेदिकोणचतुष्टये चत्वारः । बाह्यपङ्क्तिषु च कोणस्थानेषु द्वादशस्तम्भा इत्येवं षोडशस्तम्भनिवेशनम् ॥ वेदिकोणस्थस्तम्भाश्चाष्टहस्तप्रमाणा अष्टादशादिहस्तमण्डपे तु मण्डपार्द्धप्रमाणाः कार्याः । अन्ये तु द्वादशस्तम्भाः सर्वत्र पञ्चहस्तप्रमाणाः । षोडशानामपि तेषां स्वस्वपञ्चमांशेन भूम्यन्तःप्रविष्टमूलतया निधानं शिरसि चूडा च कार्या ॥ तेषां चूडासु च उभयत एकैकरन्ध्रयुक्तानि वलिकाख्यानि द्वात्रिंशत्काष्ठानि देयानि यथा चैकैकया वलिकया प्रान्तयोः स्थितरन्ध्रद्वयेन द्वयोर्द्वयोः स्तम्भयोरुपरि चूडायां संयोजनं भवति तथा ग्रथ्नीयात् ॥ एवं च प्राच्यादिषु दिक्षु प्रत्येकं तिसृभिस्तिसृभिर्वलिकाभिः स्तम्भचतुष्टयग्रन्थनेन द्वादशसु स्तम्भेषु द्वादश वलिका देयाः । तथा वेदिकोणस्थस्तम्भाभ्यां चतसृषु दिक्षु तथैव ग्रन्थने चतस्र इत्येवं षोडशवलिकाः स्वस्वखण्डप्रमाणा एव देयास्ततो वेदिकोणस्थस्तम्भस्य प्रत्येकं तत्समसूत्रस्थबाह्यपङ्क्तिस्थस्तम्भाभ्यां पूर्ववच्चूडयोर्योजनाय द्वे द्वे वलिके तथा देये यथा वेदिवह्निकोणस्थस्तम्भस्य बाह्यवह्निकोणोत्तरस्थस्तम्भेन बाह्यवह्निकोणपश्चिमस्तम्भेन च योजनं भवति ॥ एवमन्येषामपि बोध्यम् ॥ ततो वेदिकोणस्थस्तम्भैर्बाह्यकोणस्थस्तम्भानां योजनार्थं कर्णाकाराश्चतस्रो वलिकास्तत्तच्चूडासु देयाः ॥ ततो वेदिकोणस्थस्तम्भानामुपरि शिखराकारतासंपादिकाश्चतस्रो वलिका

देयाः । इत्येवं षोडशवलिका यावत्प्रमाणेनोभयोर्योजनं शिखरता च भवेत्तावन्मिताः कार्य्याः । ततो मण्डपस्य प्राच्यादिषु दिक्षु द्वयो द्वयोः स्तम्भयोर्मध्ये बाह्यपङ्क्तिस्थमध्यमखण्डमध्यभागेषु चत्वारि द्वाराणि कार्याणि । तानि चाल्पे मण्डपे द्विहस्तकरविस्तृतानि ॥ मध्यमे चतुरङ्गुलाधिकद्विहस्तविस्तृतानि । उत्तमेऽष्टाङ्गुलाधिकद्विहस्तविस्तृतानि चतुर्हस्तदीर्घाभ्यां द्वाभ्यां स्तम्भाभ्यामुपरिस्थया पूर्वोक्त विस्तारविशेषयुक्तयैकैकया वलिकया प्रत्येकं युक्तानि कार्याणि ॥ स्तम्भादिकं सर्वमेव सारदारुप्रभवं कार्यम् । प्रतिद्वारं द्वौद्वौ कलशौ स्थापयेत् ॥ कोणेषु चैकैकमिति विशेषः ॥ ततो नारिकेलदलपल्लवकटवंशादिभिर्द्वारवर्जं सर्वत्र मण्डपमाच्छादयेत् । दर्पणचा मरवस्त्रादिभिश्च षोडशस्तम्भान्भूषयेत् । द्वारदेशे च कदलीस्तम्भादिशोभां विदध्यात् ॥ ततो मण्डपबाह्ये द्वारसंमुखे हस्तान्तरित स्थाने तोरणाख्यानि बाह्यद्वाराणि कुर्य्यात् ॥ तानि चाल्पे मण्डपे पञ्चकरोन्नतानि ॥ मध्यमे षट्करोन्नतानि । उत्तमे सप्तकरोन्नतानि स्वस्वप्रमाणार्द्धविस्तृतानि कार्य्याणि ॥ सर्वाणि च तत्तत्प्रमाणयोः स्तम्भयोरुपरिस्थया स्वस्वार्द्धप्रमाणयैकैकया वलिकया युक्तानि कार्याणि ॥ तत्रायं विशेषः । प्राच्यामश्वत्थजम् । याम्यामुदुम्बरजम् । प्रतीच्यां प्लक्षजम् । उदीच्यां न्यग्रोधजम् । वलिकोपरि फलककाष्ठं देयमिति तोरणानि च तत्तत्काष्ठजातानि सारदारुभवानि वेति संप्रदायः । ( शैवयागे तु ) चतुर्षु फलकेषु शूलाकृतयः कीला देयाः ( ते चाल्पे ) मण्डपे नवाङ्गुलदीर्घाः ( मध्यमे ) एकादशाङ्गुलदीर्घाः ( उत्तमे ) त्रयोदशाङ्गुलदीर्घाः स्वस्वतुरीयांशवि स्ताराः फलकजातीयकाष्ठविशेषजाः ( अल्पादिभेदेन ) द्वित्रिचतुरङ्गुलप्रमाणेन फलकमध्यभागनिविष्टमूलेनाधःस्थकीलकान्तरेणो पलक्षिताः कार्य्याः ॥ ( वैष्णवे मण्डपे ) अल्पादिभेदेन दशद्वादशचतुर्दशाङ्गुलदीर्घाः स्वस्वतुरीयांशविस्तारा निवेशनार्थं यथाक्रम मधोभागे द्वित्रिचतुरङ्गुलप्रमाणकीलकान्तरेण सहिताः प्राच्यादिषु प्रादक्षिण्येन शङ्खचक्रगदापद्माकृतयः कीलाः स्थाप्याः ॥ ततः पञ्चवर्ण

वितानविचित्रवस्त्रैः सफलकदलीस्तम्भैः क्रमुकनारिकेलादिफलैर्विविधभोज्यैर्दर्पणचामरादिभिश्च मण्डपं भूषयेत् ॥ ततो द्विहस्तनिखातस्य दशहस्तमितवंशस्योपरिस्थितानि पञ्चहस्तदीर्घाणि द्विहस्तविस्तृतानि चतुष्कोणाकाराणि गैरिकादिभिर्लिखितस्वस्वदिक्पालवाहनानि प्राच्यादिक्रमेणाष्टौ पीतादिवर्णान्पटनिर्म्मितध्वजांश्च दद्यात् । यथा प्राच्यां पीतवर्णे ध्वजे स्वदिक्पतिवाहनमैरावतम् आग्नेय्यां रक्तवर्णे छागं याम्यायां कृष्णवर्णे महिषं नैर्ऋत्यां नीलवर्णे सिंहं वारुण्यां श्वेतवर्णे मत्स्यं वायव्यां धूम्रवर्णे हरिणं सौम्यायां श्वेतवर्णे अश्वम् ऐशान्यां श्वेतवर्णे वृषभं क्रमाल्लिखित्वा दद्यात् ॥ ततः पूर्वोक्तदिक्पालध्वजवर्णानुरूपा अष्टौ पताका देयास्ताश्च गैरिकादिभिर्लिखितवज्राद्यस्त्रयुक्ताः। सप्तहस्तदीर्घा एकहस्ताविस्तारास्त्रिकोणाकारा वस्त्रनिर्मिता द्विहस्तनिखातस्य दशहस्तवंशस्योपरि धृताः कार्य्याः। यथा-प्राच्यां पीतायां वज्रम् १ आग्नेय्यां रक्तायां शक्तिं २ याम्यायां कृष्णायां दण्डम् ३ नैर्ऋत्यां नीलायां खड्गं ४ वारुण्यां श्वेतायां पाशं ५ वायव्यां धूम्रायामङ्कुशं ६ सौम्यायां श्वेतायां गदाम् ७ ऐशान्यां श्वेतायां त्रिशूलं ८ लिखित्वा प्रान्ते किङ्किणीचामरादिभिर्भूषयेत् । नवमी च पताका पूर्वैशानयोर्मध्ये आचार्यकुण्डसमीपे श्वेता तथैव देया ॥ ततो मण्डपस्यैशानकोणे हस्तमात्रदीर्घायामा वितस्तिमात्रोच्चा द्व्यङ्गुलोच्चवप्रवती ग्रहवेदिः कार्य्या ॥ ततो नवकुण्डीपक्षे प्राच्यादिषु दिक्षु विदिक्षु चाष्टावैशान्यामेकमाचार्य्यकुण्डमिति नवकुण्डानि कुर्य्यात् । ( तदशक्तौ ) पञ्चकुण्डीपक्षे चतुर्दिक्षु चत्वार्यैशान्यामेकमिति पञ्च ॥ ( तत्राप्यशक्तौ ) एककुण्डमात्रं कार्य्यम् । तच्च चतुरस्रं वा वृत्तं पश्चिमे वोत्तरे विधेयम् । कुण्डनिर्म्माणस्यातीवदुष्करतया न्यूनाधिकतायां दोषश्रवणाच्च कुण्डस्थाने स्थण्डिलान्येवाऽधुना कुर्यात् । कुण्डानि स्थण्डिलानि च मध्यमवेद्याः सपादकरान्तरितदेशेषु प्राच्यादिषु कारयेत् । आचार्ये तु ग्रहवेदितः सपादकरान्तरदेशे कार्यमिति विवेकः । तानि च स्वल्पे होमे हस्तमात्रदीर्घविस्ताराणि कार्य्याणि । षडस्रादिभेदस्य दुष्करतया

चतुरस्राण्येव सर्वाणि कुर्यात् । स्थण्डिलकरणपक्षे पीतवर्णमृदा सितवालुकाभिरेकाङ्गुलोच्चता विधेया । एवं तोरणपताकादिसहितं चतुरस्रं दृढं निर्वातं मण्डपं विधाय तदुत्तरे चतुर्द्वारयुतं स्नपनमण्डपं द्वितीयं च कृत्वा तत्र वेदिकात्रयं कुर्यात् । एतत्सर्वं मण्डपाद्यधिवासदिनात्प्राग्विधेयम् । अलं विस्तरभयान्न लिख्यते ॥ इति मण्डपादिकरणम् । अथाधिवासनदिनपूर्वदिने कृतहविष्यभोजनोऽधिवासदिने जलयात्रां कुर्यात् । ब्राह्मे मुहूर्ते उत्थाय प्रातःस्मरणं कृत्वा उषसि दन्तधावनपूर्वकं स्नात्वा सन्ध्यादिनित्यक्रियां प्रातः संपाद्य शरीरशुद्ध्यर्थं प्रायश्चित्तं कुर्यात् । तद्यथा तत्र तावत् नदीतडागादिकं गत्वा सुप्रक्षालिते तत्तीरे स्नानोपकरणानि संस्थाप्य ततः पाणिपादं प्रक्षाल्य नाभिमात्रं जलं गत्वा कुशपवित्रहस्तो बद्धशिख आचामेत । ततो देशकालौ संकीर्त्य मम समस्तपापक्षयपूर्वकविष्णुप्रीत्यर्थममुकदेवप्रतिष्ठाकर्माधिकारार्थं शरीरशुद्ध्यर्थं च अमुकप्रायश्चित्ताङ्गभूतान्यादौ भस्मादिभिरष्टौ स्नानानि करिष्ये । इति संकल्प्य वामहस्ते दक्षिणहस्तेन यज्ञियभस्म गृहीत्वा पश्चादुदकमिश्रणानन्तरं दक्षिणहस्तेन संमर्द्य अभिमन्त्रयेत् । तत्र मन्त्राः । ॐ अग्निरिति भस्म । ॐ वायुरिति भस्म । ॐ जलमिति भस्म । ॐ स्थलमिति भस्म । ॐ व्योमेति भस्म । ॐ सर्वꣳ ह वा इदं भस्म । ॐ मन एतानि चक्षूंषि भस्मानि इत्यभिमन्त्र्य ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् । ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मेऽअस्तु सदा शिवोम् ॥ १ ॥ ॐ ईशानाय नमः इति शिरसि मर्दयेत् । ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ २ ॥ ॐ तत्पुरुषाय नम इति मुखे० । ॐ अघोरेभ्योऽथ घोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यः शर्वसर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ ३ ॥ ॐ अघोराय नमः । इति हृदये० । ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमः ॥ ४ ॥ ॐ वामदेवाय नमः इति गुह्ये० । ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः भवेभवे नातिभवे भवस्व मां भवोद्भवाय नमः ॥ ५ ॥ ॐसद्योजाताय नमः । इति पादयोर्मर्दयेत् ॥ ॐ प्रसद्य भस्मना

योनिमुपश्च पृथिवीमग्ने ॥ सर्ठसृज्य मातृभिष्ट्वं ज्योतिष्मान पुनरासदः ॥ ६ ॥ इति मन्त्रेण प्रणवेन दिक्षु दक्षिणभागं तीर्थे चोत्तरभागं प्रक्षिप्य शेषम् । ॐ अग्रमग्रं चरन्तीनामोषधीनां रसं वने ॥ तासां वृषभपत्नीनां पवित्रं कायशोधनम् ॥ १ ॥ यन्मे रोगांश्च शोकांश्च पापं मे हर गोमय ॥ १ ॥ ॐ मा नस्तोके तनये मानऽआयुषि मा नो गोषु मा नोऽअश्वेषु रीरिषः ॥ मा नो वीरान्रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ २ ॥ इत्यभिमन्त्र्य सूर्याय दर्शयित्वा ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियं म् ॥ १ ॥ इति मन्त्रेण दक्षिणहस्तगृहीतेन गोमयेन शिरसो नाभ्यन्तं वामहस्तगृहीतेन मन्त्रावृत्त्या नाभितः पादपर्यन्तं विलेपन मिति सर्वाङ्गमालिप्य स्नात्वा द्विराचामेत् ॥ अथ मृत्तिकास्नानम् ॥ शुद्धतीर्थमृत्तिकामादाय वामहस्ते कृत्वा । ॐ अश्वक्रान्ते रथ क्रान्ते विष्णुक्रान्ते वसुन्धरे ॥ मृत्तिके हर मे पापं यन्मया कायसंचितम् ॥ १ ॥ उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥ मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ॥ २ ॥ त्वया हतेन पापेन सर्वपापैः प्रमुच्यते । इत्यभिमन्त्र्य ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ॥ समूढमस्यपाᳪंसुरे स्वाहा ॥ १ ॥ इति मन्त्रेण शिरःप्रभृत्यङ्गानि विलिम्पेत् । ततो द्विराचम्य शुद्धोदकस्नानं कुर्य्यात् । ॐ आपो हि ष्ठामयो भुवस्ता नऽऊर्ज्जे दधातन ॥ महेरणाय चक्षसे ॥ १ ॥ यो वं ÷ शिवतमो रसस्तस्य भाजय तेह नं ÷ ॥ उशतीरिव मातरं ÷ ॥ २ ॥ तस्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ ॥ आपो जनयथा च न ÷ ॥ ३ ॥ इति स्नात्वा आचम्य पञ्चगव्यस्नानं कुर्यात् । तत्र ॐ तत्सवितु० इति गायत्र्या गोमूत्रस्नानम् ॥ १ ॥ ( पुनः सर्वत्र शुद्धोदकस्नानम् ) गन्धद्वा रेति गोमूत्रस्नानम् ॥ २ ॥ आप्यायस्वेति पयःस्नानम् ॥ ॐ आप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम् ॥ भवा वाजस्य सङ्गथे ॥ ३ ॥ दधिक्रा व्णोति दधिस्नानम् ॥ ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्य वाजिनः ॥ सुरभि नोमुखाकरत्प्रणऽआयूᳪंषि तारिषत् ॥ ४ ॥ तेजोऽसीत्याज्य

स्नानम् । ॐ तेजोऽसि शुक्रमस्यमृतमसि धामनामासि प्रियन्देवानामनाधृष्टन्देवयजनमसि ॥ ५ ॥ देवस्यत्वेति कुशोदकस्नानम् । ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ ६ ॥ एवं पञ्चगव्यस्नानं कृत्वा शुद्धोदकेन स्नात्वा । ततो मार्ज्जनम् । ॐ इमम्मे वरुण श्रुधी हवमद्या च मृडय त्वामवस्युराचके ॥ १ ॥ ॐ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणेह बोद्ध्युरुशंसमानऽआयुः प्रमोषीः ॥ २ ॥ ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान् देवस्य हेडोऽअवयासिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषांसि प्रमुमुग्ध्यस्मत् ॥ ३ ॥ ॐ सत्वन्नोऽअग्नेवमो भवोतीनेदिष्ठोऽअस्या उषसो व्युष्टौ ॥ अवयक्ष्व नो वरुणंरराणो वीहि मृडीकंसुहवो नऽएधि ॥ ४ ॥ मापोमौषधीर्हिंसीर्धाम्नो धाम्नो राजंस्ततो वरुण नो मुञ्च ॥ ५ ॥ ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमंश्रथाय ॥ अथावयमादित्यव्रते तवानागसोऽअदितये स्याम ॥ ६ ॥ ॐ मुञ्चन्तु मा शपथ्यादथोवरुण्यादुत ॥ अथो यमस्य पड्वीशात्सर्वस्माद्देव किल्बिषात् ॥ ७ ॥ ॐ अवभृथनिचुम्पुणनिचेरुरसिनिचुम्पुणः ॥ अवदेवैर्देवकृतमेनोयासिषमवमर्त्यैर्मर्त्यकृतंपुरुराव्णोदेव रिषस्पाहि ॥ ८ ॥ इत्यष्टभिर्मन्त्रैर्हस्तेन प्रत्येकं शिरसि जलं प्रक्षिपेत् ॥ ततो वहति जले प्रवाहाभिमुखः स्थिरे सूर्याभिमुखो मौनी मज्जेत् ॥ तत आचम्य जले ॐ ऋतञ्च सत्यं० इत्यघमर्षणम् ॥ ॐ द्रुपदादिवेति च वारत्रयमावर्त्तयेत् । ततः स्नानाङ्गतर्पणं सव्येन । प्राङ्मुखः ॐ ब्रह्मादयो देवास्तृप्यन्ताम् ॥ १ ॥ ॐ गौतमादय ऋषयस्तृप्यन्ताम् ॥ १ ॥ इति देवतीर्थेन एकैकमञ्जलिं जले क्षिपेत् ॥ तत उदङ्मुखो यज्ञोपवीतं कण्ठीकृत्वा ॐ सनकादयो मनुष्यास्तृप्यन्ताम् ॥ २ ॥ प्रजापतितीर्थेन अञ्जलिद्वयं दद्यात् ॥ अपसव्येन दक्षिणामुखः कृष्णतिलोदकैः ॐ कव्यवाडनलादयो देवपितरस्तृप्यन्ताम् ॥ ३ ॥ ॐ अस्मत्पितृपितामहप्रपितामहास्तृप्यन्ताम् ॥ ३ ॥ ॐ अस्मन्मातृपितामहीप्रपितामह्यस्तृप्यन्ताम् ॥ ३ ॥ ॐ अस्मन्मातामहप्रमातामहवृद्धप्रमातामहास्तृप्यन्ताम् ॥ ३ ॥ ॐ अस्मन्मातामहीप्रमाता

महीवृद्धप्रमातामह्यस्तृप्यन्ताम् ॥ ३ ॥ ॐ आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यताम् ॥ ३ ॥ एवं तर्पणं कृत्वा ॥ ॐ यन्मया दूषितं तोयं मलैः शारीरसंभवैः ॥ तस्य पापस्य शुद्ध्यर्थं यक्ष्मैतत्ते तिलोदकम् ॥ १ ॥ इति यक्ष्मणे जलं स्थले दद्यात् ॥ ततस्तीरमागत्य ॥ ॐ अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ॥ भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥ १ ॥ इति जलाञ्जलिं तटे निक्षिपेत् । एवं स्नानाङ्गतर्पणं कृत्वा सव्येनाचम्य सूर्य्यायार्घ्यं दद्यात् । " ॐ एहि सूर्य सहस्रांशो तेजोराशे जगत्पते ॥ अनुकम्पय मां देव गृहाणार्घ्यं नमोऽस्तु ते ॥ १ ॥ " ततो जलाद्बहिर्निष्क्रम्य अहतं श्वेतं सदशं धौतं वस्त्रं परिधाय उपवस्त्रं गृहीत्वा त्रिराचम्य गृहं गच्छेत् । ततः प्रायश्चित्ताङ्गत्वेन विष्णुपूजां पुरुषसूक्तेन कृत्वा पुरुषसूक्तेन एव प्रत्यृचं विष्णुं संतर्प्य विष्णुश्राद्धनिमित्तमधिकयुग्मब्राह्मणभोजनपर्याप्तमामं तन्निष्क्रयद्रव्यं वा ब्राह्मणेभ्यो दद्यात् । ततो गोदानं कुर्य्यात् । तद्यथा—देशकालौ संकीर्त्य प्रारिप्सितप्रायश्चित्तस्य पूर्वाङ्गतया विहितं गोदानं करिष्ये । इति संकल्प्य ब्राह्मणं वृत्वा यथाविधि ब्राह्मणपूजनं धेनुपूजनं च कुर्यात् । ततो गोपुच्छे देवर्षिपितृतर्पणं कृत्वा कांस्यपात्रे गोपुच्छं निधाय दुग्धतिलकुशसुवर्णयुतं कृत्वा दक्षिणहस्तेन गृहीत्वा देशकालौ स्मृत्वा मम समस्तपापक्षयार्थममुकदेवप्रातिछायज्ञार्हतासिद्धये श्रीपरमेश्वरप्रीत्यर्थमिमां गां सवत्सां सोपस्करां यथाशक्तिविभूषितां रुद्रदैवतां तुभ्यमहं संप्रददे इत्युच्चार्य संकल्पजलयुतं गोपुच्छं विप्रहस्ते दद्यात् ॥ " ॐ यज्ञसाधनभूता या विश्वस्याघौघनाशिनी ॥ विश्वरूपधरो देवः प्रीयतामनया गवा " ॥ १ ॥ इति प्रार्थयेत् । ततो गोदानसाङ्गतासिद्ध्यर्थं विप्राय दक्षिणां दत्त्वा अनेन गोदानकर्मणा पापापहा श्रीमहाविष्णुः प्रीयताम् । इति जलमुत्सृजेत् । गोदानासम्भवे यथाशक्ति तन्मूल्यं देयम् । तद्यथा—देशकालौ संकीर्त्य प्रायश्चित्तपूर्वाङ्गतया विहितं यथाशक्ति गोनिष्क्रयीभूतद्रव्यदानं करिष्ये । इति संकल्प्य ब्राह्मणं संपूज्य देयद्रव्यं गृहीत्वा देशकालौ संकीर्त्य प्रायश्चित्तपूर्वाङ्गतया विहितमिदं गोनिष्क्रयीभूतं यथा

शक्ति रजतद्रव्यं तुभ्यमहं संप्रददे । इति दद्यात् । नात्र दक्षिणा । इति प्रायश्चित्तधेनुदानम् ॥ ततः प्रायश्चित्तहोमं पञ्चगव्यप्राशनं च कृत्वा तद्दिने उपवासमेकभक्तव्रतं वा कुर्यात् ॥ ततो जलयात्रा कार्या । अथ जलयात्राविधानम् । ( वसिष्ठः ) " शान्तिकं पौष्टिकं चैव जलयात्रां विना बुधः ॥ कुरुते यदि वै मोहात्कर्म तस्य च निष्फलम् ॥ १ ॥ तडागादिप्रतिष्ठासु देवतायतनादिषु ॥ लक्षहोमे कोटिहोमेऽयुतहोमे तथैव च ॥ २ ॥ रुद्रादिपञ्चरुद्रेषु यज्ञे चाचरिते शुभे ॥ व्रतोत्सर्गेषु कार्येषु महादाने तथैव च ॥ ३ ॥ जलयात्रां पुरा कृत्वा श्रेष्ठकर्म्म समारभेत् ॥ अथातः संप्रवक्ष्यामि जलयात्राविधिं शुभम् ॥ ४ ॥ पञ्चरात्रे तथा तत्र मया प्रोक्ता तु नारद ॥ यजमानः सपत्नीको बन्धुभिः परिवारितः ॥ ५ ॥ गजैरश्वैः समायुक्तो नानारथसमन्वितः ॥ संभारांस्तत्र संगृह्य कलशान्काञ्चनादिकान् ॥ ६ ॥ तदभावे तु मृत्कुम्भान्नूतनान्दृढतायुतान् ॥ बाणसप्तरसगुणान्षष्टिरष्टोत्तरं शतम् ॥ ७ ॥ युवत्यस्त्वमलारूपाः सावित्रीमङ्गलाः शुभाः ॥ शङ्खभेरीमृदङ्गाश्च वेदध्वनिसमन्वितैः ॥ ८ ॥ यज्ञशालामतिक्रम्य द्विजादिजनसंयुतैः ॥ सृष्टिमार्गेण गन्तव्यं सिद्धिकामैश्च नारद ॥ ९ ॥ अशुष्कं च ह्रदं गत्वा स्रवत्स्रोतं तु पावनम् ॥ तडागं विमलं जीर्णं कूपं वाप्युत्तमं व्रजेत् ॥ १० ॥ इन्द्रघोषस्त्वेति रक्षेच्चित्पतिर्मापवित्रकम् ॥ तत्तीरे च समालिख्य यवैः स्वस्तिकमुत्तमम् ॥ ११ ॥ पद्मं वापि समालिख्य स्थापयेत्कलशांस्ततः ॥ यजमानः सपत्नीको गच्छेत्तु जलसन्निधौ ॥ ॥ १२ ॥ जलमातॄंश्च संपूज्याऽऽवाहयेज्जलदेवताः ॥ जीवमातॄस्ततः पूज्या गन्धपुष्पैर्यथाविधि ॥ १३ ॥ वारुणैर्विविधैर्मन्त्रैर्वरुणं पूजयेत्ततः ॥ सप्तसागरपूजां च जले दद्यात्ततो बलिम् ॥ १४ ॥ अथ प्रयोगः ॥ तत्रादौ यजमानः सपत्नीकः पुत्रपौत्रबान्धवादियुक्तः सन् वाद्यादिघोषेण नदीतडागादौ गच्छेत् । तत्र स्थण्डिलत्रयकरणम् । एकं गणेशाम्बिकयोः स्थापनार्थं यजमानस्याग्रे १ । द्वितीयं तदग्रे २ । तृतीयं द्वितीयादुत्तरतः ३ ॥ वितस्तिमात्रान्तरे प्रथमतृतीये हस्तमिते द्वितीयं द्विहस्तमात्रं कृत्वा अद्येत्यादिदेशकालौ स्मृत्वा मम सपत्नीकस्य

आयुरारोग्यैश्वर्यादिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थममुकदेवप्रतिष्ठाकर्माङ्गत्वेन जलयात्राकलशानां जलमातॄणां वरुणस्य गणेशाम्बिकयोः स्थापनप्रतिष्ठापूजनाद्यर्चनमहं करिष्ये ॥ इति संकल्प्य रक्तवस्त्रोपरि तन्दुलैः पद्मं कृत्वा तदुपरि नवकलशानां स्थापनम् । तत्र अष्टदिक्षु अष्टौ, नवमं मध्ये च स्थापयेत् ॥ कलशस्थापनमन्त्राः ॐ महीद्यौरित्यादि ज्ञेयाः । ततः ॐ आनोभद्राः इत्यादि शान्तिसूक्तं पठेत् । तेषु कलशेषु वरुणं संपूज्य तीर्थान्यावाहयेत् । तत्र मन्त्राः ॥ आगच्छन्तु महाभागाः समुद्राः सरितो ह्रदाः ॥ प्रभासं पुष्करं चैव विशाला विरजा गया ॥ १ ॥ कुरुक्षेत्रं प्रयागं च भद्रकर्णं पृथूदकम् ॥ गङ्गा च यमुना चैव ब्रह्मपुत्रा सरस्वती ॥ २ ॥ गोदावरी पयोष्णी च नदी चर्मण्वती तथा ॥ शतद्रुः पुष्करश्चैव शोणश्चैव महानदः ॥ ३ ॥ तुङ्गभद्रा च सिन्धुश्च पारावारस्तथैव च ॥ क्षिप्रा वेत्रवती चैव पुण्यो जम्बूनदस्तथा ॥ ॥ ४ ॥ विपाशा कौशिकी चैव नदा दुःस्वप्ननाशिनी । स्वर्णरेखा मही चैव भव्यं रुद्रमहालयम् ॥ ५ ॥ विष्णुपदं महातीर्थं गङ्गासागर सङ्गमः ॥ अर्घतीर्थं महापुण्यं कुशावर्तं तथैव च ॥ ६ ॥ भृगुकुत्सं कर्दमालं शक्तिभेदोऽरिसंगमः ॥ एवमादीनि तीर्थानि यानि सन्ति धरातले ॥ ॥ ७ ॥ आयान्तु तानि सर्वाणि कलशेषु समन्ततः ॥ आवाहयामि तीर्थानि पूजार्थं यागमण्डपे ॥ ८ ॥ इति तीर्थावाहनं कलशान् स्पृष्ट्वा कुर्यात् ॥ ततः कलशोपरि शरावेषु तण्डुलैर्नव अष्टदलानि कृत्वा तेषु जलमातॄः स्थापयेत् । तत्रादौ यजमानाग्रे स्थण्डिलोपरि अष्टदलं कृत्वा तत्र गणेशाम्बिके स्थापयेत् । तद्यथा । ॐ प्रणम्य देवदेवेशं विघ्नराजं विनायकम् ॥ अस्य यागस्य सिद्ध्यर्थमावाह्येवं गणाधिपम् ॥ १ ॥ ॐ गणानां त्वा० ॐ भूर्भुवः स्वः गणपतिमावाहयामि स्थापयामि । ॐ प्रणम्य मातरं देवीं सुशान्तां शुभलक्षणाम् ॥ अस्य यागस्य सिद्ध्यर्थमावाह्यैवाम्बिकामिह ॥ ॐ आयंगौःपृश्निरक्रमीदसदन्मातरम्पुरः ॥ पितरञ्चप्रयन्त्स्वः ॥१॥ भूर्भुवः स्वः गौरीमावाहयामि स्थापयामि । इति ( सं ) स्थाप्य ॐ गणेशाम्बिकाभ्यां नमः । इति षोडशोपचारैः पूजयेत् ॥ ततः पूर्वादिक्रमेणाष्टकलशोपरि जलमातॄणामावाहनम् । ( तासां नामानि )

ऊर्मिर्लक्ष्मीर्जला पाना वारुणी जलवासिनी ॥ आपगा च क्रमेणैव सप्तैता जलमातरः ( तासां स्थापनमन्त्राः ) ॥ पूर्वकुम्भोपरि–महार्णवे समुद्भूतां कल्लोलान्दोलवर्द्धिनीम् । मोहयन्तीं जगत्सर्वमूर्मिमावाहयाम्यहम् ॥ १ ॥ आगच्छ वरदे देवि । जलमातर्नमोऽस्तु ते ॥ ॐ वृष्णऽऊर्मिरसिराष्ट्रदाराष्ट्रम्मेदेहिस्वाहावृष्णऽऊर्मिरसिराष्ट्रदाराष्ट्रममुष्मैदेहिवृषसेनोऽसिराष्ट्रदाराष्ट्रम्मेदेहिस्वाहावृषसेनोऽसिराष्ट्रदाराष्ट्रममुष्मैदेहि ॥ १ ॥ ॐ भूर्भुवः स्वः ऊर्मिमावाहयामि ॥ १ ॥ आग्नेयकुम्भे । पद्मासनसमासीनां पद्महस्तां हरिप्रियाम् ॥ अम्भोधितनयां देवीं लक्ष्मीमावाहयाम्यहम् ॥ आगच्छ वरदे देवि जलमातर्नमोऽस्तु ते ॥ ॐ श्रीश्चतेलक्ष्मीश्च० ॥ ॐ भूर्भुवः स्वः लक्ष्मीमावाहयामि स्थापयामि ॥ २ ॥ दक्षिणकुम्भोपरि । प्रलयान्ते महाघोरे एकोदधिकृतां महीम् ॥ अम्बुमूर्तिधरां देवीं जलामावाहयाम्यहम् ॥ आगच्छ वरदे देवि यज्ञेऽस्मिन्सन्निधौ भव ॥ ॐ द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिरश्विनासौभगेभिः । तन्नोमित्रोवरुणोमामहन्तामदितिः सिन्धुः पृथिवीऽउतद्यौः ॥ १ ॥ ॐ भूर्भुवःस्वर्जलामावाहयामि स्थापयामि ॥ ३ ॥ नैर्ऋतकुम्भे । चतुरशीतिसंख्याका जन्तवो योनिसंभवाः ॥ मायाधाराः कृतास्तस्मात्पानामावाहयाम्यहम् ॥ १ ॥ आगच्छ वरदे देवि यज्ञेऽस्मिन्सन्निधौ भव । ॐ अन्तरामित्रावरुणा चरन्तीमुखं यज्ञानामभिसंविदाने । उषासावाᳪसुहिरण्येसुशिल्पेऽऋतस्ययोनाविहसादयामि ॥ १ ॥ ॐ भूर्भुवः स्वः पानामावाहयामि स्थापयामि ॥ ४ ॥ पश्चिमकुम्भे वरुणस्य प्रियां देवीं पावनीं भुवनत्रये ॥ सर्वाभरणशोभाढ्यां वारुणीमावाहयाम्यहम् ॥ १ ॥ आगच्छ वरदे देवि विशुद्धजलवासिनि ॥ ॐ वरुणस्योत्तम्भनमसि० ॥ ॐ भूर्भुवः स्वः ॥ वारुणीमावाहयामि स्थापयामि ॥ ५ ॥ वायव्यकुम्भे ॥ जलजन्तून्विना नैव यानि तीर्थानि सर्वतः ॥ आवाहयामि तां देवीं विशुद्धां जलवासिनीम् ॥ आगच्छ वरदे देवि यज्ञेऽस्मिन्सान्निधौ भव ॥ ॐ अर्यमणंबृहस्पतिमिन्द्रन्दानायचोदय ॥ वाचंविष्णुᳪसरस्वतीᳪसवितारंश्चवाजिनᳪस्वाहा ॥ ॐ भूर्भुवः स्वः ॥ जलवासिनीमावाहयामि स्थापयामि ॥ ६ ॥ उत्तरकुम्भे ॥

रसातलं च पातालं यया व्याप्तं चराचरम् । जगदाधारभूतां चापगामावाहयाम्यहम् ॥ १ ॥ आगच्छ वरदे देवि यज्ञेऽस्मिन्सन्निधौ भव॥ ॐ
अग्नऽइन्द्रवरुणमित्रदेवाः शर्धः प्रयन्तुमारुतोतविष्णोउभानासत्यारुद्रोऽअधग्नाः पूषाभगः सरस्वतीजुषन्तः ॥ ॐ भूर्भुवः स्वः आपगामावाहयामि
स्थापयामि ॥ ७ ॥ ईशानकुम्भे । शुद्धोदधिसमुद्भूतां शुद्धवर्णजलप्रियाम् । शुद्धयर्थं जलकुम्भानां शुद्धामावाहयाम्यहम् ॥ १ ॥ आगच्छ
वरदे देवि यज्ञेऽस्मिन्सन्निधौ भव ॥ ॐ होतायक्षद्वनस्पतिमभिहिपिष्टतमयारभिष्टयारशनयाधित ॥ यत्राश्विनोश्छागस्यहविषःप्रियाधामानि
यत्रसरस्वत्यामेषस्यहविषः प्रियाधामानियत्रेन्द्रस्यऽऋषभस्य हविषः प्रियाधामानियत्राग्नेःप्रियाधामानियत्रसोमस्यप्रियाधामानियत्रेन्द्रस्य सुत्र
म्णः प्रियाधामानियत्रसवितुः प्रियाधामानियत्रवरुणस्यप्रियाधामानियत्रवनस्पतेः प्रियापाथाᳬसियत्रदेवानामाज्यपानांप्रियाधामानियत्राग्नेर्होतुः
प्रियाधामानितत्रैतान्प्रस्तुत्येवोपस्तुत्येवोपावस्त्रक्षद्रभीयसइवकृत्वीकरदेवंदेवोवनस्पतिर्जुषताᳬहविर्होतर्यज ॥ १ ॥ ॐ भूर्भुवः स्वः ॥ शुद्धा
मावाहयामि । स्थापयामि ॥ ८ ॥ मध्येकुम्भोपरि । आगच्छ जलदेवेश जलनाथ ह्यपांपते ॥ तव पूजां करिष्यामि कुम्भेऽस्मिन्सन्निधौ भव ॥ १ ॥
ॐ वरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्जनीस्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऋतसदनमासीद ॥ १ ॥ ॐ भूर्भुवः
स्वः वरुणमावाहयामि स्था०॥९ ॥ अथ कुम्भस्योत्तरतः स्थण्डिलं कृत्वा रक्तवस्त्रेणाच्छाद्य रक्ततंडुलैरष्टदलं कृत्वा तत्र जीवमातॄणां स्थापनम्
( तासां नामानि ) मत्सी कूर्मी जलौका च दर्दुरी जलगोधिका ॥ मकरी तन्तुकी चैव सप्तैता जीवमातरः ॥ १ ॥ तत्रादौ मध्ये । रसातल
समुत्पन्ने मत्स्यदेवि महार्णवे ॥ मातङ्गि च प्रिये कृष्णे जीवमातर्नमोस्तु ते ॥ १ ॥ ॐ समुद्रायशिशुमारानालभतेपर्जन्यायमण्डूकानद्भ्यो
मत्स्यान् मित्रायकुलीपयान्वरुणायनाक्रान् ॥ १ ॥ ॐ भूर्भुवः स्वः मत्सीमावाहयामि स्थापयामि ॥ १ ॥ पूर्वपत्रे । ह्रदे कूर्म्मसमुत्पन्नां गम्भीरां
चैव कर्माणि ॥ पातालजलसंस्थाने जीवमातर्नमोऽस्तु ते ॥ १ ॥ ॐ कौसिकत्तमोसिकस्यासिकोनामासि ॥ यस्य तेनामामहिसयंत्वासोमेनाती

तृपाम ॥ ॐ भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याꣳसुवीरोवीरैः सुपोषः पोषैः ॥ १ ॥ ॐ भूर्भुवःस्वः कूर्मीमावाहयामि स्थापयामि ॥ २ ॥ आग्नेय कोणे । श्वेताभ्रे वै समुत्पन्नां जन्तुके जीवचारिणीम् । उत्पत्तिः सर्वभूतानां जीवमातर्नमोऽस्तु ते ॥ १ ॥ यस्यास्तेघोरआसन्जुहोम्येषांबंधानां मवसर्जनाययांत्वाजनोभूमिरितिप्रमंदतेनिर्ऋतित्वाहंपरिवेदविश्वतः ॥ ॐ भूर्भुवः स्वः जलौकीमावाहयामि स्थापयामि ॥ ३ ॥ दक्षिणपत्रे । कालाभ्रशिखराकारा विद्युत्तेजाश्च दर्दुरी ॥ अर्द्धमाकाशसंस्थाने जीवमातर्नमोऽस्तु ते ॥ ॐ द्वारोदेवीरन्वस्यविश्वेव्रतादंदन्तेअग्नेः ॥ ऊरुव्यचसोधाम्नापत्यमाना ॥ १ ॥ ॐभूर्भुवस्वः दर्दुरीमावा० ॥ ४ ॥ नैर्ऋत्यपत्रे । गोधिके गोसमुत्पन्ने सस्रग्दामविभूषिते ॥ सर्वाधारधरे देवि जीवमातर्नमोऽस्तु ते ॥ १ ॥ गोमदूषुणासत्याअश्वावद्यातमश्विनावर्तीरुद्रानृपाय्यम् ॥ १ ॥ ॐभूर्भुवः स्वः जलगोधिकामावाहयामि० ॥ ५ ॥ पश्चिमपत्रे । नमस्ते देवदेवेशि मकरे मदमर्दिनि ॥ आश्रये सर्वभूतानां जीवमातर्नमोऽस्तु ते ॥ १ ॥ ॐमापोमोषधीर्हिꣳसीर्धाम्नोधाम्नोराजंस्ततोवरुणनोमुञ्च ॥ यदाहुरघ्न्या इतिवरुणेतिशपामहे ततोवरुणनोमुञ्च ॥ १ ॥ ॐभूर्भुवः स्वः मकरीमावा० ॥ ६ ॥ वायव्यपत्रे । अन्धकारसमुत्पन्ने तन्तुकैर्निर्मिते शिवे ॥ दीप्तिरूपे त्रिभुवने जीवमातर्नमोऽस्तु ते ॥ १ ॥ ॐ यातेहेतिर्मीढुष्टमहस्तेबभूवतेधनुः ॥ तयास्मान्विश्वतस्त्वमयक्ष्मयापरिभुज ॥ १ ॥ ॐ भूर्भुवःस्वः तन्तुकीमावा० ॥ ७ ॥ उत्तरपत्रे । सर्वाधारधरे देवि कर्करि जीवमातृके ॥ आश्रये सर्वभूतानां जीवमातर्नमोऽस्तु ते ॥ १ ॐआपोअस्मान्मातरः शुधयन्तु घृतेननोघृतप्वः पुनन्तुविश्वꣳहिरिप्रंप्रवहंतिदेवीरुदिदाभ्यःशुचिरापूतएमि ॥ १ ॥ ॐभूर्भुवःस्वः कर्करीमावाहयामि० ॥ ८ ॥ ईशानपत्रे । नमस्ते देवदेवेशि सर्पिणि मदमर्दिनि । सर्वाधारधरे देवि जीवमातर्नमोऽस्तु ते ॥ १ ॥ ॐ नमोस्तुसर्पेभ्योयेकेचपृथिवीमनु ॥ येअन्तरिक्षेयेदिवितेभ्यःसर्पेभ्यो नमः ॥ १ ॥ ॐभूर्भुवः स्वः सर्पिणीमावाहयामि स्थापयामि ॥ ९ ॥ इति जीवमातृकास्थापनम् ॥

ततो मध्यकलशस्य दिक्षु विदिक्षु च स्थलमातृकास्थापनम् ॥ उमा लक्ष्मीर्महामाया पानादेवी तथैव च ॥ वारुणी निर्मला गोधा सप्तैताः स्थलमातरः ॥ १ ॥ पूर्वादिक्रमेण नाममन्त्रैः स्थापनम् ॥ ॐ उमामावाहयामि स्थापयामि ॥ १ ॥ ॐ लक्ष्मीमावाहयामि० ॥ २ ॥ ॐ महामायामावाहयामि० ॥ ३ ॥ ॐ पानादेवीमावाहयामि० ॥ ४ ॥ ॐ वारुणीमावाहयामि० ॥ ५ ॥ ॐ निर्मलामावाहयामि स्थापयामि ॥ ६ ॥ ॐ गोधामावाहयामि स्थापयामि ॥ ७ ॥ इति प्रतिष्ठाप्य ॐ मनोजूतिरिति पठित्वा स्थापितदेवता गणेशप्रमुखाः सर्वाः सकलशाः जलमातरः जीवमातरः स्थलमातरश्च सुप्रतिष्ठिता वरदा भवन्तु । इति वदेत् । ॐ गणेशाय नमः । ॐ अम्बिकायै नमः ॥ इति तत्तन्नाममन्त्रैर्गन्धादिभिः पूजयेत । तद्यथा । ॐ लक्ष्म्यै नमः । ॐ जलायै नमः । ॐ पानायै नमः । ॐ वारुण्यै नमः । ॐ जलवासिन्यै नमः । ॐ आपगायै नमः । ॐ शुद्धायै नमः । ॐ वरुणाय नमः ॥ ॐ मध्यकलशेभ्यो नमः ॥ पूर्वकलशाय इक्षूदकाय सर्वतीर्थमयाय इदमत्रादिपूजनम् । दक्षिणकलशाय स्वादूदकाय सर्वफलप्रदाय इदमत्रादिपूजनम् । पश्चिमकलशाय क्षीरोदकाय दिव्यभोगसमन्विताय इदमत्रादिपूजनम् । उत्तरकलशाय दध्युदकाय सर्वसमृद्धियुक्ताय इदमत्रादिपूजनम् । मध्यकलशाय षड्रसोदकाय सर्वज्ञानमयाय इदमत्रादिपूजनम् ॥ ततः स्थण्डिले जीवमातृपूजनम् ॥ ॐ मत्स्यै नमः १ । ॐ कूर्म्यै नमः २ । ॐ जलौकायै नमः ३ । ॐ दर्दुर्य्यै नमः ४ । ॐ जलगोधिकायै नमः ५ । ॐ मकर्य्यै नमः ६ । ॐ तन्तुकर्य्यै नमः ७ । ॐ सर्पिण्यै नमः ८ ॥ ततः स्थलमातृपूजनम् ॥ ॐ उमायै नमः १ । ॐ लक्ष्म्यै नमः २ । ॐ महामायायै नमः ३ । ॐ पानादेव्यै नमः ४ । ॐ वारुण्यै नमः ५ । ॐ निर्मलायै नमः ६ । ॐ गोधायै नमः ॥ ७ ॥ ततो मध्यकलशे वरुणस्य विशेषपूजनम् । तत्रादौ मन्त्राक्षरन्यासः स्वशरीरे ॥ ॐ वं वरुणाय जलाधिपतये अङ्गुष्ठाभ्यां नमः । ॐ रुं वरुणाय जलाधिपतये तर्जनीभ्यां नमः । ॐ णां वरुणाय जलाधिपतये मध्यमाभ्यां नमः । ॐ यं वरुणाय जलाधिपतये अनामिकाभ्यां नमः । ॐ नं

वरुणाय जलाधिपतये कनिष्ठिकाभ्यां नमः । ॐ मं वरुणाय जलाधिपतये करतलकरपृष्ठाभ्यां नमः । एवमेव हृदयादिन्यासं कुर्य्यात् । एव
मङ्गन्यासं कृत्वा पूर्वबीजाङ्गानि सम्पूज्य मध्ये वेदमन्त्राङ्गपूजां कुर्य्यात् । तद्यथा । ॐ शन्नोदेवी० वरुणस्य हृदयाय नमः । ॐ स्योनापृथिवि०
वरुणस्य शिरसे स्वाहा २ । ॐ आपोहिष्ठामयोभुव० वरुणस्य शिखायै वषट् ३ । ॐ इमम्मे वरुण० वरुणस्य नेत्रत्रयाय वौषट् ४ । ॐ
तत्सवितुर्वरेण्यं० वरुणस्य अस्त्राय फट् ५ ॥ ततः कलशे जपः । पूर्वाग्नेयकलशयोः । समुद्रज्येष्ठा० ४ । इमम्मे० २ । वरुणंवो० १ । प्रमि
त्राय० १ । इत्यादि ऋग्वेदिजपः । दक्षिणनैर्ऋतिकलशयोः । समुद्रायत्वा० १ । समुद्रादूर्मि० १ । उक्षासमुद्र० १ । समुद्रंगच्छ० १ । वरुण
स्योत्तं० १ । पञ्चनद्य० १ । इत्यादि यजुर्वेदिजपः । पश्चिमवायुकलशयोः । पवित्रंतेविततं० १ । पयःसाम० । गायत्रीसाम० । आग्नेयीसाम० ।
इत्यादि सामवेदी पठेत् । उत्तरेशानकलशयोः शन्नोदेवी० । अथर्वशिर० । अथर्वशिखा० । इत्यादि अथर्ववेदी पठेत् ॥ ततः प्रार्थना । यादः
पृष्ठसमारूढ पाशहस्त महाबल ॥ पाहि यज्ञमिमं देव जलनाथ नमोऽस्तु ते ॥ १ ॥ ततो वरुणोपवेशनपद्मपत्राणि पूजयेत् । ॐ पूर्वपत्राय नमः १ ।
ॐ आग्नेयपत्राय नमः २ । ॐ दक्षिणपत्राय० ३ । ॐ नैर्ऋतपत्राय० ४ । ॐ पश्चिमपत्राय० ५ । ॐ वायव्यपत्राय० ६ । ॐ उत्तरपत्राय० ७ । ॐ ईशानपत्राय
नमः ८ । इति पत्रपूजा ॥ अथ वरुणपूजा ॥ आवाहयामि देवेशं वरुणं जलनायकम् । यादःपृष्ठसमारूढं पाशहस्तं महाबलम् ॥ १ ॥
आगच्छ जलदेवेश कुम्भेऽस्मिन् सन्निधौ भव ॥ ॐ तत्त्वायामिब्रह्मणावन्दमानुस्तदाशास्तेयजमानोहुविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳ
समान॒आयुः प्रमोषीः ॥ १ ॥ ॐ वरुणस्योत्तम्भनमसि ॥ २ ॥ ॐ भूर्भुवःस्वः भगवन् वरुण इहागच्छ इह तिष्ठ । इत्यावाह्य ॐ वरुणाय नमः ।
इति श्वेतगन्धाक्षतपुष्पधूपदीपनैवेद्यताम्बूलनानाफलदक्षिणाभिः संपूज्य नालिकेरेणार्घ्यं दद्यात् ॥ " श्वेताभ्रशिखराकार सर्वभूतहिते रत ॥
गृहाणार्घ्यमिमं देव जलनाथ नमोऽस्तु ते ॥ " ततः प्रार्थना । नदीसागरमाश्रित्य कलशेषु समाश्रित ॥ प्रसादं कुरु मे देव मदीये यागमण्डपे ॥

॥ १ ॥ अभ्यर्थितो मया भक्त्या परिवारसमन्वितः ॥ सान्निध्यं कुरु देवेश मदीये यागमण्डपे ॥ २ ॥ गृहाण ब्रह्मणा सेव्य प्रसादं कुरु मे अपः । संपूज्य बहुधा भक्त्या मन्त्रमेतमुदीरयेत् ॥ ३ ॥ ( ततो वरुणमन्त्राः पठनीयाः । ) ततो जलमध्ये होमः । तद्यथा । जलसमीपे गत्वा ॐ वरुणरूपी वैश्वानराय नमः । इत्यग्निं जलमध्ये गन्धादिभिः संपूज्य प्रार्थ्य स्रुवेण जले आज्यहोमं कुर्यात् । ॐ आपोऽअस्मान्० स्वाहा ॥ १ ॥ इदं वरुणाय । ॐ आपोहिष्ठा० स्वाहा २ । ॐ त्वरुणस्योत्तं० स्वाहा ३ । ॐ इमम्मेवरुण० स्वाहा ४ । अग्नये स्वाहा ५ । ॐ सोमाय० ६ । ॐ सवित्रे० ७ । ॐ सरस्वत्यै० ८ । ॐ पूष्णे स्वाहा ९ । ॐ बृहस्पतये० १० । ॐ इन्द्राय० ११ । ॐ घोषाय० १२ । ॐ श्लोकाय० १३ । ॐ अंशाय० १४ । ॐ अद्भ्यः स्वाहा १५ । ॐ वार्भ्यः स्वाहा १६ । ॐ उदकाय० १७ । ॐ तिष्ठन्तीभ्यः स्वाहा १८ ॐ स्रवन्तीभ्यः स्वाहा १९ । ॐ स्यन्दमानाय० २० । ॐ कूप्याय० २१ । ॐ सूद्याय० २२ । ॐ धार्याभ्यः स्वाहा २३ । ॐ अर्णवाय० २४ । ॐ समुद्राय० २५ । ॐ सरिद्भ्यः स्वाहा २६ । यथा नाम्ना त्यागः कार्यः ॥ अथ बलिदानम् ॥ मुद्गमाषचणकभक्तकोरदूषयवादिबलिद्रव्याणि पात्रे संस्थाप्य ॥ ॐ बलिद्रव्याय नमः । इति गन्धादिभिः संपूज्य वक्ष्यमाणमन्त्रैर्मत्स्यादिभ्यः जले बलिं क्षिपेत् । ॐ यस्यं कूर्म्मोगृहेहविस्तमंग्नेवर्धयात्वम् ॥ तस्मैदेवा अधिब्रुवन्नयंचब्रह्मणस्पतिः ॥ १ ॥ बलिं गृह्णन्तु ते देवा ये केचिज्जलमाश्रिताः ॥ बुभुक्षितान्नहीनाश्च कृपणा जलवासिनः ॥ १ ॥ दस्यवः सिंहशार्दूला अन्ये जलसमाश्रिताः ॥ भूतप्रेतपिशाचाश्च ये केचिद्वरुणालयाः ॥ २ ॥ तृप्तास्ते मे श्रियं दद्युर्विघ्नान्नक्षन्तु सर्वदा ॥ बलिं गृह्णन्त्विमे देवा आदित्या वसवस्तथा ॥ ३ ॥ मरुतोऽथाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ॥ असुरा यातुधानाश्च पिशाचा मातरो नगाः ॥ ४ ॥ दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ॥ शाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः ॥ ५ ॥ जृंभकाः सिद्धगन्धर्वा माला विद्याधरा नगाः ॥ जगतां शान्तिकर्त्तारो ब्रह्माद्याश्च महर्षयः ॥ ६ ॥ मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः ॥ सौम्या भवन्तु

तृप्ताश्च भूताः प्रेताः सुखावहाः ॥ ७ ॥ इति मन्त्रैर्जलमध्ये मुद्गमाषादि विकीर्य हस्तौ प्रक्षाल्य आचामेत् । ततः समुद्रं गच्छ० १ । समुद्रा यत्वा० २ । समुद्रोसि० ३ । समुद्रादूर्मि० ४ । उक्षासमुद्र० ५ । पञ्चनद्यः० ६ । इत्यादिमन्त्रान् पठित्वा तीर्थं प्रणम्य कुम्भसमीपमागत्य वरुणं प्रार्थयेत् । प्रतीचीश नमस्तुभ्यं सर्ववैरिनिषूदन । पवित्रं कुरु मे देव सर्वकार्येषु सर्वदा ॥ १ ॥ ज्ञानतोऽज्ञानतो वापि यावान्विधिरनुष्ठितः ॥ तत्सर्वं त्वत्प्रसादेन संपूर्णं भवतु प्रभो ॥ २ ॥ त्वमापो योनिः सर्वेषां देवदानवरक्षसाम् ॥ स्वेदजोद्भिज्जजातीनां रसानां पतये नमः ॥ ३ ॥ प्रसादं कुरु देवेश आगच्छ यज्ञमण्डपे ॥ अभ्यर्चितो मया भक्त्या परिवारैर्जलाधिप ॥ ४ ॥ सान्निध्यं कुरु देवेश पवित्रे यज्ञमण्डपे ॥ इति प्रार्थ्य पूर्वादिदशदिक्षु इन्द्रादिभ्यो बलिदानं कुर्यात् । ॐ इन्द्रादिदशदिक्पालेभ्यो नमः । इति गन्धादिभिः पूजां कृत्वा माषभक्तबलीन् दद्यात् । तद्यथा-पूर्वे । ॐ इन्द्राय नमः इन्द्रानुचरेभ्यो नमः इमं बलिं समर्पयामि १ । आग्नेय्याम् । अग्नये नमः अग्न्यनुचरेभ्यो नमः इमं बलिं समर्पयामि २ । दक्षिणे । यमाय नमः यमानुचरेभ्यो नमः बलिं समर्पयामि ३ । नैर्ऋत्याम् । ॐ निर्ऋतये नमः निर्ऋत्यनुचरेभ्यो नमः इमं बलिं समर्पयामि ४ । पश्चिमे । ॐ वरुणाय नमः वरुणानुचरेभ्यो नमः इमं बलिं समर्पयामि ५ । वायव्याम् । ॐ वायवे नमः वायोरनुचरेभ्यो नमः इमं बलिं समर्पयामि ६ । उत्तरे । ॐ कुबेराय नमः कुबेरानुचरेभ्यो नमः इमं बलिं समर्पयामि ७ । ऐशान्याम् । ॐ ईशानाय नमः ईशानानुचरेभ्यो नमः इमं बलिं समर्पयामि ८ । ईशानपूर्वयोर्मध्ये । ॐ ब्रह्मणे नमः ब्रह्मणोऽनुचरेभ्यो नमः इमं बलिं समर्पयामि ९ । निर्ऋतिवरुणयोर्मध्ये । ॐ अनन्ताय नमः अनन्तानुचरेभ्यो नमः इमं बलिं समर्पयामि १० । ततो ॐ येदेवासोदिव्येकादशस्थपृथिव्यामध्येकादशस्थ ॥ अप्सुक्षितोमहिनैकादशस्थतेदेवासोयज्ञमिमंजुषध्वम् ॥ १ ॥ इति मन्त्रेण देवेभ्यः बलिं दद्यात् । ततः यस्य स्मृत्या इत्यादि कर्मपूर्तिकामो विष्णुं स्मृत्वा । आचार्यादिभ्यो दक्षिणां दत्त्वा यथाशक्ति ब्राह्मणान् भोजयेत् ।

ततः । ॐ उत्तिष्ठब्रह्मणस्पते० इति कलशानामुत्थापनम् । तान् कलशान् सुवासिन्यः सौभाग्यवत्यो नयेयुः । ततो मार्गे वारुणमन्त्रान् शाकुन सूक्तं पावमानसूक्तं शान्तिसूक्तं च पठन् चतुष्पथे क्षेत्रपालाय बलिं दद्यात् । तद्यथा । चत्वरे किंचिद्भूमिमुपलिप्य दर्भानास्तीर्य्य पाषाणं तत्र संस्थाप्य ॐ क्षेत्रपालाय नमः । इति षोडशोपचारैः संपूज्य माषमुद्गभक्तसुगन्धितैलरक्तवस्त्रादियुतं बलिं गृहीत्वा ॐ नमो भगवते क्षेत्र पालाय, भासुरनेत्र ज्वालामुख अवतर कपिल ऊर्ध्वकेश जिह्वाललन शत्रूँश्छिन्धि भिन्धि इति प्रार्थ्य बलिं दत्त्वा प्रत्यागच्छेत् । हस्तौ पादौ प्रक्षाल्य आचम्य आचार्यब्राह्मणैः सह मण्डपे आगत्य सर्वान्कुम्भान्समुद्धृत्य तत्तोयं मणिके क्षिपेत् । इति जलयात्राविधानं समाप्तम् ॥ एवं शरीरशुद्धिं धेनुदानं च कृत्वा पुनः सर्वौषधिजलेनोष्णोदकेन च मङ्गलस्नानं विधायाहते शुक्लवाससी द्वे परिधाय शुक्लमाल्याम्बरधरः सपत्नीको यजमान एतान् संभारान्गृहीत्वा शिल्पिस्थानात्प्रादक्षिण्येन देवं चानीय गीतवादित्रभेरीसुवासिनीमङ्गलघोषशान्तिपाठैर्युक्तः सन्मण्डपसमी पमागत्य पश्चिमद्वारेण प्रविश्य तत्र देवमासने निधाय दक्षिणद्वारसमीपे पश्चिमे भद्रपीठे प्रागग्रदर्भेषु यजमानः सपत्नीकः प्राङ्मुखः उदङ्मुखो वोपविशेत् ॥ अथ संभाराः । तत्रादौ ग्रहहोमार्थमर्कादिसमिधां प्रत्येकमष्टशतम् । लोकपालादियागाय पलाशादिसमिधां प्रत्येकमष्टशतम् । संक्षेपपक्षे आज्यचर्वादि । भद्रपीठत्रयम् ३, पुष्पमालाः, कुङ्कुमम्, चन्दनम्, कर्पूरः, कस्तूरी, अगुरुः, गुग्गुलुः, धूपम्, धूपपात्रम्, आरा र्तिकम्, घण्टा, पादुका, दर्पणम्, बलिसामग्री, पायसभक्ष्यभोज्यनैवेद्यम्, ताम्बूलानि, पूगीफलानि, होमार्थमाज्यतिलयवाक्षतशर्क राफलादिकम्, प्रतिकुण्डं स्रुक्स्रुवौ, आसनानि, कुङ्कुमरञ्जितत्रिसूत्री, श्वेतोर्णासूत्रम्, सर्वतोभद्रादिरचनाय श्वेतरक्तपीतनीलकृष्ण वर्णकाः, स्नपनकलशाः, पल्लवाः, कदलीस्तम्भाः, पताका दशसंख्याकाः, ध्वजाश्च, तेषां वेणुदण्डाः, एको मध्यध्वजः, एकः प्रासादार्थे ध्वजः, वज्रमौक्तिकवैडूर्यशङ्खस्फटिकपुष्परागेन्द्रनीलमहानीला इति रत्नाष्टकम्, हरितालकमनःशिलाभ्रककृष्णाञ्जनमाक्षिककासी

सस्वर्णमाक्षिकगौरिका इति धात्वष्टकम्, तिलयवमुद्गगोधूमनीवारश्यामाकसर्षपव्रीहय इति बीजाष्टकम्, सुवर्णरजतताम्रलोहत्रपुसीसरङ्गरीत्याख्यधात्वष्टकम्, मधुपर्कपात्रं सौवर्ण ताम्रं वाऽर्घपात्रं च शक्त्यैकद्वित्रिमाषसुवर्णशलाका, कनकं कुलिशं नीलं पद्मरागं मौक्तिकमिति स्थापनीयकलशरत्नानि, अष्टौ द्वारकलशाः ८, दश लोकपालकलशाः १०, वेदिकलशाश्चत्वारः ४, वास्तुमण्डलकलशः १, कुण्डकलशाः कुण्डसंख्यया, निद्राकलशः १, स्नपनकलशा एकाशीतिः, ८१, कलशसंख्यया शरावाणि, वेदिकोणे शृङ्गारकलशाः ४, उदकाहरणकुम्भाः करकाश्च १०. धारासहस्रान्वितौ कलशौ २, गजाश्वत्थवल्मीकनदीसङ्गमह्रदकूलद्वयवराहोत्खातगोष्ठाग्न्यागारचत्वरराजद्वारमृदः, मुरा मांसी वचा कुष्ठं शैलेयं हरिद्रा दारुहरिद्रा शुण्ठी चम्पकमुस्ता इति सर्वौषध्यः, उदुम्बरन्यग्रोधाश्वत्थजम्ब्वाम्रत्वक्संभवकषायपञ्चकम्, पल्लवाश्च, शमीपलाशसारिवाहरिद्रासर्षपप्रियंगुकालांजनं पद्मकेशरम्, गोरोचननागकेशरसहदेवीसिंहीव्याघ्रीबलाशङ्खपुष्पीवचासुवर्चलाऋद्धिवृद्धिशतावरीसूर्यावर्ताऽपराजिताविष्णुक्रान्तेति महौषधिगणः, पञ्चगव्यं पृथक्पञ्चामृतम्, व्रीहियवतिलगोधूमनीवारश्यामाकमुद्गा इति सप्त धान्यानि, शय्या सोपस्करा, श्वेतच्छत्रम्, चामरद्वयम्, विचित्रवितानम्, त्रयो दुकूलपट्टाः, ऋत्विग्वरणसामग्री, उद्वर्तनद्रव्यम्, गोघृतम्, गोशृङ्गोदकम्, तीर्थोदकम् शङ्खः, शिल्पिदेयानि वस्त्राणि, सुगन्धितैलम्, नेत्राञ्जनपात्रम्, सिन्दूरम्, आम्रपत्रमाला, सुवर्णरचिता विष्ण्वादिदेवप्रतिमाः, नारिकेलफलान्यृतुफलानि, यज्ञोपवीतानि, गोधूमयवमसूरचूर्णं विरूक्षकरणार्थम्, समुद्रोदकम्, नारिकेलोदकम्, नीराजनाय पिष्टमयदीपाः, वर्तिकाः १००, आरार्तिकं दीपार्थम्, रक्तवस्त्रम्, पीतवस्त्रम्, कौशेयवस्त्रम्, स्वर्णशकलानि, नवग्रहसमिधोऽर्कः पलाशः खदिरः अपामार्गः पिप्पल औदुम्बरः शमी दूर्वा दर्भाः, लोकपालयागार्थं खदिरपलाशोदुम्बरप्लक्षवटापामार्गाश्वत्थसमिधः, वास्तुहोमार्थमौदुम्बरसमिधः १०८, देवालङ्करणार्थं विचित्राणि वस्त्रभूषणमुक्तामालाप्रभृतीनि, भोज-

नपात्राणि, रक्तसूत्रपिण्डम्, कदलीस्तम्भाः, अन्यान्यपि संपादयेत् ॥ इति श्रीरत्नदुर्गाख्यनगरनिवासिना श्रीकस्तूरीचन्द्रात्मजेन गौडपण्डित श्रीचतुर्थीलालशर्मणा कृते प्रतिष्ठाप्रकाशे प्रथमः परिच्छेदः ॥ १ ॥ अथ द्वितीयः परिच्छेदः ॥ तत्र ज्योतिःशास्त्रोक्तसुमुहूर्तदिने यजमानो भार्यया सह यथाचारं सुगन्धितैलाभ्यञ्जनपूर्वकमुष्णोदकेन मङ्गलस्नानं कृत्वा धौतशुक्लवस्त्रे परिधाय यथायोग्यमलङ्कृतो धृतकुङ्कुमकेशरान्यतममङ्गलतिलकः करद्वये पवित्रोपग्रहः स्वासने प्राङ्मुख उपविश्य दक्षिणे पार्श्वे संभारान्स्थापयित्वा वामे[1] पत्न्या समारब्धः स्मार्त्तविधिना द्विराचम्य प्राणानायम्य शान्तिपाठं पठेत् ॥ अथ शान्तिपाठः ॥ ॐ आनोभद्राः क्रतवोयन्तुविश्वतोदब्धासोऽअपरीतासऽउद्भिदः ॥ देवानोयथा सदमिद्वृधेऽअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥ १ ॥ देवानाम्भद्रासुमतिर्ऋजूयतान्देवानाꣳरातिरभिनोनिवर्त्तताम् ॥ देवानाꣳसख्यमुपसेदिमाव्वयन्देवानऽआयुःप्रतिरन्तुजीवसे ॥ २ ॥ तान्पूर्वयानिविदाहूमहेव्वयम्भगम्मित्रमदितिन्दक्षमस्रिधम् ॥ अर्यमणंव्वरुणꣳसोममश्विनासरस्वतीनः सुभगामयस्करत् ॥ ३ ॥ तन्नोव्वातोमयोभुव्वातुभेषजन्तन्मातापृथिवीतत्पिताद्यौः ॥ तद्ग्रावाणःसोमसुतोमयोभुवस्तदश्विनाशृणुतन्धिष्ण्यायुवम् ॥ ४ ॥ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेव्वयम् ॥ पूषानोयथाव्वेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ५ ॥ स्वस्तिनऽइ

---

१ अत्र " वामे " इति मूलोक्तं चिन्त्यं, पत्न्या दक्षिणत उपवेशने प्रमाणप्राचुर्यात्, सम्प्रत्यपि तथैव सकलयाज्ञिकव्यवहारदर्शनाच्च । तथाहि—व्रतबन्धे विवाहे च चतुर्थीसहभोजने । व्रते दाने मखे श्राद्धे पत्नी तिष्ठति दक्षिणे ॥ सर्वेषु धर्मकार्येषु पत्नी दक्षिणतः शुभा ॥ अभिषेके विप्रपादक्षालने चैव वामतः ॥ **धर्मप्रवृत्तौ** ॥ जातके नामके चैव ह्यन्नप्राशनकर्मणि । तथा निष्क्रमणे चैव पत्नी पुत्रश्च दक्षिणे ॥ गर्भाधाने पुंसवने सीमन्तोन्नयने तथा । वधूप्रवेशने चैव पुनः सन्धान एवच ॥ प्रदाने मधुपर्कस्य कन्यादाने तथैव च । कर्मस्वेतेषु भार्या वै दक्षिणे तूपवेशयेत् ॥ कात्यायनः ४ । ७ । १९ । पश्चादग्नेरुपविशतो दक्षिणतः पत्नी इति । यत्तु " शान्तिकेषु च सर्वेषु प्रतिष्ठोद्यापनादिषु । वामे तूपविशेत् पत्नी व्याघ्रस्य वचनं यथा " ॥ यच्च, पत्नी वामे सदा प्रोक्ता मूलाश्लेषाविधानयोरिति, तन्निर्मूलम् ।

न्द्रो॑वृ॒द्धश्र॑वाः स्व॒स्ति न॑ पू॒षा वि॒श्ववे॑दाः ॥ स्व॒स्ति न॒स्तार्क्ष्यो॒ऽअरि॑ष्टनेमिः स्व॒स्ति नो॒ बृह॒स्पति॑र्दधातु ॥ ६ ॥ पृष॑दश्वा म॒रुतः॒ पृश्नि॑मातरः शुभं॒या वा॑नो वि॒दथे॑षु॒ जग्म॑यः ॥ अ॒ग्नि॒जि॒ह्वा मन॑वः॒ सूर॑चक्षसो॒ विश्वे॑ नो दे॒वा अव॒सा ग॑मन्नि॒ह ॥ ७ ॥ भ॒द्रं कर्णे॑भिः शृणु॒याम॑ देवा भ॒द्रं प॑श्येमा॒क्षभि॒र्यज॑त्राः ॥ स्थि॒रैरङ्गै॑स्तुष्टु॒वांस॑स्त॒नूभि॒र्व्य॑शेमहि दे॒वहि॑तं॒ यदायुः॑ ॥ ८ ॥ श॒तमिन्नु श॒रदो॒ऽअन्ति॑ देवा॒ यत्रा॑ नश्च॒क्रा ज॒रसं॑ त॒नूना॑म् ॥ पु॒त्रासो॒ यत्र॑ पि॒तरो॒ भव॑न्ति॒ मा नो॑ म॒ध्या री॑रिष॒तायु॒र्गन्तोः॑ ॥ ९ ॥ अदि॑ति॒र्द्यौरदि॑तिर॒न्तरि॑क्ष॒मदि॑तिर्मा॒ता स पि॒ता स पु॒त्रः ॥ विश्वे॑ दे॒वा अदि॑तिः॒ पञ्च॒ जना॒ अदि॑ति॒र्जा॒तमदि॑ति॒र्जनि॑त्वम् ॥ १० ॥ तम्पत्नी॑भि॒रनु॑गच्छेम देवाः पु॒त्रैर्भ्रातृ॑भिरु॒त वा॒ हिर॑ण्यैः ॥ नाकं॑ गृभ्णा॒नाः सु॑कृ॒तस्य॑ लो॒के तृ॒तीये॑ पृ॒ष्ठे अधि॑ रोच॒ने दि॒वः ॥ ११ ॥ आयु॑ष्यं॒ वर्च॑स्यꣳ रा॒यस्पोष॒मौद्भि॑दम् ॥ इ॒दꣳ हिर॑ण्यं॒ वर्च॑स्व॒ज्जैत्रा॒याविश॑तादु॒ माम् ॥ १२ ॥ द्यौः शान्ति॑र॒न्तरि॑क्ष॒ꣳ शान्तिः॑ पृथि॒वी शान्ति॒रापः॒ शान्ति॒रोष॑धयः॒ शान्तिः॑ ॥ वन॒स्पत॑यः॒ शान्ति॒र्विश्वे॑ दे॒वाः शान्ति॒र्ब्रह्म॒ शान्तिः॒ सर्व॒ꣳ शान्तिः॒ शान्ति॑रे॒व शान्तिः॒ सा मा॒ शान्ति॑रेधि ॥ १३ ॥ यतो॑ यतः स॒मीह॑से॒ ततो॑ नो॒ऽअभ॑यं कुरु ॥ शन्नः॑ कुरु प्र॒जाभ्यो॒ऽभ॑यं नः प॒शुभ्यः॑ ॥ १४ ॥ ॐ शान्तिः शान्तिः सुशान्तिर्भवतु ॥ सर्वारिष्टशान्तिर्भवतु ॥ ॥ प्रारब्धे कर्मणि निर्विघ्नतास्तु । ॐ श्रीमन्महागणाधिपतये नमः । ॐ वाणीहिरण्यगर्भाभ्यां नमः । ॐ लक्ष्मीनारायणाभ्यां नमः ॥ ॐ उमामहेश्वराभ्यां नमः । ॐ शचीपुरन्दराभ्यां नमः । ॐ मातापितृचरणकमलेभ्यो नमः । ॐ कुलदेवताभ्यो नमः । ॐ इष्टदेवताभ्यो नमः । ॐ ग्रामदेवताभ्यो नमः । ॐ स्थानदेवताभ्यो नमः । ॐ वास्तुदेवताभ्यो नमः । ॐ सूर्यादिग्रहेभ्यो नमः । ॐ सर्वेभ्यो देवेभ्यो नमः ॥ ॐ सर्वेभ्यो ब्राह्मणेभ्यो नमः । ॐ एतत्कर्मप्रधानदेवताभ्यो नमः ॥ पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवन्तो ब्रुवन्तु ( इति यजमानः ) पुण्यं पुण्याहं दीर्घमायुरस्तु ( इति द्विजाः ) सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ॥ लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः ॥ १ ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ॥ द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ २ ॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । संग्रामे संकटे

चैव विघ्नस्तस्य न जायते ॥ ३ ॥ शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ ४ ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः । सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥५॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥ ६ ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् । येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः ॥ ७ ॥ तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव । विद्याबलं दैवबलं तदेव लक्ष्मीपते तेंऽघ्रियुगं स्मरामि ॥ ८ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ ९ ॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ १० ॥ सर्वेष्वारम्भकार्येषु त्रयस्त्रिभुवनेश्वराः । देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥ ११ ॥ विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् । सरस्वतीं प्रणौम्यादौ सर्वकार्यार्थसिद्धये ॥ १२ ॥ इति प्रणम्य दक्षिणहस्ते कुशत्रययवगन्धाक्षतपुष्पजलान्यादाय सङ्कल्पं कुर्यात् । अथ सङ्कल्पः । ॐ विष्णुर्विष्णुर्विष्णुः ॐतत्सद्ब्रह्मश्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्याद्य श्रीब्रह्मणो द्वितीये परार्द्धे विष्णुपदे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरेऽष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भरतखण्डे तत्रापि भारते वर्षे अमुकदेशे श्रीगङ्गायमुनयोरमुकादिग्भागे नर्मदाया अमुकप्रदेशे देवब्राह्मणानां सन्निधौ श्रीमन्नृपविक्रमार्कसमयतोऽमुकसम्मिते गताब्दगणे शालिवाहनस्य भूपतेरमुकसम्मिते गताब्दगणे श्रीविष्णोर्बौद्धावतारेऽस्मिन्वर्तमानेऽमुकनामसंवत्सरेऽमुकायनेऽमुकर्तावमुकमासेऽमुकपक्षेऽमुकतिथावमुकवासरेऽमुकनक्षत्रेऽमुकराशिस्थिते चन्द्रेऽमुकराशिस्थिते श्रीसूर्येऽमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथा यथा राशिस्थानस्थितेषु सत्स्वेवंगुणविशेषणविशिष्टायां शुभपुण्यतिथावमुकगोत्रोऽमुकशर्माहं मम आत्मनोऽशेषपापक्षयार्थं श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थमस्माकं सर्वेषां सकुटुम्बानां क्षेमस्थैर्यायुरारोग्यैश्वर्यदीर्घायुर्विपुलधनधान्यस्थिरलक्ष्मीपुत्रपौत्राद्यभिवृद्धिपूर्वकं मम इह जन्मनि जन्मान्तरे वा कृतकायिकवा

चिकमानसिकसांसर्गिकसमस्तपापक्षयार्थं ब्राह्मणद्वारा श्रीपरमेश्वरप्रीत्यर्थं पितृतो मातृतश्च दश पूर्वान्दशापरान्पुरुषानात्मानं चोद्धर्तुं परत्रानन्त कल्पविष्णुलोकवासोत्तरं विष्णुसायुज्यमुक्तिप्राप्तयेऽस्यां मूर्तौ लिङ्गे वा देवकलासान्निध्यार्थं यथाविभवदेशकालाद्यनुसारतोऽमुकमूर्तेर्लिङ्गस्य वा प्रतिष्ठां करिष्ये ॥ तदङ्गत्वेन गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्द्धारानान्दीश्राद्धमाचार्यादिवरणं दिग्रक्षणं पञ्चगव्य करणं भूमिपूजनमग्निस्थापनं देवतास्थापनादि कर्म च करिष्य इति संकल्प्य ॥ ततः स्ववामभागे कर्मार्थंजलपूरितकलशार्चनम् ॥ ॐतत्त्वांयामिब्रह्मणावन्दमानुस्तदाशास्ते यजमानोहुविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसुमानआयुःप्रमोषीः ॥ ॐभूर्भुवः स्वः अपां पतये वरुणाय नमः आवाहनं समर्पयामि । ॐभूर्भुवः स्वः अपां० वरुणाय नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि । इति संपूज्याभिमन्त्रयेत् । ॐ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ १ ॥ कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ २ ॥ अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥ इत्याद्यभिमन्त्र्य गङ्गाद्यावाहनम् ॥ गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धु कावेरि जलेऽस्मिन्सन्निधिं कुरु ॥ १ ॥ अस्मिन्कलशे सर्वाणि तीर्थान्यावाहयामि पूजयामि नमस्करोमीत्यावाह्य कलशस्य मुखे विष्णुरित्यादि प्रार्थयेत् । ततः कलशोदकेन संभारान्स्वात्मानं च दूर्वाभिः संप्रोक्षयेत् ॥ ॐ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ १ ॥ योवः० ॥ २ ॥ तस्माअरं० ॥ ३ ॥ अथ दीपपूजनम् । भो दीप त्वं ब्रह्मरूप ह्यन्धकारनिवारक । इमां मया कृतां पूजां गृह्णँस्तेजः प्रवर्धय ॥ १ ॥ दीपाय नमः गन्धाक्षतपुष्पाणि स० ॥ गणपतिपूजनम् । तत्रादौ ध्यानम् । श्वेताङ्गं श्वेतवस्त्रं सितकुसुमगणैः पूजितं श्वेतगन्धैः । क्षीराब्धौ रत्नदीपैः सुरुतरुविमले रत्नसिंहासनस्थम् ॥ दोर्भिः पाशाङ्कुशेष्टाभयधृतिविशदं चन्द्रमौलिं त्रिनेत्रं ध्यायेच्छान्त्यर्थमीशं

गणपतिममलं श्रीसमेतं प्रसन्नम् ॥ इति ध्यानम् । पुष्पाण्यादाय । हे हेरम्ब त्वमेह्येहि ह्यम्बिकात्र्यम्बकात्मज । सिद्धिबुद्धिपते त्र्यक्ष लक्षलाभपितुः पितः ॥ १ नागास्य नागहार त्वं गणराजचतुर्भुज ॥ भूषितः स्वायुधैर्दिव्यैः पाशाङ्कुशपरश्वधैः ॥ २ ॥ आवाहयामि पूजार्थं रक्षार्थं च मम क्रतोः । इहागत्य गृहाण त्वं पूजां यागं च रक्ष मे ॥ ३ ॥ ॐ गुणानान्त्वागुणपतिꣳहवामहेप्रियाणान्त्वाप्रियपतिꣳहवामहेनिधीनान्त्वानिधिपतिꣳहवामहेवसोमम ॥ आहमजानि गर्ब्भधमात्वमजासिगर्ब्भधम् ॥ १ ॥ ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणपतये नमः आवाहनं स० ॥ आसनम् ॥ रम्यं सुशोभनं दिव्यं सर्वसौख्यकरं शुभम् । आसनं च मया दत्तं गृहाण परमेश्वर ॥ ॐ पुरुषऽएवेदꣳसर्व्वंयद्भूतंयच्चभाव्यम् । उतामृतत्त्वस्येशानोयदन्नेनातिरोहति ॥ २ ॥ ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणपतये नमः, आसनं स० ॥ पाद्यम् ॥ उष्णोदकं निर्मलं च सर्वसौगन्ध्यसंयुतम् । पादप्रक्षालनार्थाय दत्तं ते प्रतिगृह्यताम् ॥ ॐएतावानस्यमहिमातो ज्यायांश्च पूरुषः ॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवि ॥ ३ ॥ ॐ भूर्भुवः स्वः सि०म०ग० पाद्यं स० ॥ अर्घ्यम् ॥ ताम्रपात्रे स्थितं तोयं गन्धपुष्पफलान्वितम् । सहिरण्यं ददाम्यर्घ्यं गृहाण गणनायक ॥ ॐ त्रिपादूर्ध्वऽउदैत्पुरुषःपादोस्येहाभवत्पुनः ॥ ततोविष्वङ्व्य क्रामत्साशनानशनेअभि ॥ ४ ॥ ॐभू० सि० म०ग०अर्घ्यं स० ॥ आचमनम् ॥ सर्वतीर्थसमायुक्तं सुगन्धि निर्मलं जलम् । आचामार्थं मया दत्तं गृहाण परमेश्वर । ॐततोविराडजायतविराजोऽअधिपूरुषः ॥ सजातोऽअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ ५ ॥ ॐ भू० सि०म०ग० आचमनं स० ॥ पञ्चामृतस्नानम् ॥ तत्रादौ पयःस्नानम् ॥ ॐपयः पृथिव्यांपयओषधीषुपयोदिव्यन्तरिक्षेपयोधाः ॥ पयस्वतीःप्र दिशःसन्तुमह्यम् । ॐ भू० सि०म०ग०पयःस्नानं स० ॥ दधिस्नानम् ॥ ॐ दधिक्राव्णोअकारिषञ्जिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमु खाकरत्प्रणआयूꣳषितारिषत् ॥ ॐ भू० सि० म० ग० दधिस्नानं स० । घृतस्नानम् । ॐ घृतंघृतपावानःपिबतवसांवसापावानःपिबतान्तरिक्षस्य

हविरसिस्वाहा ॥ दिशःप्रदिशआदिशोविदिशउद्दिशोदिग्भ्यःस्वाहा ॥ ॐ भू० सि० म० ग० घृतस्नानं स० ॥ मधुस्नानम् ॥ ॐ मधुवाताऽऋतायतेमधुक्षरन्तिसिन्धवः ॥ माध्वीर्न्नःसन्त्वोषधीः ॥ १ ॥ ॐ मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः ॥ मधुद्यौरस्तुनःपिता ॥ २ ॥ ॐ मधुमान्नोवनस्पतिर्मधुमाँ२ अस्तुसूर्यः ॥ माध्वीर्गावोभवन्तुनः ॥ ३ ॥ ॐ भू० सि० म० ग० मधुस्नानं स० ॥ शर्करास्नानम् ॥ ॐ अपाꣳ रसमुद्वयसꣳसूर्येसंतꣳसमाहितम् ॥ अपाꣳरसस्ययोरसस्तंवोगृह्णाम्युत्तममुपयामगृहीतोसीन्द्रायत्वाजुष्टंगृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् ॥ ॐ भू० सि० म० ग० शर्करोदकस्नानं स० ॥ उद्वर्तनस्नानम् ॥ नानासुगन्धद्रव्यं च चन्दनं रजनीयुतम् ॥ उद्वर्तनं मया दत्तं गृहाण गणनायक ॥ ॐ गन्धर्वस्त्वाविश्वावसुःपरिदधातुविश्वस्यारिष्टयैयजमानस्यपरिधिरस्यग्निरिडईडितः ॥ ॐ भू० सि० म० ग० उद्वर्तनस्नानं स० ॥ सर्वोपचारार्थे गन्धाक्षतपुष्पाणि स० ॥ अभिषेकः ॥ ॐ आपोहि० । योवः० । तस्मा० ॐ भू० सि० म० ग० अभिषेकं० ॥ शुद्धस्नानम् ॥ कावेरी नर्मदा वेणी तुङ्गभद्रा सरस्वती ॥ गङ्गा च यमुनाऽऽसां वाः स्नानार्थं प्रतिगृह्यताम् ॥ ॐ वरुणस्योत्त० ॥ ॐ भू० सि० म० ग० शुद्धोदकस्नानं स० ॥ वस्त्रम् ॥ सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे । मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् ॥ ॐ युवासुवासाःपरिवीतआगात्सउश्रेयान्भवति जायमानः ॥ तंधीरासःकवयउन्नयन्तिस्वाध्योमनसादेवयन्तः ॥ ॐ भू० सि० म० ग० वस्त्रं स० ॥ आचमनम् ॥ यज्ञोपवीतम् ॥ ॐ नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् । उपवीतं मया दत्तं गृहाण परमेश्वर ॥ ॐ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनऽआवः । सबुध्न्याऽउपमाऽअस्य विष्ठाःसतश्चयोनिमसतश्चविवः ॥ ॐ भू० सि० म० ग० यज्ञो० ॥ आचमनम् ॥ गन्धम् ॥ श्रीखण्डं चन्दनं दिव्यं केशरादिसमन्वितम् ॥ विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम् ॥ ॐ त्वांगन्धर्वाअखनँस्त्वामिन्द्रस्त्वांबृहस्पतिः ॥ त्वामोषधेसोमोराजाविद्वान्यक्ष्मादमुच्यत । ॐ भू० सि० म० ग०

गन्धं स० ॥ अक्षताः ॥ अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभिताः ॥ मया निवेदिता भक्त्या गृहाण गणनायक ॥ ॐ अक्षन्नमीमदन्तह्यवंप्रि
याऽअंधूषत ॥ अस्तोंषतस्वभांनवोविप्रानविंष्ठयामती॥योजान्विन्द्रतेहरीं ॥ ॐ भू० सि० म० ग० अक्षतान्स० ॥ दूर्वाङ्कुरान् ॥ ॐ काण्डांत्काण्डा
त्प्ररोहंन्तीपरुंषःपरुंषस्परिं ॥ एवानोंदूर्वेप्रतंनुसहस्रेंणशतेनं च ॥ ॐ भू० सि० म० ग० दूर्वाङ्कुरान्स० ॥ पुष्पम् ॥ सुमाल्यानि सुगन्धीनि
मालत्यादीनि वै प्रभो ॥ मया हृतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम् ॥ ॐ यत्पुरुंषंव्यंदधुःकतिधाव्यंकल्पयन् ॥ मुखङ्किंमस्यासीत्तिंकबाहूकिंमूरू
पादांउच्येते ॥ ॐ भू० सि० म० ग० पुष्पं स० ॥ परिमलसौभाग्यद्रव्यम् ॥ ॐ अहिंरिवभोगैःपर्येतिबाहुञ्ज्यायांहेतिंपरिबाधंमानः ॥ हस्त
घ्नोविश्वांवयुनांनिविद्वान्पुमान्पुमांसंपरिंपातुविश्वतंः ॥ ॐ भू० सि० म० ग० सौभाग्यद्रव्यं स० ॥ धूपम् ॥ वनस्पतिरसोद्भूतो
गन्धाढ्यो गन्ध उत्तमः ॥ आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ ॐ धूरंसिधूर्वधूर्वन्तंधूर्वतंयोऽस्मान्धूर्वतितंधूर्वंयंवयंधूर्वांम ः ॥ देवानां
मसिवह्नितमःसस्नितमंपप्रिंतमञ्जुष्टंतमंदेवहूतंमम् ॥ ॐ भू० सि० म० ग० धूपं स०॥दीपम्॥साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया॥दीपं गृहाण
देवेश त्रैलोक्यतिमिरापहम्॥ॐचन्द्रमामनंसोजातश्चक्षोःसूर्य्योंऽ अजायत ॥श्रोत्रांद्वायुश्चंप्राणश्चमुखांदग्निरंजायत ॥ ॐ भू० सि० म० ग० दीपं स०॥
नैवेद्यम् ॥ शर्कराघृतसंयुक्तं मधुरं स्वादु चोत्तमम् ॥ उपहारसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ॥ ॐ नाभ्यांआसीदन्तरिंक्षःशीर्ष्णोंद्यौःसमंवर्त
त ॥ पद्भ्याम्भूमिर्दिशःश्रोत्रात्तथांलोकाँ २ अंकल्पयन् ॥ ॐ भू० सि० म० ग० नैवेद्यं स० ॥ आचमनम् ॥ शीतलं निर्मलं तोयं कर्पूरेण समन्वितम् ।
आचमार्थं मया दत्तं गृहाण गणनायक ॥ ॐ भू० सि० म० ग० आचमनीयं स० ॥ फलम् ॥ ॐ याःफलिनीर्याअंफलाअंपुष्पायाश्चंपुष्पिणीः ॥
बृहस्पतिंप्रसूतास्तानोंमुञ्चन्त्वंहसः ॥ ॐ भू० सि० म० ग० फलं स० ॥ तांबूलम् ॥ पूगीफलं महद्दिव्यं नागवल्लीदलै
र्युतम् । एलादिचूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ ॐ भू० सि० म० ग० ताम्बूलं स० ॥ दक्षिणाम् ॥ हिरण्यगर्भगर्भस्थं

हेम बीजं विभावसोः ॥ अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ ॐ हिरण्यगर्भःसमवर्त्तताग्रेभूतस्यंजातःपतिरेकआसीत् ॥ सदाधार
पृथिवीन्द्यामुतेमांकस्मैदेवायहविषाविधेम ॥ ॐ भू० सि० म० ग० दक्षिणां स० ॥ आरार्तिकम् ॥ ॐ इदꣳहविःप्रजननम्मेअस्तुदशवीरꣳ सर्वगण
ꣳस्वस्तये ॥ आत्मसनिप्रजासनिपशुसनिलोकसन्यभयसनि ॥ अग्निःप्रजांबहुलांमेकरोत्वन्नंपयोरेतोअस्मासुधत्त ॥ ॐ भू० सि० म० ग० आरा
र्तिकं स० ॥ पुष्पाञ्जलिः ॥ ॐ नमोगणेभ्योगणपतिभ्यश्चवोनमोनमोव्रातेभ्योव्रातपतिभ्यश्चवोनमोनमोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमोनमोविरूपे
भ्योविश्वरूपेभ्यश्चवोनमः ॥ ॐ भू० सि० म० ग० मन्त्रपुष्पाञ्जलिं स० ॥ विशेषार्घः ॥ रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक । भक्तानामभयं
कर्ता त्राता भव भवार्णवात् ॥ १ ॥ द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो । वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ॥ २ ॥ गृहाणार्घ्य
मिदं देव सर्वदेवनमस्कृत ॥ अनेन सफलार्घ्येण फलदोऽस्तु सदा मम ॥ ३ ॥ ॐ भू० सि० म० ग० विशेषार्घ्यं स० ॥ अथ प्रार्थना ॥ विघ्ने
श्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय ॥ नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते ॥ १ ॥
भक्तार्तिनाशनपराय गणेश्वराय सर्वेश्वराय शुभदाय सुरेश्वराय ॥ विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवरदाय नमो नमस्ते
॥ २ ॥ नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः ॥ नमस्ते रुद्ररूपाय करिरूपाय ते नमः ॥ ३ ॥ विश्वरूपस्वरूपाय नमस्ते ब्रह्मचारिणे ॥
भक्तप्रियाय देवाय नमस्तुभ्यं विनायक ॥ ४ ॥ लम्बोदर नमस्तुभ्यं सततं मोदकप्रिय । निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ ॐ भूर्भुवः
स्वः सि० म० ग० प्रार्थनापूर्वकनमस्कारं स० ॥ अनया पूजया श्रीगणेशः साङ्गः सपरिवारः प्रीयताम् ॥ इति गणपतिपूजनम् ॥ अथ ( दानखण्डे आश्व



---

१ स्वशाखायामनुक्तत्वात्परशाखीयमपीदं गृह्यते "यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत् ॥ विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्" इति छन्दोगपरिशिष्टवचनात् ॥ शाखान्तरीय परिशिष्टमन्यशाखिनां न भवतीति तु निर्मूलमेव ।

लायनगृह्यपरिशिष्टोक्तः ) स्वस्ति पुण्याहवाचनप्रयोगः ॥ स्वपुरतः शुद्धायां भूमौ पञ्चवर्णैस्तण्डुलैर्वाष्टदलंकरणम् ॥ तत्र महीद्यौरिति भूमिस्पर्शः ॥ ॐ मुहीद्यौः पृथिवी चन इमं युज्ञम्मिमिक्षताम् ॥ पिपृतान्नो भरीमभिः ॥ १ ॥ तत्रौषधयः समिति यवप्रक्षेपः । ॐ ओषधयः सं वदन्तु सोमेन सुह राज्ञा ॥ यस्मै कृणोति ब्राह्मुणस्तꣳ राजन्पारयामसि ॥ २ ॥ आजिघ्रेति ताम्रकलशं स्थापयेत ॥ ॐ आजिघ्र कुलशं म्मुह्या त्वा विशुन्त्विन्दवः ॥ पुनरूुर्जा निवर्तस्व सा नः सुहस्रं धुक्ष्वोरुधारा पयस्वती पुनुर्म्मा विशताद्रयिः ॥ ३ ॥ वरुणस्योत्तम्भनमिति कलशे जलं पूरयेत् ॥ ॐ व्वरुणस्योत्तम्भनमसि व्वरुणस्य स्कम्भसर्ज्जनी स्थो व्वरुणस्य ऽऋतुसदन्यसि व्वरुणस्य ऽऋतुसदनमसि व्वरुणस्य ऽऋतुसदनुमासीद ॥ ४ ॥ त्वां गन्धर्वेति गन्धप्रक्षेपः ॥ ॐ त्वां गन्धुर्वा ऽअखनँस्त्वामिन्द्रुस्त्वाम्बृहुस्पतिः ॥ त्वामोषधे सोमो राजा विद्वान्यक्ष्माद मुच्यत ॥ ५ ॥ याओषधीरिति सर्वौषधीः ॥ ॐ याओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ॥ मनै नु बुभ्रूणामुहꣳ शुतं धामानि सुप्त च ॥ ६ ॥ काण्डात्काण्डादिति दूर्वाः । ॐ काण्डात्काण्डात्प्रुरोहन्ती परुषः परुषुस्परि ॥ एवा नो दूर्वे प्रतनु सुहस्रेण शुतेन च ॥ ७ ॥ अश्वत्थेवेति अश्वत्थादिपञ्चपल्लवान् ॥ ॐ अश्वुत्थे वो निषदनं पुर्णे वो वसुतिष्कृता ॥ गोभाज ऽइत्किलासथ यत्सुनवथ पूरुषम् ॥ ८ ॥ स्योनापृथिवीति सप्त मृदः ॥ ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी ॥ यच्छा नुः शर्म्म सुप्रथाः ॥ ९ ॥ याःफलिनीरिति फलम् ॥ ॐ याः फुलिनीर्य्या ऽअफुला ऽअपुष्पा याश्च पुष्पिणीः ॥ बृहुस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥ १० ॥ परिवाजपतिरिति पञ्च रत्नानि ॥ ॐ पुरि वाजपतिः कुविरुग्निर्हुव्यान्यक्रमीत् ॥ दुधुद्रत्नानि दाशुषे ॥ हिरण्यगर्भेति हिरण्यम् ॥ ॐ हिरुण्युगुर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकं आसीत् ॥ स दाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हुविषा विधेम ॥ १२ ॥ युवासुवासेति रक्तसूत्रेण कलशं वेष्टयेत् ॥ ॐ युवा सुवासाः परिवीत आगात्स उ श्रेयान्भवति जायमानः ॥ तन्धीरासः कुवय उन्नयन्ति स्वाध्यो मन

१ अस्य रचनाप्रकारस्तु भद्रमार्तण्डे द्रष्टव्यः । २ अस्मिन् कलशे हिरण्यं ( सुवर्णं ) तु प्रक्षेप्तव्यमेव, स्वर्णपूर्णकलशमित्यग्रे वक्ष्यमाणत्वात् ।

सादेवयन्तः ॥ १३ ॥ पूर्णादर्वीति पूर्णपात्रमुपरि न्यसेत् ॥ ॐ पूर्णादर्व्वि परापत सुपूर्णा पुनरापत ॥ वस्नेव विक्रीणावहा इषमूर्जं शतक्रतो ॥ १४ ॥ तत्त्वायामीति वरुणमावाह्य ॥ ॐ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणेह बोध्युरुशꣳस मान आयुः प्रमोषीः ॥ १५ ॥ ॐ वरुणं साङ्गं सपरिवारमावाहयामीत्यावाह्य ॥ ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञꣳ समिमन्दधातु ॥ विश्वेदेवास इह मादयन्तामो ३ म्प्रतिष्ठ ॥ १६ ॥ ॐ वरुणाय नमः सुप्रतिष्ठितो वरदो भव ॥ इति प्रतिष्ठाप्य ॥ ततः ॐ [2]अपां पतिवरुणाय नम इत्यनेन मन्त्रेण वरुणं गन्धादिपञ्चोपचारैरभ्यर्च्य कलशमभिमन्त्रयेत् ॥ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ॥ मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ १ ॥ कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा ॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ २ ॥ अंगैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥ ३ ॥ इत्यभिमन्त्र्य तत्र तीर्थान्यावाहयेत् ॥ अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा ॥ आयान्तु मम शान्त्यर्थं दुरितक्षयकारिकाः ॥ १ ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ॥ आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ॥ २ ॥ इत्यावाह्य ॥ ॐ गायत्र्यादिभ्यो नम इति संपूज्य प्रार्थयेत् ॥ देवदानवसंवादे मथ्यमाने महोदधौ ॥ उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥ १ ॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ॥ त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ २ ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ॥ आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ ३ ॥ त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ॥ त्वत्प्रसादादिदं कर्म कर्तुमीहे जलोद्भव ॥ ४ ॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ ॐ पाशपाणे नमस्तुभ्यं पद्मिनीजीवनायक। पुण्याहवाचनं यावत्तावत्त्वं सन्निधौ भव ॥ ५ ॥ इति संप्रार्थयेत् ॥ ततो ( यजमानः ) अवनिकृतजानुमण्डलः कमलमुकुल



१ अत्र " भो वरुण त्वम् " इति योज्यम् । २ अत्र " अप्पतये " इत्युचितं प्रतिभाति ।

सदृशमञ्जलिं शिरस्याधाय ( आचार्यः स्व ) दक्षिणेन पाणिना स्वर्णपूर्णकलशं[2] ( यजमानाञ्जलौ ) धारयित्वा आशिषः प्रार्थयते ॥ दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च ॥ ॐ त्रीणिपदाविचक्रमेविष्णुर्गोपाऽअदाभ्यः ॥ अतोधर्माणिधारयन् ॥ १ ॥ तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु[3] । ब्राह्मणानां[4] हस्तेषु सुप्रोक्षितमस्तु । ॐ शिवा आपः सन्तु इति जलं दद्यात् ॥ सन्तु शिवा आप इति प्रतिवचनम् ॥ ॐ सौमनस्यमस्तु इति पुष्पम् ॥ अस्तु सौमनस्यम् ॥ ॐ अक्षतं[5] चारिष्टं चास्तु, इत्यक्षतान् ॥ अस्त्वक्षतमरिष्टं च ॥ ॐ गन्धाः पान्तु सौमङ्गल्यं चास्त्विति भवन्तो ब्रुवन्तु, इति गन्धम् ॥ गन्धाः पान्तु सौमङ्गल्यं चास्स्तु ॐ । अक्षताः[6] पान्तु आयुष्यमस्त्विति भव०, इत्यक्षतान् ॥ अक्षताः पान्तु आयुष्यमस्तु ॥ ॐ पुष्पाणि पान्तु सौश्रियमस्त्विति भव०, इति पुष्पाणि ॥ पुष्पाणि० मस्तु ॥ ॐ सफलताम्बूलानि पान्तु ऐश्वर्यमस्त्विति भ०, इति सपूगीफलताम्बूलम् ॥ सफलताम्बूलानि० ऐश्वर्यमस्तु ॥ ॐ दक्षिणाः पान्तु बहु धनमस्त्विति भवन्तो०, इति दक्षिणाम् ॥ दक्षिणाः पान्तु बहु० ॥ पुनरत्राः[7] पान्तु स्वर्चितमस्त्विति विप्राः । ततो यजमान आचार्यादीन्प्रणम्य । ॐ श्रीर्यशो विद्या विनयो वित्तं

---

१ स्वर्णः इति सविसर्गपाठे तु केवलं शुद्धोदकम् । २ कलशधारणमिदमाचार्यकर्तृकं धारयित्वेति णिजन्तनिर्देशात् । आचार्य उदकुम्भं तं धारयेत्तदनन्तरमिति परशुरामकारिकोक्तेश्च ॥ ३ इति मन्त्रेण कलशं स्वशिरसा पत्नीशिरसा च संयोज्य कलशस्थाने कलशं स्थापयित्वा पुनर्गृहीत्वा समन्त्रं तथैव इति त्रिवारं कुर्यात् । ततः कर्ता । ४ अत्र सर्वे विप्रा उदङ्मुखा युग्माश्चोपवेश्यास्तत्र प्रमाणम्–" स्वयं प्राङ्मुखस्तानुदङ्मुखान् स्वस्ति वाचयेत्" इत्याश्वलायनः । अन्यत्रापि–पुण्याहवाचने विप्रा युग्मा वेदविदाः शुभाः । गन्धपुष्पार्चिताः शुद्धाः सोत्तरीयाः कुशायुधाः ॥ यज्ञोपवीतिनः शस्ता इत्यादि । ५ अक्षतं–क्षतरहितं, ( मे ) अरिष्टं–सूतिकागारं, अस्तु–भवत्वित्यर्थः । अरिष्टं सूतिकागृहमित्यमरः । क्षणु हिंसायां, नपुंसके भावे क्तः । ६ अत्र पुंस्त्वे सन्देहः । लाजाः पुंभूम्नि चाक्षता इत्यमरवाक्यात्कथञ्चित्समाधिः । अक्षतास्तु यवाः प्रोक्ता अभावे व्रीहयः स्मृताः । तदभावे च गोधूमा न तु खण्डिततण्डुलाः ॥ इति परशुरामोक्तेरक्षतशब्देन द्रव्यग्रहणेऽपरा संशितिरिति दिक् । ७ अत्रेदं युक्तं कर्ता "स्वार्चितमस्तु" इति जलं विप्रकरेषु दद्यात्, अस्त्वार्चितमिति विप्रा ब्रूयुः ॥

बहुपुत्रमारोग्यमायुष्यं चास्त्विवति भवन्तो ब्रुवन्त्विवति वदेत् ॥ ततो द्विजाः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रमारोग्यमायुष्यं चास्त्विवति वदेयुः ॥ अनन्तरं दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्त्विवति यजमानमूर्ध्न्यभिषिञ्चेयुः ॥ ( ततः कर्ता ) यं कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते तमहमोङ्कारमादिं कृत्वा ऋग्यजुःसामाथर्वाशीर्वचनं बहृषिमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये ( इति वदेत् ) । ॐ वाच्यताम् इति विप्राः । अथाशीर्वादमन्त्रान्पठेत् । ॐ भद्रंकर्णेभिःशृणुयामदेवाभद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहिदेव हितंयदायुः ॥ १ ॥ देवानाम्भद्रासुमतिर्ऋजूयतान्देवानाꣳरातिरभिनोनिवर्तताम् । देवानाꣳसख्यमुपसेदिमावयन्देवानऽआयुःप्रतिरन्तु जीवसे ॥ २ ॥ नतद्रक्षाꣳसिनपिशाचास्तरन्तिदेवानामोजःप्रथमजꣳह्येतत् ॥ योबिभर्तिदाक्षायणꣳहिरण्यꣳसदेवेषुकृणुतेदीर्घमायुःसमनुष्येषुकृणुतेदीर्घमायुः ॥ ३ ॥ दीर्घायुस्तऽओषधेखनितायस्मैचत्वाखनाम्यहम् ॥ अथोत्वंदीर्घायुर्भूत्वा शतवल्शाविरोहतात ॥ द्रविणोदाद्रविणसस्तु रस्यंद्रविणोदाःसनरस्यप्रयंसत् ॥ द्रविणोदावीरवतीविशंनोद्रविणोदारासतेदीर्घमायुः ॥ ४ ॥ सवितापश्चात्तात्सविता पुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ॥ सवितानःसुवतुसर्वतातिंसवितानोरासतांदीर्घमायुः ॥ ५ ॥ नवोनवोभवतिजायमानोऽह्नांकेतुरुषसामेत्यग्रम् ॥ भागंदेवेभ्योविदधात्यायं प्रचन्द्रमास्तिरतेदीर्घमायुः ॥ ६ ॥ उच्चादिविदक्षिणावन्तोऽअस्थुर्येअश्वदाःसहतेसूर्येण ॥ हिरण्यदाअमृतत्वंभजन्तेवासोदाःसोमप्रतिरन्तआयुः ॥ ७ ॥ इत्याशीर्वादमन्त्राः ॥ व्रतजपनियमतपःस्वाध्यायक्रतुदयादमदानविशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम् इति यजमानः । समाहितमनसः स्मः । इति द्विजाः ॥ प्रसीदन्तु भवन्तः । इति यजमानो ब्रूयात् । प्रसन्नाः स्मः । इति द्विजा ब्रूयुः ॥ ततो यजमानो ब्रूयात् । ॐ मम गृहे शान्तिरस्तु । द्विजाः अस्त्विवति[1] प्रतिवचनं सर्वत्र दद्युः ॥ ॐ पुष्टिरस्तु । ॐ तुष्टिरस्तु । ॐ वृद्धिरस्तु । ॐ अविघ्नमस्तु । ॐ आयु

१ अत्र सर्वत्र अस्तु, सम्पद्यन्ताम्, प्रीयताम्, प्रीयेताम्, प्रीयन्ताम्, हताः, यान्तु, शाम्यन्तु, वर्धन्ताम्, सन्तु, स्याताम्, वर्षतु, पच्यन्ताम्, कल्पतामित्यादिस्थलेषु विप्राःकर्तृवाक्यानुरो

ष्यमस्तु । ॐ आरोग्यमस्तु । ॐ शिवमस्तु । ॐ शिवं कर्मास्तु । ॐ कमसमृद्धिरस्तु । ॐ धर्मसमृद्धिरस्तु । ॐ वेदसमृद्धिरस्तु । ॐ शास्त्रसमृद्धिरस्तु । ॐ धनधान्यसमृद्धिरस्तु । ॐ पुत्रपौत्रसमृद्धिरस्तु । ॐ इष्टसम्पदस्तु ( बहिर्देशे ) ॐ सर्वारिष्टनिरसनमस्तु । ॐ यत्पापं रोगोऽशुभमकल्याणं तद्दूरे प्रतिहतमस्तु ॥ ( पुनः शिरसि समाचारात ) ॐ यच्छ्रेयस्तदस्तु । ॐ उत्तरे कर्मणि निर्विघ्नमस्तु । ॐ उत्तरोत्तरमहरहरभिवृद्धिरस्तु । ॐ उत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यन्ताम् । ॐ इष्टाः कामाः सम्पद्यन्ताम् । ॐ तिथिकरणमुहूर्तनक्षत्रग्रहलग्नसंपदस्तु ॥ उदकसेकः ॥ ॐ तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्ताम् । ॐ तिथिकरणे समुहूर्ते सनक्षत्रे सग्रहे साधिदेवते प्रीयेताम् । ॐ दुर्गापाञ्चाल्यौ प्रीयेताम् । ॐ अग्निपुरोगा विश्वेदेवाः प्रीयन्ताम् । ॐ इन्द्रपुरोगा मरुद्गणाः प्रीयन्ताम् । ॐ माहेश्वरीपुरोगा उमामातरः प्रीयन्ताम् । ॐ वशिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम् । ॐ अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम् । ॐ ऋषयश्छन्दांस्याचार्या वेदा देवा यज्ञाश्च प्रीयन्ताम् । ॐ विष्णुपुरोगाः सर्वे देवाः प्रीयन्ताम् । ॐ ब्रह्मपुरोगाः सर्वे वेदाः प्रीयन्ताम् । ॐ ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम् । ॐ श्रीसरस्वत्यौ प्रीयेताम् । ॐ श्रद्धामेधे प्रीयेताम् । ॐ भगवती कात्यायनी प्रीयताम् । ॐ भगवती माहेश्वरी प्रीयताम् । ॐ भगवती ऋद्धिकरी प्रीयताम् । ॐ भगवती सिद्धिकरी प्रीयताम् । ॐ भगवती पुष्टिकरी प्रीयताम् । ॐ भगवती तुष्टिकरी प्रीयताम् । ॐ भगवंतौ विघ्नविनायकौ प्रीयेताम् । ॐ भगवान्स्वामी महासेनः सपत्नीकः ससुतः सपार्षदः सर्वस्थानगतः प्रीयताम् । ॐ हरिहरहिर

—धेन विभक्तिविपरिणामपुरस्सरं प्रतिवचनानि दद्युः । अत्र यजमानमूर्ध्नि जलसेचनमक्षतप्रक्षेपो वा सामाचारिक एवेति ज्ञेयम् । १ वस्तुतस्तु एषां वाचनमेव, दानखण्डे तथैवोक्तत्वात्, तेन कर्तुशिरसि जलाक्षतप्रक्षेपोऽशास्त्रीय एवेति ज्ञेयम् । अत्र कर्ता इमानि वाक्यानि पठन् प्रतिवाक्यं पात्रे जलं पातयेत्, तत्रारिष्टनिरसनेति । यत्पापमिति चेति द्वाभ्यां हताश्च ब्रह्मद्विष इत्यादिभिस्सप्तवाक्यैश्च पात्राद् बहिर्वामपार्श्वे जलं पातनीयमिति सम्प्रदायः ।

ण्यगर्भाः प्रीयन्ताम् । ॐ सर्वाः कुलदेवताः प्रीयन्ताम् । ॐ सर्वा ग्रामदेवताः प्रीयन्ताम् । ॐ सर्वा वास्तुदेवताः प्रीयन्ताम् । ( बहिः ) ॐ हता ब्रह्मद्विषः । ॐ हताः परिपान्थिनः । ॐ हता अस्य कर्मणो विघ्नकर्तारः । ॐ शत्रवः पराभवं यान्तु । ॐ शाम्यन्तु घोराणि । ॐ शाम्यन्तु पापानि । ॐ शाम्यन्त्वीतयः । ॐ शुभानि वर्द्धन्ताम् । ॐ शिवा आपः सन्तु । ॐ शिवा ओषधयः सन्तु । ॐ शिवा वनस्पतयः सन्तु । ॐ शिवा नद्यः सन्तु । ॐ शिवा गिरयः सन्तु । ॐ शिवा अतिथयः सन्तु । ॐ शिवा अग्नयः सन्तु । ॐ शिवा आहुतयः सन्तु । ॐ अहोरात्रे शिवे स्याताम् । ॐ निकामेनिकामेनः पुर्ज्जन्यौवर्षतुफलवत्योनऽओषधयः पच्च्यन्तांयोगक्षेमोनः कल्पताम् ॥ १ ॥ ॐ शुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम् । ॐ भगवान्नारायणः प्रीयताम् । ॐ भगवान्पर्जन्यः प्रीयताम् । ॐ भगवान् स्वामी महासेनः प्रीयताम् । ॐ पुण्याहकालान्वाचयिष्ये । इति यजमानः । ॐ वाच्यतामिति विप्रप्रतिवचनम् । ॐ ब्राह्म्यं पुण्यं महद्यच्च सृष्ट्युत्पादनकारकम् । वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः ॥ १ ॥ भो ब्राह्मणा मह्यं सकुटुंबिने महाजनान्नमस्कुर्वाणायाशीर्वचनमपेक्षमाणाय मया क्रियमाणस्यामुकदेवप्रतिष्ठाख्यस्य कर्मणः पुण्याहं भवन्तो ब्रुवन्तु । अस्तु पुण्याहमिति द्विजाः । एवं त्रिः पठित्वा । ॐ पुनन्तुमादेव जनाःपुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानिजातवेदः पुनीहिमा ॥ १ ॥ पृथिव्यामुद्धृतायान्तु यत्कल्याणं पुरा कृतम् । ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तुः नः ॥ भो ब्राह्मणाः० मया० कर्मणः कल्याणं भवन्तो ब्रुवन्तु । अस्तु कल्याणमिति त्रिर्विप्राः ॥ ॐ यथेमांवाचंकल्याणीमावदानिजनेभ्यः ॥ ब्रह्मराजन्याभ्याꣳशूद्रायचार्य्यायचस्वायचारणायच ॥ प्रियोदेवानांदक्षिणायैदा

इदं वाक्यं सर्वत्र मन्दमध्यमतारस्वरेण यथाक्रमं त्रिवारं कर्त्रा वक्तव्यम् । विप्रैश्च पुण्याहादिशब्दास्तथैव वक्तव्या इति रुद्रकल्पद्रुमे शौनककाशिकायां चापि—पुण्याहादेस्त्रिरभ्यासं मन्दमध्योच्चनिःस्वनैः । आश्रयेरन्निमे सर्वे यथागमपरम्परा ॥ इति ॥

तुरिहभूयासमुयम्मेकामुःसमृध्यतामुपमादोनमतु ॥ २ ॥ सागरस्य यथा वृद्धिर्महालक्ष्म्यादिभिः कृता ॥ सम्पूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवन्तु नः ॥ भो ब्राह्मणाः० मया० कर्मणः ऋद्धिं भवन्तो ब्रुवन्तु । कर्म ऋध्यतामिति त्रिर्विप्राः ॥ ऋद्धिः समृद्धिः । ॐ सुत्रस्युऋद्धिरुस्यगे न्मुज्योतिरमृताअभूम ॥ दिवंःपृथिव्या अध्यारुहामाविदामदेवान्स्वुर्ज्योतिः ॥ ३ ॥ स्वस्तिरस्तु[1] याऽविनाशाख्या पुण्यकल्याणवृद्धिदा ॥ विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवन्तु नः ॥ भो ब्राह्मणाः० मया कर्मणः[2] स्वस्तिं[3] भवन्तो ब्रुवन्तु । आयुष्मते स्वस्तीति त्रिः० ॥ ॐ स्वुस्तिनुइन्द्रोवृद्धश्रवाःस्वुस्तिनःपूषाविश्ववेदाः ॥ स्वुस्तिनुस्ताक्ष्यौऽअरिष्टनेमिःस्वुस्तिनोबृहुस्पतिर्दधातु ॥ ४ ॥ समुद्रमथनाज्जाता जगदानन्दकारिका ॥ हरिप्रिया च माङ्गल्या तां श्रियं च ब्रुवन्तु नः ॥ भो ब्राह्मणाः० मया० कर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्तु । अस्तु श्रीरिति त्रिः० ॥ ॐ श्रीश्चते लक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणि रूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मइषाण ॥ ९ ॥ अस्मिन्पुण्याहवाचने न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनाच्छ्रीमहागणपतिप्रसादाच्च सर्वः परिपूर्णोऽस्तु । ॐ अस्तु परिपूर्णः इति द्विजाः ॥ अथाभिषेकः[4] ॥ एकस्मिन्पात्रे कलशोदकं गृहीत्वा चत्वारो ब्राह्मणा[5] अविधुरा दूर्वाम्रपल्लवैर्यजमानमभिषिञ्चेयुः । तत्र मन्त्राः । ॐ पयः पृथिव्यांपयुओषधीषुपयोदिव्युन्तरिक्षेपयोधाः ॥ पयस्वतीःप्रदिशःसन्तुमह्यम् ॥ १ ॥ ॐ पञ्चनुद्युःसरस्वतीमापियंतिसस्रोतसः ।

---

१ अत्रेदं पदमनव्ययं पुराणेषु वेदे च बहुत्र " स्वस्तये वायुमुपब्रवामहै " इत्यादि दर्शनात् । २अत्र " कर्मणे " इति साधुस्तत्र " नमः स्वस्ति स्वाहा"इत्यादिना स्वस्तियोगे चतुर्थी युक्ता । ३ अव्ययादाप्सुप इति विभक्तेर्लुक् । ४ अत्राभिषेके पत्नीं कर्तुर्वामत उपवेशयेत् । तत्र प्रमाणानि–संस्कारगणपतौ "वामे सिन्दूरदाने च वामे चैव द्विरागमे । वामेऽशनैकशय्यायां भवेज्जाया प्रियार्थिनी" इति । सुमंगलीरियं वधूरिति सूत्रव्याख्याने । धर्मप्रवृत्तौ । आशीर्वादेऽभिषेके च पादप्रक्षालने तथा । शयने भोजने चैव पत्नी तूत्तरतो भवेत् ॥ सर्वेषु धर्मकार्येषु पत्नी दक्षिणतः शुभा । अभिषेके विप्रपादक्षालने चैव वामतः, इति । वामे पत्नी त्रिषु स्थाने पितॄणां पादशोचने । रथारोहणकाले च ऋतुकाले सदा भवेदिति । ५ अत्र विप्रा उदङ्मुखास्ति-

सरस्वतीतुपंचधासोदेशेभवत्सरित् ॥ २ ॥ ॐ वरुणस्योत्तम्भनमसि वरुणस्यस्कंभसर्ज्जनीस्थोवरुणस्यऋतसदन्यसिवरुणस्यऋतसदनमासिवरु
णस्यऋतसदनमासीद ॥ ३ ॥ ॐ पुनन्तुमादेवजनाःपुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानिजातवेदःपुनीहिमा ॥ ४ ॥ ॐ देवस्यत्त्वासवितुः
प्रसुवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ सरस्वत्यैवाचोयन्तुर्यन्त्रियेदधामिबृहस्पतेष्ट्वासाम्राज्येनाभिषिंश्चाम्यसौ ॥ ५ ॥ ॐ देवस्यत्वा० सरस्वत्यैवा
चोयन्तुर्यन्त्रेणाग्नेःसाम्राज्येनाभिषिंश्चामि ॥ ६ ॥ ॐदेवस्यत्वा० हस्ताभ्याम् ॥ अश्विनोर्भैषज्येनतेजसेब्रह्मवर्चसायाभिषिंश्चामिसरस्वत्यैभैषज्ये
नवीर्य्यायान्नाद्यायाभिषिंश्चामीन्द्रस्येन्द्रियेणबलायश्रियैयशसेभिषिंश्चामि ॥ ७ ॥ ॐ विश्वानिदेवसवितर्दुरितानिपरासुव ॥ यद्भद्रंतन्नआसुव
॥ ८ ॥ ॐ धामच्छदग्निरिन्द्रोब्रह्मादेवोबृहस्पतिः । सचेतसोविश्वेदेवायज्ञंपान्तुनःशुभे ॥ ९ ॥ ॐ त्वंयविष्टदाशुषोनॄंपाहिशृणुधीगिरः ॥
रक्षातोकमुतत्मना ॥ १० ॥ ॐ अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः ॥ प्रप्रदातारन्तारिषऽउर्ज्जन्नोधेहिद्विपदेचतुष्पदे ॥ ११ ॥
ॐ द्यौः शान्तिरन्तरिक्षꣳशान्तिःपृथिवी शान्तिरापःशांतिरोषधयःशांतिः ॥ वनस्पतयः शांतिर्विश्वेदेवाःशांतिर्ब्रह्मशांतिःसर्वꣳशांतिः
शान्तिरेवशांतिःसामाशांतिरेधि ॥ १२ ॥ ॐ यतोयतःसमीहसे ततोनोऽअभयंकुरु ॥ शन्नः कुरुप्रजाभ्योभयन्नःपशुभ्यः ॥ १३ ॥
ॐ पालाशंभवतितेनब्राह्मणोभिषिश्चातिब्रह्मवैपलाशोब्रह्मणैवैनमेतदभिषिश्चाति ॥ अमृताभिषेकोऽस्तु ॥ ॐ शान्तिः शान्तिः शान्तिः
सुशान्तिर्भवतु ॥ अनेन पुण्याहवाचनेन श्रीप्रजापतिः प्रीयताम् ॥ इति पुण्याहवाचनम् ॥ अथ मातृकापूजनम् ॥ तत्रादौ षड्विनायकपूजनम् ।

---

-ष्ठन्त उपविष्टा वा दर्भपाणयश्च भवेयुः । "अभिषेकं मूर्ध्नि होमं मांगल्यं स्वस्तिवाचनम् । प्रैषं च मन्त्रपाठं च तिष्ठन् कुर्यात्सदैव हि" ॥ इति सर्वप्रायश्चित्तप्रयोगे लिखितत्वात् शिष्टाचाराच्च । १ ततोऽस्य कर्मणः सांगतार्थं पुण्याहवाचकेभ्यो विप्रेभ्यो यथाशक्ति दक्षिणा देया । "पुण्याहान्तेऽर्चयेद्विद्वान् दक्षिणाभिः स्वशक्तितः" इति हेमाद्रौ । "फलेन सफलावाप्तिः साङ्गता दक्षिणा क्षणात् ।" इति विष्णुपुराणे दर्शनात् ।

गोधूमादिधान्यपुञ्जेषु हरिद्रारंजितेषु संस्थाप्याः । ॐ मोदाय नमः। मोदमावाहयामि ॥ १ ॥ ॐ प्रमोदाय० । प्रमोदमावा० ॥ २ ॥ ॐ सुमुखाय० । सुमुखमा० ॥ ३ ॥ ॐ दुर्मुखाय० । दुर्मुखमावा० ॥ ४ ॥ ॐ अविघ्नाय० । अविघ्नमावा० । ॥ ५ ॥ ॐ विघ्नकर्त्रे नमः । विघ्नकर्तारमावाहयमि ॥ ६ ॥ इत्यावाह्य मनोजूतिरिति प्रतिष्ठाप्य ॥ ॐ मोदादिषड्विनायकेभ्यो नमः ॥ इति नाममन्त्रेण षोडशोपचारैः संपूजयेत् । ततोऽग्निकोणे मातृकाः पीठोपरि, अक्षतपुञ्जेषु पुगीफलेषु वा निवेश्याः ॥ गौरी पद्मा शची मेधा सावित्री विजया जया ॥ देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ १ ॥ हृष्टिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता ॥ गणेशेनाधिका ह्येता वृद्धौ पूज्याश्च षोडश ॥ २ ॥ ॐ गणेशायनमः । गणेशमावाहयामि ॥ १ ॥ ॐ गौर्यै नमः । गौरीमावाहयामि ॥ १ ॥ ॐ पद्मायै नमः । पद्मामावाहयामि ॥ २ ॥ ॐ शच्यै नमः । शचीमावाहयामि ॥ ३ ॥ ॐ मेधायैनमः । मेधामावाहयामि ॥ ४ ॥ ॐ सावित्र्यै नमः । सावित्रीमावाहयामि ॥ ५ ॥ ॐ विजायायै नमः । विजयामावाहयामि ॥ ६ ॥ ॐ जयायै नमः । जयामावाहयामि ॥ ७ ॥ ॐ देवसेनायै नमः । देवसेनामावाहयामि ॥ ८ ॥ ॐ स्वधायै नमः । स्वधामावाहयामि ॥ ९ ॐ स्वाहायै नमः । स्वाहामावाहयामि ॥ १० ॥ ॐ मातृभ्यो नमः । मातॄरावाहयामि ॥ ११ ॥ ॐ लोकमातृभ्यो नमः । लोकमातॄरावाहयामि ॥ १२ ॥ ॐ हृष्टयै नमः । हृष्टिमावाहयामि ॥ १३ ॥ ॐ पुष्टयै नमः । पुष्टिमावाहयामि ॥ १४ ॥ ॐ तुष्टयै नमः । तुष्टिमावाहयामि ॥ १५ ॥ ॐ कुलदेवतायै नमः । कुलदेवतामावाहयामि ॥ १६ ॥ इत्यावाह्य । ॐ मनोजूतिर्जुषतामाज्यंस्यबृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳसमिमन्दधातु ॥ विश्वेदेवासइहमादयन्तामों ३ प्रतिष्ठ ॥ इति प्रतिष्ठाप्य । ॐ गौर्यादिषोडशमातृकाभ्यो नम इति नाममन्त्रेण षोडशोपचारैः संपूजयेत् । अनया पूजया सविनायकगौर्याद्यावाहितमातरः प्रीयन्ताम् ।

इति मातृकापूजनम् । ततः कुड्ये आवाहितमातॄणामुपरि सिंदूराक्तेन घृतेन भित्तौ धारा दद्यात् ॥ ॐ वसोःपवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् ॥ देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः ॥ इति मन्त्रेण पञ्च वा सप्तसंख्याका धारा दद्यात् ॥ अथ घृतमातृकानामानि ॥ श्रीर्लक्ष्मीश्च धृतिर्मेधा पुष्टिः श्रद्धा सरस्वती । माङ्गल्येषु प्रपूज्यन्ते सप्तैता घृतमातरः ॥ ॐ श्रियै नमः श्रियमावाहयामि ॥ १ ॥ ॐ लक्ष्म्यै नमः । लक्ष्मीमा० ॥ २ ॥ ॐ धृत्यै नमः । धृतिमा० ॥ ३ ॥ ॐ मेधायै नमः । मेधामा० ॥ ४ ॥ ॐ पुष्ट्यै नमः । पुष्टिमा० ॥ ५ ॥ ॐ श्रद्धायै नमः । श्रद्धामा० ॥ ६ ॥ ॐ सरस्वत्यै नमः । सरस्वतीमावाहयामि ॥ ७ ॥ इत्यावाह्य ॐ घृतमातृकाभ्यो नमः इति षोडशोपचारैः पूजयेत् ॥ अथ स्थलमातृकापूजनम् ॥ तत्रैव तण्डुलपुञ्जेषु ॥ ॐ ब्राह्म्यै नमः । ब्राह्मीमावाहयामि ॥ १ ॥ ॐ माहेश्वर्यै नमः । माहेश्वरीमा० ॥ २ ॥ ॐ कौमार्यै नमः । कौमारीमा० ॥ ३ ॥ ॐ वैष्णव्यै नमः । वैष्णवीमा० ॥ ४ ॥ ॐ वाराह्यै नमः । वाराहीमा० ॥ ५ ॥ ॐ इन्द्राण्यै नमः । इन्द्राणीमा० ॥ ६ ॥ ॐ चामुण्डायै नमः । चामुण्डामावाहयामि ॥ ७ ॥ इत्यावाह्य

---

१ उपरीत्यत्र मूलं मृग्यं मातॄणां पुरः सन्निहिते वा कुड्यादिप्रदेश एव तद्विधानदर्शनात् । तत्र किञ्चित्प्रमाणत्वेनोपन्यस्यते, यथा हि–रुद्रयामले, तत्पुरः सन्निधाने वा कुड्ये रेखा घृतेन च । धारालिङ्गन मन्त्रेण पञ्च वा सप्त वा लिखेत् ॥ वसोर्द्धारास्थलमप्युक्तं प्रयोगप्रदीपे–गृहनिर्गमवामे च वसोर्द्धारावितर्दिका । कार्या विवाहे विद्वद्भिर्गृहे वै पूर्वदक्षिणे ॥ गृहे वै पश्चिमद्वारे तथा उत्तर एव च । वसोर्धारावेदिका च गृहनिर्गमदक्षिणे ॥ २ दुग्धेनापि–नातिनीचोच्छ्रिते कुड्ये वसोर्धारास्तु सर्पिषा । पञ्च वा सप्त वा धारा वसोर्मन्त्रेण कारयेत् ॥ दुग्धेन वा वसोर्द्धाराः कार्यास्तासां च देवताः । श्रीश्च लक्ष्मीर्धृतिर्मेधा स्वाहा प्रज्ञा सरस्वती ॥ मांगल्येषु प्रपूज्यन्ते सप्तैता घृतमातरः ॥ इति परशुरामकारिकायाम् । नागवल्लीदले सकुंकुमं ससिन्दूरं वा तप्तं घृतं गृहीत्वा तेन प्राक्संस्था उदक्संस्था वा प्रदेशमात्रीः धाराः कुर्यात् । तासां शिरांसि च मिथो मेलनीयानि । एकीकृत्योर्द्ध्वभागे तु कुंकुमेन गुडादिनेतिरुद्रयामले ॥ नागवल्लीदलेनैव शुभेन पल्लवेन वा । धारां तु पातयेत्सम्यगभितो मेलयेत्ततः ॥ मेलयेदिति ऊर्ध्वभागे मिथः श्लेषयेदित्यर्थः ।

ॐ ब्राह्म्यादिमातृकाभ्यो नमः इति षोडशोपचारैः पूजयेत् ॥ अथायुष्यमन्त्रजपः ॥ ॐ आयुष्यंवर्चस्यꣳरायस्पोषमौद्भिदम् ॥ इदꣳ हिरण्यंवर्चस्वज्जैत्रायाविशतादुमाम् ॥ १ ॥ ॐ नतद्रक्षाꣳसिनपिशाचास्तरन्तिदेवानामोजः प्रथमजꣳह्येतत् ॥ योबिभर्तिदाक्षायणꣳ हिरण्यꣳसदेवेषुकृणुतेदीर्घमायुःसमनुष्येषुकृणुतेदीर्घमायुः ॥ २ ॥ ॐ यदाबध्नंदाक्षायणाहिरण्यꣳशतानीकायसुमनस्यमानाः ॥ तन्म आबध्नामिशतशारदायायुष्मञ्जरदष्टिर्यथासम् ॥ ३ ॥ इति मातृकापूजनविधानम् ॥ अथ नान्दीश्राद्धम् ॥ उदङ्मुख उपविश्याचम्य प्राणानायम्य देशकालौ संकीर्त्य पूर्वोच्चरित० अस्मिन्नमुकदेवप्रतिष्ठाख्ये कर्मणि सांकल्पिकेन विधिना ब्राह्मणयुग्मभोजनपर्याप्तान्ननिष्क्रयीभूत यथाशक्तिहिरण्येन नान्दीश्राद्धं करिष्य इति संकल्प्य । सत्यवसुसंज्ञका विश्वेदेवा नान्दीमुखा भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ॥ गोत्रा मातृपितामहीप्रपितामह्यो नान्दीमुख्यो भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ॥ गोत्राः पितृपितामहप्रपितामहा नान्दीमुखा भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ॥ द्वितीयगोत्रा मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीका नान्दीमुखा भूर्भुवः स्वः इदं वः पादावनेजनं पादप्रक्षालनं वृद्धिः ॥ तत आसनदानम् ॥ सत्यवसुसंज्ञकानां विश्वेषां देवानां नान्दीमुखा भूर्भुवः स्वः इदमासनं सुखासनं स्वाहा सम्पद्यतां वृद्धिः ॥ नान्दीश्राद्धे क्षणौ क्रियेतां तथा प्राप्नुतां भवन्तौ । प्राप्नुवः ॥ गोत्राणां मातृपितामहीप्रपितामहीनां नान्दीमुखीनां भूर्भुवः स्वः इदमासनं सुखासनं स्वाहा सम्पद्यतां वृद्धिः ॥ नान्दीश्राद्धे क्षणौ क्रियेतां तथा प्राप्नुतां भवत्यौ प्राप्नुवः ॥ गोत्राणां पितृपितामहप्रपितामहानां नान्दीमुखानां भूर्भुवः स्वः इदमासनं सुखासनं स्वाहा सम्पद्यतां वृद्धिः ॥ नान्दीश्राद्धे क्षणौ क्रियेतां तथा प्राप्नुतां भवन्तौ । प्राप्नुवः ॥ द्वितीयगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानां सपत्नीकानां नान्दीमुखानां भूर्भुवः स्वः इदमासनं सुखासनं स्वाहा सम्पद्यतां वृद्धिः ॥ नान्दीश्राद्धे क्षणौ क्रियेतां तथा प्राप्नुतां भवन्तौ । प्राप्नुवः ॥ ततो गन्धादि

दानम् ॥ सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्यो युग्मरूपेभ्य इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः ॥ गोत्राभ्यो मातृपिता
महीप्रपितामहीभ्यो नान्दीमुखीभ्य इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः । गोत्रेभ्यः पितृपितामहप्रपितामहेभ्यो नान्दीमुखेभ्यः इदं गन्धा
द्यर्चनं स्वाहा० वृद्धिः ॥ द्वितीयगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यो नान्दीमुखेभ्य इदं गन्धाद्यर्चनं स्वाहा० वृद्धिः ।
ततो भोजननिष्क्रयद्रव्यदानम् ॥ सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्यो युग्मब्राह्मणभोजनपर्याप्तान्ननिष्क्रयीभूतं
किञ्चिद्धिरण्यममृतरूपं स्वाहा सम्पद्यतां वृद्धिः ॥ गोत्राभ्यो मातृपितामहीप्रपितामहीभ्यो नान्दीमुखीभ्यो युग्मब्राह्मणभोजनपर्याप्तान्ननिष्क्रयी
भूतं किञ्चिद्धिरण्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः ॥ गोत्रेभ्यः पितृपितामहप्रपितामहेभ्यो नान्दीमुखेभ्यो युग्मब्राह्मणभोजनपर्याप्ता
न्ननिष्क्रयीभूतं किञ्चिद्धिरण्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः ॥ द्वितीयगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यः
सपत्नीकेभ्यः नान्दीमुखेभ्यः युग्मब्राह्मणभोजनपर्याप्तान्ननिष्क्रयीभूतं किञ्चिद्धिरण्यममृतरूपेण स्वाहा० वृद्धिः ॥ सक्षीरमुदक
दानम् ॥ सत्यवसुसंज्ञका विश्वेदेवा नान्दीमुखाः प्रीयन्ताम् ॥ गोत्रा मातृपितामहीप्रपितामह्यो नान्दीमुख्यः प्रीयन्ताम् ॥
गोत्राः पितृपितामहप्रपितामहा नान्दीमुखाः प्रीयन्ताम् ॥ द्वितीयगोत्रा मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीका नान्दीमुखाः
प्रीयन्ताम् ॥ ( अथाशिषो ग्रहणम् ) गोत्रं नो वर्धतामिति यजमानो ब्रूयात् ॥ अभिवर्धतां वो गोत्रमिति द्विजाः ॥ दातारो नोऽभि
वर्धन्ताम् ॥ अभिवर्धन्तां वो दातारः । वेदफलं नोऽभिवर्धताम् । अभिवर्धतां वो वेदफलम् ॥ सन्ततिर्नोऽभिवर्धताम् । अभिवर्धतां वः सन्ततिः ॥
श्रद्धा च नो मा व्यगमत् । मा व्यगमद्वः श्रद्धा ॥ बहुदेयं च नोऽस्तु ॥ अस्तु वो बहुदेयम् ॥ अन्नं च नो बहु भवेत् ॥ भवेदन्नं
वो बहु ॥ अतिथींश्च लभेमहि ॥ लभन्तां वोऽतिथयः ॥ याचितारो नः सन्तु ॥ सन्तु वो याचितारः ॥ एता आशिषः सत्याः

सन्तु ॥ सन्त्वेता आशिषः सत्याः ॥ ततो दक्षिणासंकल्पः ॥ सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थमिमां द्राक्षामलकयवमूलनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृजे[1] ॥ (यवमूलमार्द्रकम्) गोत्राभ्यो मातृपितामहीप्रपितामहीभ्यो नान्दीमुखीभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थमिमां द्राक्षामलकयवमूलनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृजे ॥ गोत्रेभ्यः पितृपितामहप्रपितामहेभ्यो नान्दीमुखेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थमिमां द्राक्षामलकयवमूलनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृजे ॥ द्वितीयगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यो नान्दीमुखेभ्यः सपत्नीकेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृजे ॥ ततो नान्दीश्राद्धं संपन्नं सुसंपन्नम् ॥ ॐ वाजेवाजेति विसृज्य ॐ व्वाजेव्वाजेवतव्वाजिनोनोधनेषुविप्राअमृताऋतज्ञाः ॥ अस्यमध्वःपिबतमादयध्वंतृप्तायातपथिभिर्देवयानैः ॥ आमावाजस्येत्यनुव्रज्य ॥ ॐ आमावाजस्यप्रसवोजगम्यादेमेद्यावापृथिवीव्विश्वरूपे ॥ आमागन्तांपितरामातराचामासोमोऽमृतत्वेनगम्यात् ॥ अस्मिन्नान्दीश्राद्धे न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनान्नान्दीमुखप्रसादात्सर्वः परिपूर्णोऽस्तु। अस्तु परिपूर्ण इति प्रतिवचनम् ॥ अनेन नान्दीश्राद्धकर्मणा नान्दीमुखाः पितरः प्रीयन्ताम् ॥ इति नान्दीश्राद्धम् ॥ अथाचार्यादिवरणप्रयोगः ॥ प्राङ्मुख उपविश्य। आचम्य प्राणानायम्य। अद्येत्यादि देशकालौ संकीर्त्य। अस्मिन्नमुकदेवप्रतिष्ठाकर्मणि तत्तत्कर्मकरणार्थमाचार्यादिब्राह्मणानां वरणं मधुपर्केणार्चनं च करिष्ये ॥ इति संकल्प्य। जलादीन्भूमौ क्षिपेत् ॥ तत आचार्यमुदङ्मुखमुपवेश्य ॥ स्वयं यजमानः प्राङ्मुखो भूत्वा ॥ आचार्यस्य पादौ प्रक्षाल्य। गन्धपुष्पाक्षतताम्बूलमुद्रिकासनकमण्डलुवासांस्यादाय। आचार्यस्य दक्षिणजानुमालभ्य ॥ देशकालौ स्मृत्वाऽमुकगोत्रोऽमुकशर्माहं प्रारब्धाऽमुकदेवप्रति

१ अत्रात्मनेपदं चिन्त्यं तौदादिकस्य "सृज"-धातोर्नित्यं परस्मैपदित्वात्, अत्र "सृज्ये" इति दैवादिकप्रयोगः साधीयानिति मन्ये।

ष्ठायज्ञकर्मण्याचार्यकर्म्म कर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिर्गन्धाक्षतताम्बूलमुद्रिकासनकमण्डलुवासोभिराचार्यत्वेन त्वामहं वृणे ॥
ॐ वृतोऽस्मीति प्रतिवचनम् ॥ ॐ व्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम् ॥ दक्षिणाश्रद्धामाप्नोतिश्रद्धयासत्यमाप्यते ॥ १ ॥ इति मन्त्रं
पठेत् ॥ इति वृत्वा गन्धादिभिः संपूज्य । आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः ॥ तथा त्वं मम यज्ञेस्मिन्नाचार्यो भव
सुव्रत ॥ १ ॥ ॐ बृहस्पतेऽअतियदर्योअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणंधेहिचित्रम् ॥ १ ॥ इति
प्रार्थयेत् ॥ ततो ब्रह्मवरणम् ॥ तथैव देशकालौ संकीर्त्य । अद्य प्रारब्धामुकदेवप्रतिष्ठायज्ञकर्मणि ब्रह्मकर्म कर्तुममुकगोत्रममुकश
र्माणं ब्राह्मणमेभिर्गन्धाक्षतताम्बूलमुद्रिकासनकमण्डलुवासोभिर्ब्रह्मत्वेन त्वामहं वृणे ॥ ॐ वृतोऽस्मीति प्रतिवचनम् ॥ ॐ व्रतेनदीक्षामा
प्नोति० इति पठेत् ॥ ततो गन्धादिभिः संपूज्य ॥ ॐ यथा चतुर्मुखो ब्रह्मा सर्वलोकपितामहः ॥ तथा त्वं मम यज्ञेस्मिन्ब्रह्मा भव
द्विजोत्तम ॥ १ ॥ ॐ ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमुतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः
॥ १ ॥ इति प्रार्थयेत् ॥ ततोऽष्टौ चतुरो वा ऋत्विजो वृणुयात् ॥ तद्यथा ॥ सर्वानृत्विज उदङ्मुखानुपवेश्य ॥ देशकालौ स्मृत्वा ।
अद्य प्रारब्धाऽमुकदेवप्रतिष्ठायज्ञकर्मणि तत्तत्कर्मकरणार्थममुकामुकगोत्रोत्पन्नानमुकामुकवेदशाखाध्यायिनोऽमुकामुकशर्मणो ब्राह्मणानेभिर्गन्धा
क्षतताम्बूलमुद्रिकासनकमण्डलुवासोभिर्ऋत्विक्त्वेन युष्मानहं वृणे ॥ ॐ वृताः स्म इति तैरुक्ते तान्गन्धादिभिः संपूज्य । ऋत्विजश्च यथा
पूर्वं शक्रादीनां मखेऽभवन् ॥ यूयं तथा मे भवितुमृत्विजोऽर्हथ सत्तमाः ॥ १ ॥ इति प्रार्थयेत् ॥ ( प्राक्कुण्डे ऋग्वेदिनावृत्विजौ ।
याम्यकुण्डे यजुर्वेदिनौ । प्रत्यक्कुण्डे सामगौ । उत्तरकुण्डेऽथर्वाणौ ) तत एवमेवाष्टौ चतुरो वा द्वारपालान्वृणुयात् ॥ तत एकैकवे
दिनौ द्वौ द्वौ जापकावेकैकं वा पूर्वादिदिशि वृणुयात् ॥ पञ्चकुण्डीपक्षे त्वष्टौ होतारः । अष्टौ जापका अष्टौ द्वारपाला गुरुश्चैवं पञ्च

विंशत्यृत्विजो भवन्ति ॥ २५ ॥ अत्राशक्तौ । अष्टौ होतारश्चत्वारो जापकाश्चत्वारो द्वारपाला गुरुश्चेति सप्तदश १७ ॥ अत्राप्यशक्तौ
चतुरो होतॄंश्चतुरो द्वारपालांश्चतुरो जापकान्गुरुं चेति त्रयोदश १३ ॥ अत्राप्यसामर्थ्ये ह्येकाग्निविधिना कर्म कर्तुमाचार्यं ब्रह्माणं चेति द्वौ २ ॥
( तदा शाखान्तरस्थमन्त्रहोमो जापकद्वारपालकर्म च निवर्तते कर्त्रभावात् ) ॥ एवमाचार्यादीन्वृत्वा ( तदीयपरम्परागतशाखीयगृ
ह्योक्तविधिना वरणक्रमेण मधुपर्केणार्चयेत् । स च नानारूपत्वादत्र न लिख्यते तच्च मत्कृतपद्धतिप्रकाशे द्रष्टव्यः ) ॥ अथ यजुर्वेदिनां मधुपर्क
पूजाप्रयोगः ॥ सर्वानाचार्यादीनेकतन्त्रेणासनेषु प्राङ्मुखानुपवेश्य । स्वयं चोदङ्मुख उपविश्य । आचम्य । कृताञ्जलिपुटः । ॐ साधु
भवानास्तामर्च्चयिष्यामो भवन्तमिति प्रत्येकं वदेत् । ॐ अर्चय इति प्रतिवचनानन्तरम् । तत्संख्ययैव विष्टरान्गृहीत्वा । ॐ विष्टरो
विष्टरो विष्टरः । इत्याचार्येणोक्ते । ॐ विष्टरः प्रतिगृह्यतामिति प्रत्येकं दाता वदेत् । ॐ प्रतिगृह्णामीति विप्रो वदेत् । ततो यजमानहस्ता
द्विष्टरं गृहीत्वा । ॐ वर्ष्मोऽस्मिसमानानामुद्यतामिव सूर्यः । इमंतमभितिष्ठामियोमाकश्चाभिदासतीति मन्त्रेण ब्राह्मणाः प्रत्येकं विष्टरमुदगग्रं
स्वासनतले स्थापयेयुः ॥ ततः पाद्यपात्रमादाय । ॐ पाद्यं पाद्यं पाद्यमित्याचार्येणोक्ते । ॐ पाद्यं प्रतिगृह्यतामिति दाता वदेत् । ॐ पाद्यं
प्रतिगृह्णामीति विप्रवचनानन्तरम् । ॐ विराजोदोहोसिविराजोदोहमशीय मयि पद्यायै विराजोदोहः ॥ १ ॥ इति मन्त्रेण प्रथमं दक्षिण
चरणं ततो वामचरणं च क्रमेण प्रक्षालयेत् । ततः पूर्ववद्विष्टरान्गृहीत्वा । ॐ विष्टरो विष्टरो विष्टरः । इत्याचार्येणोक्ते । ॐ विष्टरः प्रतिगृह्य
तामिति दाता वदेत् । ॐ प्रतिगृह्णामीत्युक्त्वा । पूर्ववत् ॐ वर्ष्मोऽस्मिसमानानामिति मन्त्रेण स्वस्वचरणयोरधस्ताद्दद्युः ॥ ततः ॐ अर्घोऽर्घो
ऽर्घ इत्यन्येनोक्ते । ॐ अर्घः प्रतिगृह्यतामिति दाता वदेत् । अर्घं प्रतिगृह्णामीत्यभिधाय । यजमानहस्तात् ॐ आपस्थयुष्माभिः सर्वा
न्कामानवाप्नवानीति मन्त्रेणार्घपात्रं गृहीत्वा । शिरसाऽभिवन्द्य । ॐ समुद्रंवःप्रहिणोमिस्वांयोनिमभिगच्छत ॥ अरिष्टास्माकंवीरामापरासे

चिमत्पयः ॥ १ ॥ इति मन्त्रं पठित्वा तज्जलं भूमौ क्षिपेत् ॥ तत आचमनीयपात्रमादाय ॐ आचमनीयमाचमनीयमाचमनीयमित्य न्येनोक्ते । ॐ आचमनीयं प्रतिगृह्यतामिति दाता वदेत् । ॐ आचमनीयं प्रतिगृह्णामीत्यभिधाय । यजमानहस्तादाचमनीयपात्रं गृही त्वा । ॐ आमागन्यशसासहᳫसृजवर्चसातम्माकुरुप्रियम्प्रजानामधिपतिंपशूनामरिष्टिंतनूनाम् ॥ १ ॥ इति मन्त्रेण सकृदाचम्य स्मार्त्ता चमनं कुर्यात् ॥ ततः कांस्यपात्रस्थं कांस्यपात्रान्तरेणापिहितं मधुपर्कमादाय । ॐ मधुपर्को मधुपर्को मधुपर्क इत्यन्येनोक्ते । ॐ मधुपर्कः प्रतिगृह्यतामिति दाता वदेत । ॐ मधुपर्कं प्रतिगृह्णामीत्यभिधाय । यजमानहस्तस्थमेव तत्पात्रमुद्घाट्य । ॐ मित्रस्य त्वा चक्षुषा प्रतीक्षे ॥ १ ॥ इति मन्त्रेण वीक्ष्य । ॐ देवस्यंत्वासवितुःप्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्यांप्रतिगृह्णामीत्यनेन प्रतिगृह्य सव्ये पाणौ निधाय । दक्षिणानामिकया । ॐ नमः स्यावास्यायान्यशनेयत्तआविद्धंतत्तेनिष्कृन्तामि ॥ १ ॥ इत्यनेन प्रादक्षिण्येन मधुपर्कं सकृदालोड्य किंचिद्भूमौ निक्षिप्य पुनरेवं द्विवारमालोड्य भूमौ निक्षिपेत् ॥ तत ॐ यन्मधुनोमधव्यंपरमᳫरूपमन्नाद्यंतेनाहंमधुनोमधव्येनपरमेण रूपेणान्नाद्येनपरमोमधव्योन्नादोऽसानीत्यनेनानामिकाङ्गुष्ठाभ्यां प्राश्य । पुनरेवं वारद्वयं प्राश्य शेषभुग्भ्यो दद्यात् ॥ ततः स्मार्तविधि नाऽऽचम्येन्द्रियाणि संस्पृशेत् ॥ तद्यथा ॥ ॐ वाङ्म आस्येऽस्तु इति कराग्रेण मुखालम्भनम् । ॐ नसोर्मे प्राणोऽस्त्विति दक्षिणवाम नासारन्ध्रद्वये । ॐ अक्ष्णोर्मे चक्षुरस्त्विति दक्षिणोत्तरचक्षुषी । ॐ कर्णयोर्मे श्रोत्रमस्त्विति कर्णयोः । ॐ बाह्वोर्मे बलमस्त्विति बाह्वोः । ॐ ऊर्वोर्मे ओजोस्त्विति युगोर्वोः ॥ ॐ अरिष्टानि मेंगानि तनूस्तन्वा मे सह संत्विति शिरःप्रभृतीनि सर्वाङ्गान्युभाभ्यां हस्ताभ्या मालभ्याचामेत् ॥ तत ॐ गौर्गौर्गौरित्यन्येनोक्ते यजमानेन च प्रत्युक्ते । ब्राह्मणः ॐ मातारुद्राणांदुहितावसूनाᳫंस्वसादित्यानाममृतं स्यनाभिः ॥ प्रणुवोचंचिकितुषेजनायमागामनागामदितिंवधिष्ट । ममामुष्य यजमानस्य पाप्मा हतः ॐ इत्युच्चार्य ॐ उत्सृजत तृणान्यत्तु

इत्युच्चैर्ब्रूयात् ॥ इति मधुपर्कपूजां कृत्वा प्रार्थयेत् ॥ अथ प्रार्थना ॥ ब्राह्मणाः सन्तु मे शस्ताः पापात्पान्तु समाहिताः । वेदानां चैव दातार स्त्रातारः सर्वदेहिनाम् ॥ १ ॥ जपयज्ञैस्तथा होमैर्दानैश्च विविधैः पुनः ॥ देवानां च पितॄणां च तृप्त्यर्थं याजकाः स्मृताः ॥ २ ॥ येषां देहे स्थिता वेदाः पावयन्ति जगत्त्रयम् ॥ रक्षन्तु सततं तेषां जपयज्ञे व्यवस्थिताः ॥ ३ ॥ ब्राह्मणा जङ्गमं तीर्थं त्रिषु लोकेषु विश्रुतम् ॥ येषां वाक्योदकेनैव शुद्ध्यन्ति मलिना जनाः ॥ ४ ॥ पावनाः सर्ववर्णानां ब्राह्मणा ब्रह्मरूपिणः ॥ सर्वकर्मरता नित्यं वेदशास्त्रार्थकोविदाः ॥ ५ ॥ श्रोत्रियाः सत्यवाचश्च देवध्यानरताः सदा ॥ यद्वाक्यामृतसंसिक्ता ऋद्धिं यान्ति नरद्रुमाः ॥ ६ ॥ अङ्गीकुर्वन्तु कर्मैतत्कल्पद्रुमसमाशिषः ॥ यथोक्त नियमैर्युक्ता मन्त्रार्थे स्थिरबुद्धयः ॥ ७ ॥ यत्कृपालोचनात्सर्वा ऋद्धयो वृद्धिमाप्नुयुः ॥ अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः ॥ ८ ॥ देवध्यानरता नित्यं प्रसन्नमनसः सदा ॥ अदुष्टभाषणा नित्यं मा सन्तु परनिन्दकाः ॥ ९ ॥ ममापि नियमा ह्येते भवन्तु भवतामपि ॥ ( अथाचार्यप्रार्थनाविशेषः ) ॥ मन्त्रमूर्तिर्भवान्नाथ संसारोच्छेदकारक ॥ साङ्गं कर्म यथा मे स्यात्तथा कुरु हि भूसुर ॥ १ ॥ संसारभयभीतेन अयं यज्ञः सुभक्तितः ॥ प्रारब्धस्त्वत्प्रसादेन निर्विघ्नं मे भवत्विति ॥ २ ॥ अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया ॥ सुप्रसादेन कर्तव्यं शान्तिकं विधिपूर्वकम् ॥ ३ ॥ इत्याचार्यं प्रार्थयेत् ॥ ततः प्रत्येकं वस्त्रद्वयम् २, आसनम् १, यज्ञोपवीतम् १, अर्घ्यपात्रम् १, आच मनपात्रम् १, जलकमण्डलुः १, सुवर्णाङ्गुलीयकद्वयम् २, रुद्राक्षमालां १ च दद्यात् । आचार्याय द्विगुणं देयम् ॥ तत्र आचार्यो यजमानस्य हस्ते रक्षाबन्धनं शिरसि कुङ्कुमेन तिलकं च कृत्वा दधिदूर्वामार्ज्जनं तत्तन्मन्त्रेण कुर्यादित्याचार्यादिवरणप्रयोगः ॥ तत उत्थाय संभारान्गृहीत्वा सुवासिनीर्ब्राह्मणानग्रतः कृत्वा सतूर्यघोषः सपरिकरः सपूर्णकुम्भो यजमानः ॐ भद्रङ्कर्णेभिः शृणुयाम देवा भद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरै रङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ इति मन्त्रेण महामण्डपं प्रदक्षिणीकृत्य मण्डपस्य पश्चिमद्वारमागत्य पाणिभ्यां चार्घपात्रमादाय

शान्तिं पठेत्—आशुःशिशानः०, ऋचंवाचं०, स्वस्तिन० इत्यादिकं च पठेत् ॥ ततो द्वारदेशे सार्घः ॥ पृथ्वीं चतुर्भुजां शुक्लां कूर्मपृष्ठोपरि स्थितां पद्मशङ्खचक्रशूलकरां विहसितां सुप्रसन्नां गोरूपधरां सवत्सां वसुन्धरां ध्यात्वा, ॐ आगच्छ देवि कल्याणि वसुधे लोकधारिणि ॥ पृथ्वि त्वं ब्रह्मदत्तासि काश्यपेनाभिनन्दिता ॥ १ ॥ भूतधात्री रत्नगर्भा विपुला सागराम्बरा । अस्मिन्यज्ञे महादेवि विघ्नं विध्वंसयाम्बिके ॥ २ ॥ इति संप्रार्थ्य फलपुष्पाञ्जलिं दत्त्वा ॐ भूम्यै नम इति मन्त्रेण पाद्यादिभिरुपचारैः संपूज्य पुनः प्रार्थयेत् ॥ उद्धृतासि वराहेण विष्णुना शतबाहुना ॥ दंष्ट्राग्रे लीलया देवि यज्ञार्थे त्वां वृणोम्यहम् ॥ १ ॥ ब्रह्मणा निर्मिते देवि विष्णुना शङ्करेण च ॥ पार्वत्या चैव गायत्र्या स्कन्देन श्रवणेन च ॥ २ ॥ यमेन पूजिता देवि धर्मवृद्धिजिगीषया ॥ सौभाग्यं देहि पुत्रांश्च धनं रूपं च पूजिता ॥ ३ ॥ गृहाणार्घ्यं च मे देवि सौभाग्यं च प्रयच्छ मे ॥ इति भूम्यै अष्टाङ्गार्घ्यं दत्त्वा साष्टाङ्गं प्रणिपत्य मण्डपपश्चिमद्वारेण प्रविशेत् ॥ होमद्रव्यप्रवेशः पूर्वद्वारेण ॥ दानद्रव्यप्रवेशो दक्षिणद्वारेण ॥ दानार्थान्दक्षिणार्थान्प्रतिष्ठार्थान्सम्भारानुत्तरद्वारेण प्रवेशयेत् ॥ तत आचार्यो वामहस्ते गौरसर्षपाँल्लाजामिश्रितान्गृहीत्वा दिग्रक्षणं कुर्यात् ॥ तत्र मन्त्राः ॐ रक्षोहणंवलगहनंवैष्णवीमिदमहन्तंवलगमुत्किरामियम्मेनिष्टयोयममात्योनिचखानेदमहन्तंवलगमुत्किरामियम्मैंसमानोयमसमानोनिचखानेदमहन्तंवलगमुत्किरामि यम्मेसबन्धुरुर्यमसंबन्धुर्निचखानेदमहन्तंवलगमुत्किरामियम्मैंसजातोयमसंजातोनिचखानोत्कृत्याङ्किरामि ॥ १ ॥ ॐ रक्षोहणोंवोवलगहनःप्रोक्षामिवैष्णवान्रक्षोहणोंवोवलगहनोवनयामिवैष्णवान्रक्षोहणोंवोवलगहनोवस्तृणामिवैष्णवान्रक्षोहणौवांवलगहनाऽउपदधामिवैष्णवीरक्षोहणौवांवलगहनौपर्य्यूहामिवैष्णवीवैष्णवमसिवैष्णवास्त्थ ॥ २ ॥ ॐ रक्षसाम्भागोसिनिरस्तःरक्षऽइदमहरक्षोभितिष्ठामीदमहरक्षोवबाधइदमहरक्षोधमन्तमोनयामि ॥ घृतेनंद्यावापृथिवीप्रोर्णुवाथांवायोवेस्तोकानामग्निराज्यस्यवेतुस्वाहास्वाहा कृतेऽऊर्ध्वं नभसं मारुतङ्गच्छतम् ॥ ३ ॥ ॐ रक्षोहा विश्वचर्षणिरभियोनिमयोहते ॥ द्रोणंस

धस्तथुमासदत् ॥ ४ ॥ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ॥ ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ १ ॥ अपक्रामन्तु भूतानि
पिशाचाः सर्वतोदिशम् । सर्वेषामविरोधेन ब्रह्मकर्म समारभे ॥ २ ॥ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः ॥ स्थानं त्यक्त्वा तु तत्सर्वं यत्र
स्थं तत्र गच्छतु ॥ ३ ॥ भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः । स्थानादस्माद्व्रजन्त्वन्यस्वीकरोमि भुवं त्विमाम् ॥ ४ ॥ भूता
नि राक्षसा वापि अत्र तिष्ठन्ति केचन ॥ ते सर्वेऽप्यपगच्छन्तु शान्तिकं तु करोम्यहम् ॥ ५ ॥ एतैर्मन्त्रैरीशानादिसर्वदिक्षु विकीर्य
देवा आयान्तु, यातुधाना अपयान्तु, विष्णो देवयजनं रक्षस्वेति रक्षां कृत्वा पञ्चगव्येन कुशैर्मण्डपभूमिं यज्ञसम्भारांश्च प्रोक्षयेत् ।
( पञ्चगव्यकरणम् ) गायत्र्या गोमूत्रम् ॥ ॐ भूर्भुवः स्वः तत्सवितु० ॥ गन्धद्वारेति गोमयम् ॥ ॐ गन्धद्वारांदुराधर्षांनित्यपुष्टांकरीषि
णीम् ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥ २ ॥ आप्यायस्वेति क्षीरम् ॥ ॐ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् ॥ भवा
वाजस्यसंगथे ॥ ३ ॥ दधिक्राव्णेति दधि । ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयुंषितारि
षत् ॥ ४ ॥ तेजोऽसीत्याज्यम् । तेजोऽसिशुक्रमस्यमृतमसिधामनामासिप्रियन्देवानामनाधृष्टन्देवयजनमसि ॥ ५ ॥ देवस्यत्वेति
कुशोदकम् । ॐ देवस्यत्वासवितुःप्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ ६ ॥ प्रणवेनालोडच ॥ वारुणैर्मन्त्रैः कर्मभूमिं प्रोक्षयेत् ॥
तत्र मन्त्राः । ॐ हिरण्यवर्णाः शुचयः पावकायासुजातःकश्यपोयास्विन्द्रः ॥ अग्निंयागर्भंदधिरेविरूपास्तानआपःशंस्योनाभवंतु ॥
॥ १ ॥ ॐ यासाराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानाम् ॥ मधुश्चुतःशुचयोयाः पावकास्तानआपःशंस्योनाभवंतु ॥ २ ॥
ॐ यासांदेवादिविकृण्वंतिभक्षंयाअंतरिक्षेबहुधाभवन्ति ॥ याः पृथिवींपयसोंदंतिशुक्रास्तानआपःशंस्योनाभवन्तु ॥ ३ ॥ ॐ शिवेन
माचक्षुषापश्यतापःशिवयातनुवोपस्पृशतत्वचंमे ॥ सर्वाँअग्नीँरप्सुषदोहुवेवोमयिवर्चोबलमोजोनिधत्त ॥ ४ ॥ ॥ ( अथ पवमानसू

क्रम् ) ॐ पर्वमानः सुवर्जनः ॥ पुवित्रेणविर्चर्षणिः ॥ यःपोतासपुनातुमा ॥ पुनन्तुमादेवजुनाः ॥ पुनंतुमनंवोधिया ॥ पुनंतुविश्वआ यवः ॥ जातवेदःपवित्रंवत् ॥ पुवित्रेणपुनीहिमा ॥ शुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतूंठंरनु ॥ १ ॥ ॐ यत्तेपुवित्रमुर्चिषि ॥ अग्ने विर्ततमन्तुरा ॥ ब्रह्मतेनंपुनीमहे ॥ उभाभ्यांदेवसवितः ॥ पुवित्रेणसुवेनंच ॥ इदंब्रह्मपुनीमहे ॥ वैश्वदेवीपुनुतीदेव्यागात् ॥ यस्यैबुह्वी स्तनुवोवीतपृष्ठाः ॥ तयामदंतःसधमाद्येषु ॥ वयठंस्यामुपतयोरयीणाम् ॥ २ ॥ ॐवैश्वानुरोरुश्मिभिर्मापुनातु ॥ वातःप्राणेनेषिरोमं यो॒भूः ॥ द्यावापृथिवीपयसापयोभिः ॥ ऋतावरीयज्ञियेमापुनीताम् ॥ बृहद्भिःसवितुस्तृभिः ॥ वर्षिष्ठैर्देवमन्मंभिः ॥ अग्नेदक्षैःपुनाहिमा ॥ येनदेवाअपुनत ॥ येनापोदिव्यंकशः ॥ तेनदिव्येनब्रह्मणा ॥ इदंब्रह्मपुनीमहे ॥ ३ ॥ ॐयःपावमानीरध्येति ॥ ऋषिभिःसंभृतठंरसम् ॥ सर्वठंसपूतमश्नाति ॥ स्वदितंमातरिश्वना ॥ पावमानीर्योअध्येति ॥ ऋषिभिःसंभृतठंरसम् ॥ तस्मैसरस्वतीदुहे ॥ क्षीरठंसुर्पिर्मधूदकम् ॥ पावमानीः स्वस्त्ययनीः ॥ ४ ॥ ॐ सुदुघाहिपयस्वतीः ॥ ऋषिभिः संभृतोरसः ॥ ब्राह्मणेष्वमृतंठंहितम् ॥ पावमानीर्दिशंतुनः ॥ इमंलोकमथोअमुम् ॥ कामान्त्समर्धयन्तुनः ॥ देवीर्देवैः समाभृताः ॥ पावमानीः स्वस्त्ययनीः ॥ सुदुघाहिघृतश्चुतः ॥ ऋषिभिः संभृतोरसः ॥ ५ ॥ ॐ ब्राह्मणेष्वमृतंठं हितम् ॥ येनदेवाःपवित्रेण॥आत्मानंपुनतेसदा ॥ तेनसहस्रधारेण ॥ पावमान्यः पुनन्तुमा ॥ प्राजापत्यंपवित्रम् ॥ शतोद्यामठंहिरण्मयम् ॥ तेनब्रह्मविदोवयम् ॥ पूतंब्रह्मपुनीमहे ॥ इन्द्रःसुनीतीसहमापुनातु ॥ सोमःस्वस्त्यावरुणःसमीच्या ॥ यमोराजाप्रमृणाभिःपुनातुमा ॥ जातवेदामोर्जयंत्यापुनातु ॥ ६ ॥ ॥ इत्यनुवाकेनाभिषिच्य ॥ ॐ आपोहिष्ठामयोभुवस्तानऽऊर्जेदधातन ॥ मुहेरणायचक्षसे ॥ १ ॥ ॐ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ २ ॥ ॐतस्माऽअरंङ्गमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ ३ ॥ इति त्र्यृचेन सर्वत्र प्रोक्ष्य ॥ ततो यजमानो हस्तप्रमाणं चतुरस्रं चतुरङ्गुलोच्चं स्थण्डिलं कृत्वा ॥ तत्र ॐ भूरसिभूमिरस्य

दितिरसिविश्वधायाविश्वस्यभुवनस्यधर्त्री ॥ पृथिवींय्यच्छपृथिवीन्दृंहपृथिवीम्माहिंसीः ॥ १ ॥ ॐ भूर्भुवः स्वः पृथिवीकूर्मानन्त देवताभ्यो नम इति मन्त्रेण षोडशोपचारैः पूजयेत् ॥ ततः कृताञ्जलिः स्वस्त्ययनमिति स्वस्तिन इति च मन्त्रद्वयं पठेत् ॥ अथ स्वस्त्ययनम् ॥ ॐ स्वस्ति नो मिमीतामश्विनाभगः स्वस्ति देव्यदितिरनर्वणः ॥ स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना ॥ १ ॥ स्वस्तये वायुमुपब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः ॥ बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ॥ २ ॥ विश्वेदेवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये ॥ देवाअवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः ॥ ३ ॥ स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति ॥ स्वस्ति न इन्द्रश्चाग्निश्च स्वस्ति नो अदिते कृधि ॥ ४ ॥ स्वस्ति पन्थामनुचरेम सूर्या चन्द्रमसाविव ॥ पुनर्ददता घ्नता जानता सङ्गमेमहि ॥ ५ ॥ इति ऋग्वेदीयं स्वस्त्ययनम् ॥ ॥ ॐ स्वस्तिनऽइन्द्रोवृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः ॥ स्वस्तिनस्ताक्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ इति त्रिः पठेत् । केचिन्मण्डपपूजनमत्रापि कुर्वन्ति तदपि समीचीनम् ॥ अथ वास्तुपूजनम् ॥ मण्डपनैर्ऋत्यकोणे रचितं वास्तुमण्डलं तत्समीप उपविश्याचम्य प्राणानायम्य देशकालौ

१ मात्स्ये—जीर्णोद्धारे तथोद्याने तथा गृहनिवेशने । नवप्रासादभवने प्रासादपरिवर्त्तने । द्वाराभिवर्त्तने तद्वत्प्रासादेषु गृहेषु च । वास्तूपशमनं कुर्यात्पूर्वमेव विचक्षणः । इति । २ अस्य रचनाप्रकारस्त्वेवं-वास्तुशास्त्रेषु, एकोनपञ्चाशत्पदः, चतुष्षष्टिपदः, एकाशीतिपदः, शतपदः, एकविंशोत्तरशतपदः, चतुश्चत्वारिंशोत्तरशतपदः, एकोनसप्तत्युत्तरशतपदः, षण्णवत्युत्तरशतपदः, सहस्रपदो लक्षपदश्चेत्याद्यनेकविधो वास्तुः प्रतिपादितः, तद्रचनाप्रकारश्चापि तत्र तत्र सविस्तरमुक्तः । कर्मभेदेन तद्भेदाश्चापि तत्रैव । ततोऽत्र प्रकृते देवप्रतिष्ठाकर्मणि चतुःषष्टिपदात्मकस्य वास्तोर्ग्रहणात्तद्विषये एव किञ्चिद्ब्रवीमि । तद्यथा-एकाशीतिपदं वास्तु गृहकर्मणि शस्यते । चतुःषष्टिपदो वास्तुः प्रासादे देवभूभुजामिति वचनादत्र चतुःषष्टिपद एव वास्तुर्विधेयः । सचेत्थं, प्रासादे मण्डपे वा मध्यस्थितप्रधानवेद्या ईशानभागे नैर्ऋते वा द्विहस्तमेकहस्तमष्टहस्तं वा अर्द्धहस्तोच्छ्रितमेकहस्तोच्चं, चतुरंगुलोत्सेधं वा सवप्रमवप्रं वा, चतुरस्रं पीठं मृदिष्टिकादिना कृत्वा, गोमयेनोपलिप्य, तत्र श्वेतवस्त्रं प्रसार्य, तत्र कुङ्कुमाक्तया कनकशलाकया पूर्वपश्चादारम्भाः प्राक्पर्यन्ता उदक्संस्था द्व्यङ्गुलान्तरा नवरेखाः कृत्वा पुनस्तथैव, दक्षिणोपक्रमा

**संकीर्त्याद्यामुकदेवप्रतिष्ठाकर्मणि ( अत्रेयान्विशेषोऽप्युच्चारणीयः ) एतत्प्रासादावच्छिन्नभूम्यधिष्ठितदेवतोपरोधजनितोपसर्गनिवृत्तिपूर्वकप्रासादाधिष्ठितवास्तुपुरुषप्रीतयेऽत्र करिष्यमाणनित्यनैमित्तिककाम्यकर्मणामस्य वास्तोश्च शुभतासिद्धिद्वारा शिख्यादिदेवप्रीत्यर्थं यथाविभवदेश**

उदगपवर्गाः प्राक्संस्था नव रेखाः कृत्वा, तत्र प्रणवादिनमोन्तैर्नाममन्त्रैर्लक्ष्म्यादीन्संपूज्य, मध्यगं पदचतुष्टयमेकीकृत्य, तत्कोणचतुष्काद्बहिः कोणचतुष्टयेष्वेकैकां रेखां कुर्यात् ( अनेन प्रतिकोणं त्रिकोणषट्कं भवति ) ततस्तत्र कोष्ठकेषु यथाशास्त्रं विधिविहितपञ्चवर्णांस्तद्रागरञ्जिताक्षतान्वा विन्यस्य ईशानदक्षिणार्द्धपदादारभ्य प्रादक्षिण्येन यथाक्रमं स्वर्णादिप्रतिमासु पूगीफलेषु वा पञ्चचत्वारिंशत्संख्याकाः शिख्यादिदेवताः स्थापयेत् । ब्रह्मादीन् वा । अत्र क्रमे विकल्पः । ततो मण्डलाद्बहिरीशानादिचतुःकोणेषु चरक्यादीन्, पूर्वादिचतुर्दिक्षु स्कन्दादीन्, तद्बहिः प्रदेशे च पूर्वाद्यष्टदिक्षु इन्द्रादीन् स्थापयेत् । अत्र कतिचित्प्रमाणवाक्यानि वास्तौ " कुर्याद्वेदिं हस्तमितां चतुरङ्गुलमुच्छ्रिताम् । तदीशानादिकोणेषु लोहकीलान्निवेशयेत् " ( **प्रतिष्ठाकौमुद्याम्** ) " त्रिहस्ता पिण्डिका कार्या चतुरंगुलमुच्छ्रिता " ( **भविष्ये** ) " गर्तस्योत्तरपूर्वेण वितस्तिद्वयविस्तृतम् । हस्तद्वयमितं वा स्याच्चतुरस्रं समन्ततः " ( **मत्स्यपु०** ) " चतुरस्रीकृतं क्षेत्रं वितस्तिद्वयसम्मितम् । हस्तद्वयमितं वा स्यात्समसूत्रं समन्ततः " ( **रेणुककारिकायाम्** ) " हस्तमात्रायामष्टहस्तायां वा वेदिकायां कनकादिशलाकया वस्त्रे वा भूमावेव रेखाः कुर्यात् " इत्यादि ( **पूर्तकौस्तुभे** ) वृद्धास्तु " कुण्डस्थण्डिलान्यतरपूर्वभागे चतुरंगुलोन्नतं यजमानहस्तमितं वेदिद्वयं मृदा विधाय " इत्यादि ॥ ( **पूर्तदीधितौ** ) " ईशान्यां चतुरस्रां चतुरंगुलमुच्छ्रितां हस्तमात्रां वेदिं कृत्वा " इत्यादि ( **आश्वलायनपरिशिष्टे** ) " गृहप्रासादकूपानां मण्डपस्य जलस्य च । वास्तुमण्डलकं कार्यमष्टहस्तप्रमाणकम् " ( **पञ्चरात्रे** ) इति तत्र विधानात् ॥ वेदिकरणाशक्तौ तु काष्ठपीठादिष्वपि कर्तव्यमेव, " अकरणान्मन्दकरणं श्रेयः " इति न्यायात् । " आकुञ्चितकरं वास्तुमुत्तानं पुरुषाकृतिम् । स्मरेत्पूजासु कुड्यादिनिवेशे त्वधराननम् " इति **विश्वकर्मप्रकाशीयवचने** आदिपदस्वारस्याच्च । आग्नेय्यां मातृकावेदी **वास्तुवेदी च नैर्ऋते** । क्षेत्रपालस्य वायव्यामीशान्यां च नवग्रहाः ॥ इति ( **कुण्डसं०** ) एवं वेदीश्चापि तिस्रः प्रकुर्याच्छौचिष्केशकव्यभुग्वायुदिक्षु । स्थाप्यान्खेटान्मातृकांश्चापि वास्तुक्षेत्रेशं च स्थापयेत्तासु यागे ॥ इति **कुण्डरत्नावल्याम्** ॥ समयाभावादत्र विस्तराद्बिभ्यते । विशेषस्तु मत्कृते " **स्मार्तवल्लभे** " द्रष्टव्यः । यो हि प्रमाण–प्रयोगखण्डभेदेन विभागद्वये विभक्तः । यस्य हि प्रयोगखण्डेऽद्यपर्यन्तं प्रयोगपञ्चकं शीघ्रं प्रकाशयिष्यते, तत्र गणपतिपूजनादिमण्डपपूजनान्तः सर्वारम्भसाधारणक्रियात्मकः

कालाद्यनुसारतो यथमिलितोपचारसम्भारैः वास्तुकर्माहं करिष्य इति संकल्प्य वास्तुमण्डलचतुष्कोणेष्वौदुम्बरस्य वा लोहस्य शङ्कुचतुष्टयमीशानादिप्रदक्षिणक्रमेण रोपयेत । तत्र मन्त्रः । ॐ विशन्तु भूतले नागा लोकपालाश्च सर्वतः ॥ मण्डपेऽत्रावँविष्ठन्तु ह्यायुर्बलकराः सदा ॥ १ ॥ इति मन्त्रेण चतुर्दिक्षु रोपणम् । ततः शङ्कूनां पार्श्वे रोपणक्रमेण माषभक्तदध्योदनेन बलिदानम् । तत्र मन्त्राः । ॐ रुद्रेभ्यश्चैव सर्पेभ्यो ये चान्ये तत्समाश्रिताः ॥ बलिं तेभ्यः प्रयच्छामि गृह्णन्तु सततोत्सुकाः ॥ इतीशाने ॥ १ ॥ ॐ अग्निभ्योऽप्यथ सर्पेभ्यो ये चान्ये तत्समाश्रिताः ॥ बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम् ॥ इत्याग्नेय्याम् ॥ २ ॥ ॐ नैर्ऋत्याधिपतिश्चैव नैर्ऋत्यां ये च राक्षसाः ॥ बलिं तेभ्यः प्रयच्छामि सर्वे गृह्णन्तु मन्त्रितम् ॥ इति नैर्ऋत्याम् ॥ ३ ॥ ॐ वायव्याधिपतिश्चैव वायव्यां ये च राक्षसाः ॥ बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम् ॥ इति वायव्याम् ॥ ४ ॥ ततो वास्तुपीठे कुङ्कुमादिना कनकशलाकया रत्नेन वा रजतफलपुष्पाणामन्यतमेन वा नव रेखाः कार्याः ॥ ॐ लक्ष्म्यै नमः ॥ १ ॥ ॐ यशोवत्यै नमः ॥ २ ॥ ॐ कांतायै नमः ॥ ३ ॥ ॐ सुप्रियायै नमः ॥ ४ ॥ ॐ विमलायै नमः ॥ ५ ॥ ॐ श्रियै नमः ॥ ६ ॥ ॐ सुभगायै नमः ॥ ७ ॥ ॐ सुमत्यै नमः ॥ ८ ॥ ॐ इडायै नमः ॥ ९ ॥ इत्योङ्कारादिनमोन्तैर्नामभिः पश्चादारम्भाः प्रागन्ताः प्राक्पश्चिमायता द्व्यङ्गुलान्तरा नव रेखाः कृत्वा । पुनः । ॐ धान्यायै नमः ॥ १ ॥ ॐ प्राणायै नमः ॥ २ ॥ ॐ विशालायै नमः ॥ ३ ॥ ॐ स्थिरायै नमः ॥ ४ ॥ ॐ भद्रायै नमः ॥ ५ ॥ ॐजयायै नमः ॥ ६ ॥ ॐ निशायै नमः ॥ ७ ॥ ॐ विरजायै नमः ॥ ८ ॥ ॐ विभवायै नमः ॥ ९ ॥ इत्येता दक्षिणारम्भा उदगन्ताः प्राक्संस्था नव

---

—प्रथमो भागः, नवग्रहमखात्मको द्वितीयः, पारस्करगृह्यसूत्रानुसारी सभाष्यो विवाहविधानात्मकस्तृतीयः, सटीकोपनयनपद्धत्याख्यश्चतुर्थः, वैदिकवास्तुशान्तिप्रयोगश्च पञ्चम इति तज्जिधृक्षुभिः सूचनीयोऽयं जनष्टिप्पणीकार इति विज्ञाविवेदयति विनीतः **श्रीव्रजवल्लभशर्मा वैद्यो बिसाऊ वास्तव्यः**। १ आग्नेयादिक्रमेण वा, अत्र क्रमे विकल्पः। २ प्रासादादौ तु प्रासादेऽत्रावतिष्ठन्तामित्याद्यूह्यम् । ३ अत्र परस्मैपदं चिन्त्यं, 'समवप्रविभ्यः स्थः १। ३। २२' इति पाणिनीयसूत्रेणात्मनेपदस्यौचित्यात्।

रेखाः कृत्वा ता अपि पूजयेत् । एवं चतुःषष्टिकोष्ठात्मकवास्तुमण्डलं भवति । तत्र मध्यगं पदचतुष्टयमेकीकृत्य तत्कोणचतुष्टयाद्बहिः कोणचतुष्टये रेखाभिः पदान्युत्कृत्य शिख्यादीन्स्थापयेत्तत्र तावत् ॥ ॐ सर्वज्ञानक्रियाव्यक्तकमलासनाय योगपीठात्मने नमः इति पीठोपरि पुष्पाक्षतचन्दनानि प्रक्षिपेत् ॥ ततो वास्तोश्चतुरस्त्रं शरीरं देवा आक्रम्य स्थिता इति तत्तद्देवपदे च तत्तद्देवावाहनम् । तत्र ईशानपददक्षिणार्द्धे वास्तोः शिरसि शिखिनम् । ॐ नमः शंभवायचमयोभवायचनमः शङ्करायचमयस्करायचनमः शिवायच शिवतरायच ॥ ॐ भूर्भुवः स्वः शिखिन् इहागच्छ इह तिष्ठ ॐ शिखिने नमः ॥ १ ॥ तद्दक्षिणसार्द्धपदे दक्षिणनेत्रे पर्जन्यम् । ॐ शन्नोवातः पवताᳪंशन्नस्तपतुसूर्यः ॥ शन्नःकनिक्रदद्देवः पुर्जन्योऽअभिर्वषतु ॥ ॐ भूर्भुवः स्वः पर्जन्य इहागच्छ इह तिष्ठ ॐ पर्जन्याय नमः ॥ २ ॥ तद्दक्षिणपदद्वये दक्षिणश्रोत्रे जयन्तम् । ॐ मर्म्माणितेवर्मणाच्छादयामिसोमस्त्वाराजामृतेनानुवस्ताम् ॥ उरोर्वरीयोवरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु ॥ ॐ भूर्भुवः स्वः जयन्त इहागच्छ इह तिष्ठ ॐ जयन्ताय नमः ॥ ३ ॥ ॐ तद्दक्षिणपदद्वये दक्षिणांसे कुलिशायुधम् । ॐ आयात्विन्द्रोवसऽउपनऽइहस्तुतः सधमादस्तुशूरः ॥ वावृधानस्तविषीर्य्यस्यपूर्वीद्यौर्नक्षत्रमभिभूतिपुष्यात् ॥ ॐ भूर्भुवः स्वः इन्द्र इहागच्छ इह तिष्ठ ॐ इन्द्राय नमः ॥ ४ ॥ तद्दक्षिणपदद्वये दक्षिणबाहौ सूर्यम् । ॐबण्महाँ२ऽअसिसूर्य्यबडादित्यमहाँ२ऽअसि ॥ महस्तेसतोमहिमापनस्यतेद्धादेवमहाँ२ऽअसि ॥ ॐ भूर्भुवः स्वः सूर्य इहा० ॐ सूर्याय नमः ॥ ५ ॥ तद्दक्षिणपदद्वये दक्षिणबाहौ सत्यम् । ॐ व्रतेन दीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम् ॥ दक्षिणाश्रद्धामाप्नोतिश्रद्धयासत्यमाप्यते ॥ ॐ भूर्भुवःस्वः सत्य इहागच्छ इह तिष्ठ ॐ सत्याय नमः ॥ ६ ॥ तद्दक्षिणसार्द्धपदे दक्षिणकूर्परे भृशम् । ॐ आत्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः ॥ विशस्त्वासर्वावाञ्छन्तुमात्वद्राष्टमधिभ्रशत् ॥ ॐ भूर्भुवः स्वः भृश इहागच्छ इह तिष्ठ ॐ भृशाय नमः ॥ ७ ॥

तद्दक्षिणाग्नेयपदार्द्धे दक्षिणप्रबाहौ ह्याकाशम् । ॐ यावांकशामधुमत्याश्विनासूनृतावती ॥ तयायज्ञम्मिमिक्षितम् ॥ उपयामगृहीतो स्यश्विभ्यांत्वैषतेयोनिर्माध्वीभ्यान्त्वा ॥ ॐ भूर्भुवः स्वः आकाश इहागच्छ इह तिष्ठ ॐ आकाशाय नमः ॥ ८ ॥ तत्पश्चिमार्द्धे दक्षिणप्रबाहौ वायुम् । ॐ वायोयेतेसहस्रिणोरथासस्तेभिरागहि ॥ नियुत्वान्त्सोमपीतये ॥ ॐ भूर्भुवः स्वः वायो इहागच्छ इह तिष्ठ ॐ वायवे नमः ॥ ९ ॥ तत्पश्चिमसार्द्धपदे दक्षिणमणिबन्धे पूषणम् । पूषन्तवव्रतेवयन्नरिष्येमकदाचन ॥ स्तोतारस्तइहस्मसि ॥ ॐ भूर्भुवः स्वः पूषन्निहागच्छ इह तिष्ठ ॐ पूष्णे नमः ॥ १० ॥ तत्पश्चिमपदद्वये दक्षिणपार्श्वे वितथम् । ॐ तत्सूर्यस्यदेवत्वन्तन्महित्वम्मद्ध्या कर्त्तोर्विततन्ङ्सञ्जभार ॥ यदेदयुक्तहरितः सधस्थादाद्रात्रीवासस्तनुतेसिमस्मै ॥ ॐ भूर्भुवः स्वः वितथ इहागच्छ इह तिष्ठ ॐ वितथाय नमः ॥ ११ ॥ तत्पश्चिमपदद्वये दक्षिणपार्श्वे गृहक्षतम् । ॐ अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत ॥ अस्तोषतस्वभानवोविप्रानविष्ठयामतीयो जान्विन्द्रते हरी ॥ ॐ भूर्भुवः स्वः गृहक्षत इहा० ॐ गृहक्षताय नमः ॥ १२ ॥ तत्पश्चिमपदद्वये दक्षिणोरुभागे यमम् । यमायत्वांगिरस्वतेपितृमते स्वाहा ॥ स्वाहाघर्मायस्वाहाघर्मःपित्रे ॥ ॐ भूर्भुवः स्वः यम इहागच्छ इह तिष्ठ ॐ यमाय नमः ॥ १३ ॥ तत्पश्चिमपदद्वये दक्षिणजानौ गन्धर्वम् । ॐ गन्धर्वस्त्वा विश्वावसुः परिदधातुविश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडईडितः ॥ इन्द्रस्य बाहुरसिद क्षिणो विश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडईडितः ॥ मित्रावरुणौ त्वोत्तरतःपरिधत्तां ध्रुवेण धर्मणाविश्वस्यारिष्ट्यैयजमानस्यपरि धिरस्यग्निरिडऽईडितः ॥ ॐ भूर्भुवः स्वः गन्धर्व इहागच्छ इह तिष्ठ ॐ गन्धर्वाय नमः ॥ १४ ॥ तत्पश्चिमसार्द्धपदे दक्षिणजङ्घायां भृङ्ग राजम् । ॐ सौरीवलाकाशार्गःसृजयःशयाण्डकस्तेमैत्राःसरस्वत्यैशारिः पुरुषवाक्श्वाविद्भौमीशार्दूलोवृकःपृदाकुस्तेमन्यवेसरस्वतेशुकः पुरुषवाक् ॥ ॐ भूर्भुवः स्वः भृङ्गराज इहागच्छ इह तिष्ठ ॐ भृङ्गराजाय नमः ॥ १५ ॥ तत्पश्चिमनैर्ऋत्यपदार्धे दक्षिणस्फिचि मृगम् ।

ॐ मृगोनभीमऽकुचरोगिरिष्ठाऽपरावतऽआजगंथा परस्याः ॥ सृकᳪसंᳪशायपविमिंद्रतिग्मंविशत्रूंताद्विह्निमृधोनुदस्व ॥ ॐ भूर्भुवः स्वः मृग इहागच्छ इह तिष्ठ ॐ मृगाय नमः ॥ १६ ॥ तदुत्तरार्द्धे पितॄन् । ॐ उशंतस्त्वानिधीमह्युशंतः समिधीमहि ॥ उशन्नुशतऽआवहपितॄन्हविषेऽअत्तवे ॥ ॐ भूर्भुवः स्वः पितर इहागच्छत इह तिष्ठत ॐ पितृभ्यो नमः ॥ १७ ॥ तदुत्तरसार्द्धपदे वामस्फिचिं दौवारिकम् । ॐ द्वेविरूपेचरतऽस्वर्थेअन्यान्यावत्समुपधापयेते ॥ हरिरन्यस्यांभवतिस्वधावाञ्छुक्रोऽअन्यस्यांददृशेसुवर्चाः ॥ ॐ भूर्भुवः स्वः दौवारिक इहागच्छ इह तिष्ठ ॐ दौवारिकाय नमः॥ १८ ॥ तदुत्तरपदद्वये वामजंघायां सुग्रीवम् । ॐ नीलग्रीवाःशितिकंठादिवᳪरुद्राऽउपश्रिताः॥तेषांᳪसहस्रयोजनेवधन्वानितन्मासि ॥ ॐ भूर्भुवः स्वः सुग्रीव इहागच्छ इह तिष्ठ ॐ सुग्रीवाय नमः ॥ १९ ॥ तदुत्तरपदद्वये वामजानुप्रदेशे पुष्पदन्तम् । ॐ नमोगणेभ्योगणपतिभ्यश्चवोनमोनमोव्रातेभ्योव्रातपतिभ्यश्चवोनमोनमोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमोनमो विरूपेभ्यो विश्वरूपेभ्यश्चवो नमः ॥ ॐ भूर्भुवः स्वः पुष्पदन्त इहागच्छ इह तिष्ठ ॐ पुष्पदन्ताय नमः ॥ २० ॥ तदुत्तरपदद्वये वामोरौ वरुणम् । ॐ इमम्मेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥ ॐ भूर्भुवः स्वः वरुण इहागच्छ इह तिष्ठ ॐ वरुणाय नमः ॥ २१ ॥ तदुत्तरपदद्वये वामपार्श्वे असुरम् । ॐ यमश्विनानमुचेरासुरादधिसरस्वत्यसुनोदिंद्रियाय ॥ इमन्तᳪशुक्रंमधुमंतमिंदुᳪसोमᳪराजानमिहभक्षयामि ॥ ॐ भूर्भुवः स्वः असुर इहा० ॐ असुराय नमः ॥ २२ ॥ तदुत्तरसार्द्धपदे वामपार्श्वे शेषम् । ॐ याऽइषवोयातुधानानांयेवावनस्पतीᳪरनु ॥ येवावटेषुशेरतेतेभ्यःसर्पेभ्योनमः॥ ॐ भूर्भुवः स्वः शेष इहागच्छ इह तिष्ठ ॐ शेषाय नमः॥२३॥ तदुत्तरवायव्ये पदार्द्धे पापम् । ॐ एतत्तेरुद्रावसंतेनपरोमूजवतोतीहि ॥ अवततधन्वापिनाकावसः कृत्तिवासाऽअहिᳪसन्नःशिवोतीहि ॥ ॐभूर्भुवःस्वःपाप इहागच्छ इह तिष्ठ ॐ पापाय नयः ॥२४॥ तत्प्राक्पदार्द्धे वामबाहौ रोगम् । ॐ द्रापेऽअन्धसस्पतेदरिद्रन्नीललोहित ॥ आसाम्प्रजानामेषांपशूनाम्माभेर्म्मारोङ्मोचनःकिंचनाममत् ॥ ॐ भूर्भुवः स्वः रोग इहागच्छ इह तिष्ठ ॐ रोगा

य नमः ॥ २५ ॥ तत्प्राक्सार्द्धपदे वामबाहावहिर्बुध्न्यम् । ॐ अहिंरिवभोगैः पर्य्येति बाहुंज्यायाहेतिम्परिबाधमानः ॥ हस्तुग्घ्नोविश्वांव्वयुनां
निविद्वान्पुमान्पुमांसंपरिपातुविश्वतः ॥ ॐ भूर्भुवः स्वः अहिर्बुध्न्य इहागच्छ इह तिष्ठ ॐ अहिर्बुध्न्याय नमः ॥ २६ ॥ तत्प्राक्पदद्वये वाम
कूर्प्परे मुख्यम् । अवतत्यधनुष्ट्वᳪसहस्राक्षशतेषुधे ॥ निशीर्य्यशल्यानांमुखांशिवोनः सुमनाभव ॥ ॐ भूर्भुवः स्वः मुख्य इहागच्छ इह
तिष्ठ ॐ मुख्याय नमः ॥ २७ ॥ तत्प्राक्पदद्वये वामबाहौ भल्लाटम् । ॐ इमा रुद्राय तवसे कपर्द्दिने क्षयद्वीराय प्रभरामहेमतीः ॥
यथाशमसद्द्विपदेचतुष्पदेविश्वंपुष्टंग्रामेऽअस्मिन्ननातुरम् ॥ ॐ भूर्भुवः स्वः भल्लाट इहागच्छ इह तिष्ठ ॐ भल्लाटाय नमः ॥ २८ ॥ तत्प्राक्प
दद्वये वामबाहौ सोमम् । ॐ सोमᳪराजानमवसेग्निमन्वारभामहे ॥ आदित्यान्विष्णुᳪ सूर्य्यं ब्रह्माणंच बृहस्पतिम् ॥ ॐ भूर्भुवः स्वः सोम
इहागच्छ इह तिष्ठ ॐ सोमाय नमः ॥ २९ ॥ तत्प्राक्पदद्वये वामांसे सर्प्पम् । ॐ विष्णोर्नुकंवीर्य्याणिप्रवोचंयः पार्थिवानिविममेरजांᳪ
सि ॥ योऽअस्कभायदुत्तरᳪसधस्थंविचक्रमाणस्त्रेधोरुगायोविष्णवेत्वा ॥ ॐ भूर्भुवः स्वः सर्प्प इहागच्छ इह तिष्ठ ॐ सर्प्पाय नमः ॥ ३० ॥
तत्प्राक्सार्द्धपदे वामश्रोत्रेऽदितिम् । ॐ इडऽएह्यदितऽएहिकाम्याऽएत ॥ मयिवः कामधरणंभूयात् ॥ ॐ भूर्भुवः स्वः अदिते गहागच्छ इह तिष्ठ
ॐ अदितये नमः ॥ ३१ ॥ तत्प्रागर्द्धपदे वामनेत्रे दितिम् ॥ ॐ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्मातासपितासपुत्रः ॥ विश्वेदेवाऽअदि
तिः पञ्चजनाऽअदितिर्जातमदितिर्ज्जनित्वम् ॥ ॐ भूर्भुवः स्वः दिते इहागच्छ इह तिष्ठ ॐ दितये नमः ॥ ३२ ॥ मध्यपदेष्वीशानपदोत्तरार्द्धे
अपः । ॐ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ ॐ भूर्भुवः स्वः आप इहागच्छत इह तिष्ठत ॐ अद्भ्यो नमः ॥ ३३ ॥
ईशानपददक्षिणार्द्धे आपवत्सम् । ॐ आतेवत्सोमनोजमत्परमाच्चित्सधस्थात ॥ अग्नेत्वंकामयागिरा ॥ ॐ भूर्भुवः स्वः आपवत्स इहागच्छ
इह तिष्ठ ॐ आपवत्साय नमः ॥ ३४ ॥ तद्दक्षिणपदद्वयेऽर्य्यमणम् । ॐ यदद्यसूरऽउदितेनागा मित्रोऽअर्य्यमा ॥ सुवातिसविताभगः ॥

ॐ भूर्भुवः स्वः अर्यमन्निहागच्छ इह तिष्ठ ॐ अर्यम्णे नमः ॥ ३५ ॥ तद्दक्षिणे आग्नेयपदार्द्धे सावित्रम् । ॐ हस्तऽआधाय सविता बिभ्रदभ्रिꣳ हिरण्मयीम् ॥ अग्नेर्ज्योतिर्निचाय्य पृथिव्याऽअध्याभरदानुष्टुभेन च्छन्दसाङ्गिरस्वत् ॥ ॐ भूर्भुवः स्वः सावित्र इहागच्छ इह तिष्ठ ॐ सावित्राय नमः ॥ ३६ ॥ आग्नेयपदपश्चिमार्द्धे सवितारम् । ॐ विश्वानि देव सवितर्दुरितानि परासुव ॥ यद्भद्रं तन्नऽआसुव ॥ ॐ भूर्भुवः स्वः सवितरिहागच्छ इह तिष्ठ ॐ सवित्रे नमः ॥ ३७ ॥ तत्पश्चिमपदद्वये विवस्वन्तम् । ॐ विवस्वन्नादित्यैष ते सोमपीथस्तस्मिन्मत्स्व ॥ श्रदस्मै नरो वचसे दधातन यदाशीर्दा दम्पती वाममश्नुतः ॥ पुमान्पुत्रो जायते विन्दते वस्वधा विश्वाहारप एधते गृहे ॥ ॐ भूर्भुवः स्वः विवस्वन्निहागच्छ इह तिष्ठ ॐ विवस्वते नमः ॥ ३८ ॥ तत्पश्चिमे नैर्ऋत्यपदार्द्धे विबुधाधिपम् । ॐ सबोधि सूरिर्म्मघवा वसुपते वसुदावन् ॥ युयोध्यस्मद्द्वेषाꣳसि विश्वकर्मणे स्वाहा ॥ ॐ भूर्भुवः स्वः विबुधाधिप इहागच्छ इह तिष्ठ ॐ विबुधाधिपाय नमः ॥ ३९ ॥ तदुत्तरार्द्धे जयन्तम् । ॐ अषाढंयुत्सु पृतनासु पप्रिꣳ स्वर्षामप्सां वृजनस्य गोपाम् ॥ भरेषुजाꣳ सुक्षितिꣳ सुश्रवसं जयन्तं त्वामनु मदेम सोम ॥ ॐ भूर्भुवः स्वः जयन्त इहागच्छ इह तिष्ठ ॐ जयन्ताय नमः ॥ ४० ॥ तदुत्तरपदद्वये जठरवामे मित्रम् ॥ ॐ मित्रो नऽएहि सुमित्रधऽइन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तꣳ स्योनः स्योनम् ॥ स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान्रक्षध्वम्मा वो दभन् ॥ ॐ भूर्भुवः स्वः मित्र इहागच्छ इह तिष्ठ ॐ मित्राय नमः ॥ ४१ ॥ तदुत्तरे वायव्यपदार्द्धे वामहस्ते राजयक्ष्माणम् । ॐ नाशयित्री बलासस्यार्शसऽउपचितामसि ॥ अथो शतस्य यक्ष्माणाम्पाकारोरसि नाशनी ॥ ॐ भूर्भुवः स्वः राजयक्ष्मन्निहागच्छ इह तिष्ठ ॐ राजयक्ष्मणे नमः ॥ ४२ ॥ तत्पूर्वार्द्धे वामहस्ते रुद्रम् । ॐ अवरुद्रमदीमह्यव देवं त्र्यम्बकम् । यथा नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात् ॥ ॐ भूर्भुवः स्वः रुद्र इहागच्छ इह तिष्ठ ॐ रुद्राय नमः ॥ ४३ ॥ तत्पूर्वपदद्वये वामहस्ततले पृथ्वीधरम् ॥ ॐ स्योना पृथिवि नो भवानृक्षरा नि

वेश्मनी ॥ यच्छानः शर्म्म सप्रथाः ॥ ॐ भूर्भुवः स्वः पृथ्वीधर इहागच्छ इह तिष्ठ ॐ पृथ्वीधराय नमः ॥ ४४ ॥ ततो मध्यपद
चतुष्के हृदये ब्रह्माणम् ॥ ॐ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतः सुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥
ॐ भूर्भुवः स्वः ब्रह्मन्निहागच्छ इह तिष्ठ ॐ ब्रह्मणे नमः ॥ ४५ ॥ ततो मण्डपाद्बहिरीशानादिषु चरक्यादीनावाहयेत् । ॐ यन्तेदेवीनिर्ऋ
तिराबबंधपाशङ्ग्रीवास्वविचृत्यम् ॥ तन्तेविष्याम्यायुषानेमध्यादथैतम्पितुमद्धिप्रसूतः ॥ नमोभूत्यैयेदंचकार ॥ ॐ भूर्भुवः स्वः चरकि इहा
गच्छ इह तिष्ठ ॐ चरक्यै नमः ॥ इतीशाने ॥ १ ॥ ॐ अक्षराजायकितवंकृतायादिनवदर्शंत्रेतायैकल्पिनंद्वापरायाधिकल्पिनमास्कन्दायसभा
स्थाणुंमृत्यवेगोव्यच्छमन्तकायगोघातंक्षुधेयोगांविकृन्तंतंभिक्षमाणऽउपतिष्ठतिदुष्कृतायचरकाचार्यंपाप्मनेसैलगम् ॥ ॐ भूर्भुवः स्वः विदारि
इहागच्छ इह तिष्ठ ॐ विदार्य्यै नमः ॥ इत्यग्निकोणे ॥ २ ॥ ॐ इन्द्रस्यक्रोडोदित्यैपाजस्यन्दिशां जत्रवोदित्यैभसज्जीमूतान्हृदयौपशेनान्तरि
क्षम्पुरीततानभऽउदर्य्येण चक्रवाकौमतस्नाभ्यां दिवंवृक्काभ्यां गिरीन्प्लाशिभिरुपलान्प्लीह्नावल्मीकान्क्लोमभिर्ग्लौभिर्गुल्मान्हिराभिःस्रवन्तीर्ह्रदा
न्कुक्षिभ्यांसमुद्रमुदरेणवैश्वानरंभस्मना ॥ ॐ भूर्भुवः स्वः पूतने इहागच्छ इह तिष्ठ ॐ पूतनायै नमः ॥ इति नैर्ऋतिकोणे ॥ ३ ॥ ॐ यस्यां
स्तेघोरऽआसंजुहोम्म्येषाम्बन्धानामवसर्जनाय ॥ यांत्वाजनोभूमिरितिप्रमन्देतेनिर्ऋतिंत्वाहंपरिवेदविश्वतः ॥ ॐ भूर्भुवः स्वः पापराक्षसि
इहागच्छ इह तिष्ठ ॐ पापराक्षस्यै नमः ॥ इति वायवीयकोणे ॥ ४ ॥ ततः पूर्वादिदिक्षु स्कन्दादीन् । ॐ यत्रबाणाः संपतन्तिकुमाराविशि
खाऽइव ॥ तन्नऽइन्द्रोबृहस्पतिरदितिःशर्म्मयच्छतुविश्वाहाशर्मयच्छतु ॥ ॐ भूर्भुवः स्वः स्कन्द इहागच्छ इह तिष्ठ ॐ स्कन्दाय नमः ॥ इति
पूर्वस्याम् ॥ १ ॥ ॐ यद्वद्यमरऽउदितेनांगामित्रोऽअर्य्यमा ॥ सुवातिसविताभगः ॥ ॐ भूर्भुवः स्वः अर्यमन्निहागच्छ इह तिष्ठ ॐ अर्यम्णे नमः॥
इति दक्षिणस्याम् ॥ २ ॥ ॐ हिंकाराय स्वाहा हिंकृताय स्वाहा क्रन्दते स्वाहा वक्रन्दाय स्वाहा प्रोथते स्वाहा प्रप्रोथाय स्वाहा गन्धाय

स्वाहा ग्धाताय स्वाहा निविष्टाय स्वाहोपविष्टाय स्वाहा सन्दिताय स्वाहा वल्गते स्वाहासीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वाहा कूजते स्वाहा प्रबुद्धाय स्वाहा विजृम्भमाणाय स्वाहा विचृताय स्वाहा सᳫंहानाय स्वाहोपस्थिताय स्वाहायनाय स्वाहा प्रायणाय स्वाहा ॥ ॐ भूर्भुवः स्वः जृम्भक इहागच्छ इह तिष्ठ ॐ जृम्भकाय नमः ॥ इति पश्चिमायाम् ॥ ३ ॥ ॐ कास्विदासीत्पूर्वचित्तिः किᳫं स्विदासीद्बृहद्वयः ॥ कास्विदासीत्पिलिप्पिलाकास्विदासीत्पिशङ्गिला ॥ ॐ भूर्भुवः स्वः पिलिपिच्छ इहागच्छ इह तिष्ठ ॐ पिलिपिच्छाय नमः ॥ इत्युत्तरस्याम् ॥ ४ ॥ ततः प्रागादिदिक्ष्विन्द्रादीन् ॥ पूर्वे ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रᳫंहवेहवेसुहवᳫंशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रᳫंस्वस्तिनोमघवाधात्विन्द्रः ॥ ॐ भूर्भुवः स्वः इन्द्र इहागच्छ इह तिष्ठ ॐ इन्द्राय नमः ॥ १ ॥ आग्नेय्याम् ॥ त्वन्नोऽअग्नेवरुणस्य विद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाᳫंसिप्रमुमुग्ध्यस्मत् ॥ ॐ भूर्भुवः स्वः अग्न इहागच्छ इह तिष्ठ ॐ अग्नये नमः ॥ २ ॥ याम्ये ॥ ॐ यमायत्वामखायत्वासूर्यस्यत्वातपसे ॥ देवस्त्वासवितामध्वानक्तुपृथिव्याः सᳫंस्पृशस्पाहि ॥ अर्चिरसि शोचिरसितपोसि ॥ ॐ भूर्भुवः स्वः यम इहागच्छ इह तिष्ठ ॐ यमाय नमः ॥ ३ ॥ नैर्ऋत्याम् ॥ ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ ॐ भूर्भुवः स्वः निर्ऋते इहागच्छ इह तिष्ठ ॐ निर्ऋतये नमः ॥ ४ ॥ पश्चिमे ॥ ॐ वरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनीस्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ ॐ भूर्भुवः स्वः वरुण इहागच्छ इह तिष्ठ ॐ वरुणाय नमः ॥ ५ ॥ वायव्ये ॥ ॐ आनोनियुद्भिः शतिनीभिरध्वरᳫंसहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनमादयस्वयूयंपातस्वस्तिभिः सदानः ॥ ॐ भूर्भुवः स्वः वायो इहागच्छ इह तिष्ठ ॐ वायवे नमः ॥ ६ ॥ उत्तरे ॥ ॐ वयᳫंसोमव्रतेतवमनस्तनूषुबिभ्रतः । प्रजावन्तःसचेमहि ॥ ॐ भू० स्वः कुबेर इहागच्छ इह तिष्ठ ॐ कुबेराय नमः ॥ ७ ॥ ईशान्याम् ॥ ॐ तमीशानं जगतस्तस्थुषस्पतिं

धियंजिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ॐ भूर्भुवः स्वः ईशान इहागच्छ इह तिष्ठ ॐ ईशानाय नमः ॥ ८ ॥ ईशानपूर्वयोर्मध्ये ब्रह्माणम् ॥ ॐ अस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥ यःशंसतेस्तुवतेधायिपज्रऽइन्द्रज्येष्ठाऽअस्माँऽअवन्तुदेवाः ॥ ॐ भूर्भुवः स्वः ब्रह्मन्निहागच्छ इह तिष्ठ ॐ ब्रह्मणे नमः ॥ ९ ॥ निर्ऋतिवरुणयोर्मध्येऽनन्तम् ॥ ॐ स्योनापृथिविनोभवानृक्षरा निवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ ॐ भूर्भुवः स्वः अनन्त इहागच्छ इह तिष्ठ ॐ अनन्ताय नमः ॥ १० ॥ इत्यावाह्य ॐ वास्तुपीठदेवताभ्यो नम इति प्रणम्य प्रतिष्ठां कुर्यात् ॥ तत्र मन्त्रः ॥ ॐ मनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमंतनोत्वरिष्टंयज्ञꣳसमिमंदधातु ॥ विश्वेदेवासऽइहमादयन्तामों ३ प्रतिष्ठ ॥ इति प्रतिष्ठां कृत्वा । तदुत्तरे ताम्रकलशं स्थापयेत् ॥ तत्र प्रयोगः ॥ ॐ आजिघ्रकलशंमह्यात्वाविशन्त्विन्दवः ॥ पुनरूर्जानिवर्त्तस्वसानः सहस्रंधुक्ष्वोरुधारापयस्वतीपुनर्माविशताद्रयिः ॥ इति कलशस्थापनम् ॥ ॐ वरुणस्योत्तम्भनमसि वरुणस्यस्कम्भसर्जनीस्थो वरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ इति तत्र जलपूरणम् ॥ ॐ गन्धद्वारामिति गन्धम् ॥ वसोःपवित्रमसिशतधारंवसोःपवित्रमसिसहस्रधारम् ॥ देवस्त्वासविता पुनातुवसोःपवित्रेणशतधारेणसुप्वाकामधुक्षः ॥ इति कण्ठे वस्त्रवेष्टनम् ॥ ॐ याःफलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वꣳहसः ॥ इति तत्र पूगीफलक्षेपणम् ॥ ॐ परिवाजपतिःकविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥ इति पञ्चरत्नप्रक्षेपणम् ॥ ॐ हिरण्यगर्भःसमवर्त्तताग्रे भूतस्यजातःपतिरेकऽआसीत ॥ सदाधारपृथिवींद्यामुतेमां कस्मैदेवायहविषाविधेम ॥ इति हिरण्यप्रक्षेपणम् ॥ ॐ याऽओषधीःपूर्वाजातादेवेभ्यस्त्रियुगंपुरा ॥ मनैनुबभ्रूणामहꣳशतंधामानिसप्तच ॥ इति सर्वौषधिक्षेपणम् ॥

१ वास्तुमण्डलस्योत्तरे मध्येऽपि वा ।

ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ इति सप्तमृदः ॥ ॐ काण्डात्काण्डात्प्ररोहन्तीपरुषः परुषस्परि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ इति दूर्वाः ॥ ॐ अश्वत्थेवोनिषदनंपर्णेवोवसतिष्कृता ॥ गोभाजइत्किलासथयत्सनवथपूरुषम् ॥ इति कलशमुखेऽश्वत्थन्यग्रोधचूतोदुम्बरप्लक्षपत्राणि स्थापयेत् ॥ ॐ पवित्रेस्थोवैष्णव्यौसवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेणपवित्रेणसूर्य्यस्यर श्मिभिः ॥ तस्यतेपवित्रपते पवित्रपूतस्ययत्कामःपुनेतच्छकेयम् ॥ इति तत्र दर्भपवित्रं क्षिपेत् ॥ ॐ पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाऽइषमूर्ज्जंशतक्रतो ॥ इति तदुपरि तण्डुलपूरितपात्रं स्थापयेत् ॥ ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणि रूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मइषाणसर्वलोकम्मऽइषाण ॥ इति तत्र श्रीफलं संस्थाप्य । ॐ मनोजूतिर्जुषतामाज्यस्यबृहस्पति र्य्यज्ञमिमंतनोत्वरिष्टंय्यज्ञःसमिमंदधातु ॥ विश्वेदेवासऽइहमादयन्तामों ३ प्रतिष्ठ ॥ इति कलशं प्रतिष्ठाप्य तत्र । ॐ तत्त्वायामि ब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोद्ध्युरुशꣳसमानआयुःप्रमोषीः ॥ ॐ भूर्भुवः स्वः वरुण इहा गच्छ इह तिष्ठ । इत्यावाह्य । ॐ वरुणाय नम इति वरुणं तत्र कलशे षोडशोपचारैः पूजयेत् । ॐ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ॥ आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ १ ॥ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ॥ मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ २ ॥ कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा ॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ॥ ३ ॥ अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥ इति तत्र तीर्थान्यावाह्य ॥ ॐ देवदानवसंवादे मथ्यमाने महोदधौ ॥ उत्पन्नोऽसि यदा कुम्भ विधृतो विष्णुना स्वयम् ॥ ४ ॥ त्वत्तः सर्वाणि तीर्थानि देवाः सर्वे त्वयि स्थिताः ॥ त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ ५ ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ॥ आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ ६ ॥ त्वयि तिष्ठन्ति सर्वेऽपि यतः

कामफलप्रदाः ॥ त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ ७ ॥ इति कलशं संप्रार्थ्य ॥ तदुपरि सुवर्णमयीं कृकलासरूपां[1] वास्तुप्रतिमामग्न्युत्तारणपूर्वकं सन्निधाय पट्टवस्त्राद्यैराच्छाद्य ततस्तं सकलदेवताधिष्ठितावयवमुत्तानमीशानकोणस्थितशिरसं नैर्ऋत्यकोणस्थितपादं च यथाकारं वास्तुपुरुषं ध्यायेत् ॥ अथाग्न्युत्तारणसूक्तम् ॥ देशकालौ संकीर्त्यास्यां मूर्त्ताववघातादिदोषपरिहारार्थमग्न्युत्तारणं देवतासान्निध्यार्थं च प्राणप्रतिष्ठां करिष्य इति संकल्प्य ॥ मूर्तिं पात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारां जलधारां च ( यथाक्रमं पृथक् पृथक् ) पातयेत्सूक्तं वारद्वयं पठेत् ॥ ॐ स॒मु॒द्रस्य॑त्वाव॑क॒याग्ने॒परि॑व्ययामसि ॥ पा॒व॒कोऽअ॒स्मभ्य॑ꣳ शि॒वोभ॑व ॥ १ ॥ ॐ हि॒मस्य॑त्वा ज॒रायु॒णाग्ने॒ परि॑व्ययामसि ॥ पा॒व॒कोऽअ॒स्मभ्य॑ꣳशि॒वोभ॑व ॥ २ ॥ ॐ अ॒पामि॒दं न्यय॑नꣳ स॒मु॒द्रस्य॑नि॒वेश॑नम् ॥ अ॒न्याँस्ते॑ऽअ॒स्मत्त॑पन्तुहे॒तयः॑पाव॒कोऽअ॒स्मभ्य॑ꣳशि॒वोभ॑व ॥ ३ ॥ ॐ नम॑स्तेहर॑सेशो॒चि॒षे॒नम॑स्तेऽअस्त्व॒र्चिषे॑ ॥ अ॒न्यांस्ते॑ऽअ॒स्मत्त॑पन्तु॒हे॒तयः॑पाव॒कोऽअ॒स्मभ्य॑ꣳशि॒वोभ॑व ॥ ४ ॥ ॐ प्रा॒ण॒दाअ॑पान॒दा व्या॑न॒दाव॑र्च्चो॒दाव॑रिवो॒दाः ॥ अ॒न्याँस्ते॑ऽअ॒स्मत्त॑पन्तु॒हे॒तयः॑पाव॒कोऽअ॒स्मभ्य॑ꣳशि॒वोभ॑व ॥ ५ ॥ एवमग्न्युत्तारणं कृत्वा पञ्चामृतेन संस्नाप्य कलशोपरि स्थापयेत् ॥ अथ ध्यानम् ॥ आसीत्पूर्वं महादैत्यो वास्तुर्यज्ञापकारकः ॥ स देवैर्बहुकालेन युद्धे हत्वा महीतले ॥ १ ॥ निपात्य बहुभिर्देवैर्निबद्धश्चतुरस्रकः ॥ ईशाने मस्तको न्यस्तो नैर्ऋत्ये पादसंपुटम् ॥ २ ॥ जानुनी कूर्परीकृत्य बाहुयुग्मं तथैव च ॥ वायव्याग्न्योस्ततो जानुं हृदये चाञ्जलिस्तथा ॥ ३ ॥ पदौ कृत्य च तस्योर्ध्वं स्वयं मुक्ताः सुराः स्थिताः ॥ इति ध्यात्वा ॥ ॐ भूः वास्तुपुरुषमावाहयामि ॥ ॐ भुवः वास्तुपुरुषमावाहयामि ॥ ॐ स्वः वास्तुपुरुषमावाहयामि ॥ ॐ भूर्भुवः स्वः वास्तुपुरुष महाबलपराक्रम सर्वदेवाश्रितशरीर ब्रह्मपुत्र सकलब्रह्माण्ड

---

१ कृकलासः सरटः 'किरकांट, गिरगट' इति नाम्ना च मरुदेशे प्रसिद्धः कीटविशेषः ।

धारक भगवन्निहागच्छ ॥ ॐ आगच्छ भगवन्वास्तो सर्वदेवैराधिष्ठित ॥ भगवन्कुरु कल्याणं यज्ञेऽस्मिन्सन्निधौ भव ॥ १ ॥ ॐ वास्तोष्पते इति मन्त्रस्य वसिष्ठ ऋषिर्वास्तोष्पतिर्देवता त्रिष्टुप्छन्दो वृषवास्तुप्रतिष्ठापने विनियोगः ॥ ॐ वास्तोष्पते प्रति जानीह्यस्मान्त्स्वावेशो अनमीवो भवानः ॥ यत्त्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे ॥ १ ॥ भो वास्तुपुरुष इह तिष्ठ इत्यावाह्य ॥ ॐ वास्तोष्पतये नम इति पञ्चोपचारैः संपूज्य ॥ ॐ वास्तोष्पते सङ्कटेभ्यो मां रक्ष रक्ष स्वाहेति संप्रार्थ्य ॥ ततोऽङ्गदेवताः शिख्यादीन्प्रणवादिनमोऽन्तैर्नाममन्त्रैर्गन्धादिभिर्मिलितोपचारैर्यथोक्तप्रकारेण प्रत्येकं वा एकत्र काण्डानुसमयेन वा पञ्चोपचारैः पूजयेत् ॥ तत्र क्रमः । ॐ शिखिने नमः ॥ १ ॥ इदं पाद्यम् । एषोऽर्घः । इदमाचमनीयम् । इदं स्नानम् । इदं वस्त्रम् । इदं गन्धम् । एतेऽक्षताः । एतानि पुष्पाणि । एष धूपः । एष दीपः । एतानि नानाविधानि नैवेद्यानि । इदमाचमनीयम् । इदं ताम्बूलम् । एषा दक्षिणा ॥ १ ॥ एवं सर्वत्र ज्ञेयम् । ॐ पर्जन्याय नमः ॥ २ ॥ ॐ जयन्ताय नमः ॥ ३ ॥ ॐ कुलिशायुधाय नमः ॥ ४ ॥ ॐ सूर्याय नमः ॥ ५ ॥ ॐ सत्याय नमः ॥ ६ ॥ ॐ भृशाय नमः ॥ ७ ॥ ॐ आकाशाय नमः ॥ ८ ॥ ॐ वायवे नमः ॥ ९ ॥ ॐ पूष्णे नमः ॥ १० ॥ ॐ वितथाय नमः ॥ ११ ॥ ॐ गृहक्षताय नमः ॥ १२ ॥ ॐ यमाय नमः ॥ १३ ॥ ॐ गन्धर्वाय नमः ॥ १४ ॥ ॐ भृङ्गराजाय नमः ॥ १५ ॥ ॐ मृगाय नमः ॥ १६ ॥ ॐ पितृभ्यो नमः ॥ १७ ॥ ॐ दौवारिकाय नमः ॥ १८ ॥ ॐ सुग्रीवाय नमः ॥ १९ ॥ ॐ पुष्पदन्ताय नमः ॥ २० ॥ ॐ जलाधिपतये नमः ॥ २१ ॥ ॐ असुराय नमः ॥ २२ ॥ ॐ शेषाय नमः ॥ २३ ॥ ॐ पापाय नमः ॥ २४ ॥ ॐ रोगाय नमः ॥ २५ ॥ ॐ अहये नमः ॥ २६ ॥ ॐ मुख्याय नमः ॥ २७ ॥ ॐ भल्लाटाय नमः ॥ २८ ॥

१ गन्धं पुष्पं तथा धूपो दीपो नैवेद्यमेव च । एते पञ्चोपचाराः स्युः कैवल्यफलदायिनः ॥ इति गन्धादिका नैवेद्यान्ता पूजा पञ्चोपचारिका, सेयं स्थापितदेवानां विसर्जनात्प्राक्, यत्र साधारणी पूजोक्ता तद्विषयैवेति बोध्यम् । अत्र न दक्षिणा, नच षोडशोपचारेष्वपीति कुत्रचित्प्रसङ्गमुपलभ्याग्रे वक्ष्यामः ।

ॐ सोमाय नमः ॥ २९ ॥ ॐ नागाय नमः ॥ ३० ॥ ॐ अदितये नमः ॥ ३१ ॥ ॐ दितये नमः ॥ ३२ ॥ ॐ अद्भ्यो नमः ॥ ३३ ॥
ॐ आपवत्साय नमः ॥ ३४ ॥ ॐ अर्यम्णे नमः ॥ ३५ ॥ ॐ सावित्राय नमः ॥ ३६ ॥ ॐ सवित्रे नमः ॥ ३७ ॥ ॐ विवस्वते नमः ॥ ३८ ॥
ॐ विबुधाधिपाय नमः ॥ ३९ ॥ ॐ जयन्ताय नमः ॥ ४० ॥ ॐ मित्राय नमः ॥ ४१ ॥ ॐ राजयक्ष्मणे नमः ॥ ४२ ॥ ॐ रुद्राय नमः ॥ ४३ ॥
ॐ पृथ्वीधराय नमः ॥ ४४ ॥ ॐ ब्रह्मणे नमः ॥ ४५ ॥ ततो मण्डपाद्बहिः ईशानादिषु ॥ ॐ चरक्यै नमः ॥ १ ॥ ॐ विदार्यै नमः ॥ २ ॥
ॐ पूतनायै नमः ॥ ३ ॥ ॐ पापराक्षस्यै नमः ॥ ४ ॥ पूर्वादिषु ॥ ॐ स्कन्दाय नमः ॥ १ ॥ ॐ अर्यम्णे नमः ॥ २ ॥ ॐ जृम्भकाय नमः
॥ ३ ॥ ॐ पिलिपिच्छाय नमः ॥ ४ ॥ पुनः पूर्वादिदिक्षु ॥ ॐ इंद्राय नमः ॥ १ ॥ ॐ अग्नये नमः ॥ २ ॥ ॐ यमाय नमः ॥ ३ ॥ ॐ निर्ऋतये
नमः ॥ ४ ॥ ॐ वरुणाय नमः ॥ ५ ॥ ॐ वायवे नमः ॥ ६ ॥ ॐ कुबेराय नमः ॥ ७ ॥ ॐ ईशानाय नमः ॥ ८ ॥ ॐ ब्रह्मणे नमः ॥ ९ ॥
ॐ अनन्ताय नमः ॥ १० ॥ इत्यावाहिता अङ्गदेवताः सकलोपचारैः पूजयेत्तन्त्रेण वा ॥ ॐ इह स्थापितदेवताभ्यो नमः इमानि गन्धाक्षत
पुष्पधूपदीपाच्छादनानि प्रत्येकं पात्रस्थितं नैवेद्यमेकत्र वा नैवेद्योदकफलताम्बूलदक्षिणादीनि च समर्पयामि यथाविभागं पूजनं वो नमः ।
इत्यङ्गदेवताः संपूज्य प्रधानवास्तुपुरुषं पूजयेत् । तत्रादौ प्राणप्रतिष्ठां कुर्यात् । अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुरुद्रा ऋषयः ।
ऋग्यजुःसामानि च्छन्दांसि । क्रियामयवपुः प्राणाख्या देवता । आं बीजं ह्रीं शक्तिः क्रौं कीलकं प्राणप्रतिष्ठापने विनि
योगः । ब्रह्मविष्णुरुद्रऋषिभ्यो नमः शिरसि । ऋग्यजुःसामच्छन्दोभ्यो नमो मुखे । प्राणाख्यदेवतायै नमः हृदि । आं बीजाय नमः गुह्ये ।
ह्रीं शक्त्यै नमः पादयोः । क्रौं कीलकाय नमः सर्वाङ्गे । ॐ कं खं गं घं ङं अं पृथ्व्यप्तेजोवाय्वाकाशात्मने आं हृदयाय नमः । ॐ चं छं जं झं
ञं इं शब्दस्पर्शरूपरसगन्धात्मने ईं शिरसे स्वाहा ॥ ॐ टं ठं डं ढं णं उं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊं शिखायै वषट् । ॐ तं थं दं धं नं एं

वाक्पाणिपादपायूपस्थात्मने ऐं कवचाय हुं । ॐ पं फं बं भं मं ओं वचनादानविहरणोत्सर्गानन्दात्मने औं नेत्रत्रयाय वौषट् । ॐ यं रं लं वं शं षं सं हं लं क्षं अं मनोबुद्ध्यहंकारचित्तात्मने अः अस्त्राय फट् । एवमात्मनि मूर्तौ च कृत्वा मूर्तिं स्पृष्ट्वा जपेत् । ॐ आँ ह्रीं क्रौं यँ रँ लँ वँ शँ षँ सँ हँ ळँ क्षँ हँ सः सोऽहम् ॥ अस्य देवस्य प्राणा इह प्राणाः ॥ पुनः ॐ आँ ह्रीं क्रौं यँ रँ लँ वँ शँ षँ सँ हँ ळँ क्षँ हँ सः सोऽहम् । अस्य देवस्य जीव इह स्थितः ॥ पुनः ॐ आँ ह्रीं क्रौं यँ रँ लँ वँ शँ षँ सँ हँ ळँ क्षँ हँ सः सोऽहम् ॥ अस्य देवस्य वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानीहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा । तत अर्चाहृद्यङ्गुष्ठं दत्त्वा जपेत् । अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाश्चरन्तु च । अस्यै देवत्वमर्चायै मामहेति च कश्चन ॥ ॐ मनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमंतनोत्वरिष्टंयज्ञꣳसमिमंदधातु ॥ विश्वेदेवासऽइहमादयन्तामों ३ प्रतिष्ठ ॐ एष वै प्रतिष्ठानामयज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेव प्रतिष्ठितं भवति ॥ २ ॥ इति प्रतिष्ठाप्य ॥ ॐ भगवन्देवदेवेश ब्रह्मादिदेवतात्मक ॥ तव पूजां करिष्यामि प्रसादं कुरु मे प्रभो ॥ इत्युक्त्वा ॥ ॐ वास्तुपुरुषाय नमः पाद्यं समर्पयामि ॥ एवमर्घ्यम् ॥ आचमनम् ॥ पञ्चामृतस्नानम् ॥ शुद्धोदकम् ॥ यज्ञोपवीतम् ॥ वस्त्रम् ॥ गन्धम् ॥ पुष्पधूपदीपनैवेद्यफलताम्बूलदक्षिणादि समर्प्यार्घ्यं दद्यात् ॥ ॐ पूज्योऽसि त्रिषु लोकेषु यज्ञरक्षार्थहेतवे ॥ त्वद्विना च न सिद्ध्यंति यज्ञदानान्यनेकशः ॥ १ ॥ अयोने भगवन्भर्गललाटस्वेदसम्भव ॥ गृहाणार्घ्यं मया दत्तं वास्तो स्वामिन्नमोऽस्तु ते ॥ २ ॥ इत्यर्घ्यं दत्त्वा प्रणम्य वेदीसमीपे प्राङ्मुखः पायसबलिदानं कुर्यात् ॥ तद्यथा ॥ ॐ शिखिने नमः, एष

१ अर्चा=देवमूर्तिः ॥ अर्चा स्त्री०अर्च-आधारे अङ्, प्रतिमायाम् । भावेऽङि पूजायाम् । त्रि०॥इति शब्दस्तोममहानिधौ । २ ( इतः परं, "प्रणवेन सन्निरुध्य सजीवं ध्यात्वा "ध्रुवाद्यौः" इत्यृचं जप्त्वा देवकर्णे गायत्रीं देवमन्त्रं च जपेत् ॥ ततः कर्ता वदेत् "स्वागतं देवदेवेश मद्भाग्यात्त्वमिहागतः ॥ प्राकृतत्वमदृष्ट्वा मां बालवत् परिपालय" इति प्रतिष्ठासंग्रहेऽधिकः पाठः )३ वेदीसमीपे=वास्तुमण्डलपश्चिमप्रदेशे पलाशपत्रेषु शिख्यादिदेवेभ्यो बिडालदक्षिणकर्णसमग्रासमात्रं वा घृतशर्करायुतं पायसादि द्रव्यं गृहीत्वा ।

पायसबलिर्न मम ॥ १ ॥ ॐ पर्जन्याय नमः, एष पायसबलिर्न मम ॥ २ ॥ ॐ जयन्ताय नमः, एष पायसबलिर्न मम ॥ ३ ॥ ॐ कुलिशायु धाय नमः, एष पायसबलिर्न मम ॥ ४ ॥ ॐ सूर्याय नमः, एष पायसबलिर्न मम ॥ ५ ॥ इत्येवं प्रयोगेण सर्वेभ्यो बलीन्दद्यात् । ततश्चरक्या दिभ्यो दिक्पालेभ्यश्च माषभक्तबलीन्दद्यात् ॥ स यथा । ॐ चरक्यै नमः एष माषभक्तबलिर्न मम ॥ १ ॥ इत्येवं क्रमेण ॥ ततः प्रधानवास्तुपुरु षाय महाबलिं दद्यात् । तत्र मन्त्रः ॥ नानापक्वान्नसंयुक्तं नानागन्धसमन्वितम् ॥ बलिं गृहाण देवेश वास्तुदोषप्रणाशक ॥ ॐ वास्तुपुरुषाय नमः एष बलिर्न मम ॥ १ ॥ ( यथोक्तसम्भारैर्बलिदानकरणे प्रतिदैवं बलिद्रव्यभेदा मन्त्रभेदाश्च अत्र विस्तरभयान्नोक्ताः ) ॥ अथ प्रार्थना ॥ ॐ मन्त्रहीनं क्रियाहीनं भक्तिश्रद्धाविवर्जितम् । यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥ १ ॥ नमस्ते वास्तुदेवेश सर्वविघ्नहरो भव ॥ शान्तिं कुरु सुखं देहि सर्वान्कामान्प्रयच्छ मे ॥ २ ॥ इत्युक्त्वा वास्तुपुरुषाय नारिकेलं ससुवर्णं समर्प्य प्रणमेत् ॥ ततः पावमानेन रक्षो

---

१केचिदत्रैकस्मिन् पलाशपत्रे प्रचुरं (न्यूनतोऽपि न्यूनं पुरुषाहारप्रमितं ) पायसादि द्रव्यमादाय निम्नलिखितमन्त्रान्पठन्तः नैर्ऋत्यां दिशि, अन्यमपि महाबलिं ददति। तत्र मन्त्राः। ॐदेव्यो देवा मुनीन्द्रा भुवनपतयो दानवाः सर्वसिद्धा, यक्षा रक्षांसि नागा गरुडमुखखगा गुह्यका देवदेवाः। डाकिन्यो देववेश्या हरिदधिपतयो मातरो विघ्ननाथाः, प्रेता भूताः पिशाचाः पितृवननगराद्याधिपाः क्षेत्रपालाः ॥ १ ॥ गन्धर्वाः किन्नराः सर्वे नटिलाः पितरो ग्रहाः । कूष्माण्डाः पूतना रोगा ज्वरा वैतालिकाः शिवाः ॥२॥ असृक्प्लुताश्च पिशुना भक्ष्यमांसा ह्यनेकशः । लम्बक्रोडास्तथा ह्रस्वा दीर्घाः शुक्लास्तथैव च ॥३॥ खञ्जाः शुक्लास्तथैकाक्षा नानापक्षिमुखास्तथा । व्यालास्या उष्ट्रवक्त्राश्च अवक्त्राः क्रोडवर्जिताः ॥४॥ घमनाभास्तमालाभा द्विपाभा मेषसन्निभाः। द्रुतगाश्च मनोगाश्च वायुवेगसमाश्च ये ॥ ५ ॥ बहुवक्त्रा बह्वाशिरा बहुबाहुसमन्विताः । बहुपादा बहुदृशः सर्पाभरणभूषिताः ॥ ६ ॥ विकटा मुकुटाः केचित्तथा वै रत्नधारिणः । सूर्यकोटिप्रतीकाशा विद्युत्सदृशवर्चसः ॥७॥ कपिला हुतभुग्वर्णाः प्रमथा बहुरूपिणः । गृह्णन्तु च बलिं सर्वे तृप्ता यान्तु बलिर्नमः ॥ ८ ॥ इति ततः प्रणतिपुरस्सरं क्षमां प्रार्थयेत् । तत्र मन्त्रः ॥ भूतानि यानीह वसंति तानि बलिं गृहीत्वा विधिवत्प्रयुक्तम् । अन्यच्च वासं परिकल्प्य यान्तु क्षमन्तु तान्यत्र नमोस्तु तेभ्यः ॥ इति महाबालिविधानम् ।

घ्नेन च सूक्तेन रक्तत्रिसूत्र्या[1] मण्डपं वेष्टयेत् ॥ ॐ पवमानः सुवर्जनः इत्यादि पावमानसूक्तम् ॥ ॐ रक्षोहणम्बलगहनमिति रक्षोघ्नसूक्तं च पूर्वोक्तं पठित्वा ॐ कृणुष्वपाजःप्रसितिन्नपृथ्वींय्याहिराजेवामवाँ२ इभेन ॥ तृष्वीमनुप्रसितिन्द्रूणानोस्तासिविद्धचरक्षसस्तपिष्ठैः ॥ १ ॥ तवभ्रमास आशुयापतन्त्यनुस्पृशधृषताशोशुचानः ॥ तपूंष्यग्नेजुह्वापतङ्गानसन्दितोविसृजविष्वगुल्काः ॥ २ ॥ प्रतिस्पशोविसृजतूर्णितमोभवापायुर्विशोअस्याअदब्धः ॥ योनोदूरेअघशंसोयोअन्त्यग्नेमाकिष्टेव्याथिरादधर्षीत् ॥ ३ ॥ उदग्नेतिष्ठप्रत्यातनुष्वन्यमित्राँओषतात्तिग्महेते ॥ योनोअरातिंसमिधानचक्रेनीचातन्धक्ष्यतसन्नशुष्कम् ॥ ४ ॥ ऊर्ध्वोभवप्रतिविद्ध्याध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने ॥ अवस्थिरातनुहियातुजूनाञ्जामिमजामिम्प्रमृणीहिशत्रून् ॥ ५ ॥ इति रक्षोघ्नम् ॥ अथ पावमानं सूक्तम् ॥ ॐ पुनन्तुमादेवजनाःपुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानिजातवेदः पुनीहिमा ॥ १ ॥ पवित्रेणपुनीहिमाशुक्रेणदेवदीद्यत ॥ अग्नेक्रत्वाक्रतूँरनु ॥ २ ॥ यत्तेपवित्रमर्चिष्यग्नेविततमन्तरा ॥ ब्रह्मतेनपुनातुमा ॥ ३ ॥ पवमानःसोअद्यनः पवित्रेणविचर्षणिः ॥ यःपोतासपुनातुमा ॥ ४ ॥ उभाभ्यान्देवसवितः । पवित्रेणसवेनच । माम्पुनीहिविश्वतः ॥ ५ ॥ वैश्वदेवीपुनतीदेव्यागाद्यस्यामिमाबह्व्यस्तन्वोवीतपृष्ठाः ॥ तयामदन्तःसधमादेषुवय स्यामपतयोरयीणाम् ॥ ६ ॥ इति पावमानसूक्तं च पठेत् ॥

---

१ त्रिसूत्र्येति—त्रिरावृत्तेन कुंकुमाक्तेन सूत्रेण सूक्तद्वयमिदं पठन् मण्डपमीशानकोणादारभ्य प्रदक्षिणक्रमेण त्रिः शनैर्वेष्टयेत् । छिन्ने सूत्रेऽशुभम् । तत उत्तिष्ठन् यजमानः कुङ्कुमगन्धाक्षतपुष्पसर्वौषधिकुशदूर्वापञ्चपल्लवादिनिक्षिप्तेन पृथक्पृथग्जलदुग्धपूरितेन सच्छिद्रकलशद्वयेन ( सपत्नीकश्चेदेकं पत्न्यै समर्प्य युगपदेव, अन्यथा तु स्वयम् ) यथाक्रमं सूक्तद्वयं पठन् धाराद्वयमविच्छिन्नमीशानकोणादारभ्य प्रागादितो मण्डपं परितः पातयेत् । अत्र ध्वजपताकोच्छ्रयणमपि कुर्यादिति केचित् । अत्र धारायां छिन्नायामशुभमिति--सम्प्रदायः । इदं सूत्रवेष्टनं धारादानं च समकालमेव " वाचयित्वा ततः स्वस्ति कर्करीं परिगृह्य च । सूत्रमार्गेण तोयस्य धारां दद्यात् प्रदक्षिणम्" इति विश्वकर्मप्रकाशवचनात् ।

इति वास्तुपूजनप्रकारः ॥ ततो वायवीयपीठे योगिनीक्षेत्रपालान्पूजयेत् ॥ तत्र प्रयोगः ( व्रतराजे ) ॥ ॐ दिव्ययोगिनीमावाहयामि स्थापयामि ॐ दिव्ययोगिन्यै नमः ॥ १ ॥ ॐ महायोगिनीमावाहयामि स्थापयामि ॐ महायोगिन्यै नमः ॥ २ ॥ ॐ सिद्धियोगिनीमावाहयामि स्थापयामि ॐ सिद्धियोगिन्यै नमः ॥ ३ ॥ एवं द्वितीयोद्देशेन सर्वत्रावाहनं स्थापनं चतुर्थ्यन्तेन पूजनं ज्ञेयम् । ॐ गणेश्वर्यै नमः ॥ ४ ॥ ॐ प्रेताक्ष्यै नमः ॥ ५ ॥ ॐ डाकिन्यै नमः ॥ ६ ॥ ॐ काल्यै नमः ॥ ७ ॥ ॐ कालरात्र्यै नमः ॥ ८ ॥ ॐ निशाचर्यै नमः ॥ ९ ॥ ॐ झङ्कार्यै नमः ॥ १० ॥ ॐ रुद्रवेताल्यै नमः ॥ ११ ॥ ॐ भूतल्यै नमः ॥ १२ ॥ ॐ भूतडाम्बर्यै नमः ॥ १३ ॥ ॐ ऊर्ध्वकेश्यै नमः ॥ १४ ॥ ॐ विरूपाक्ष्यै नमः ॥ १५ ॥ ॐ शुष्काङ्ग्यै नमः ॥ १६ ॥ ॐ नरभोजन्यै नमः ॥ १७ ॥ ॐ भट्टार्य्यै नमः ॥ १८ ॥ ॐ वीरभद्रायै नमः ॥ १९ ॥ ॐ धूम्राक्ष्यै० ॥ २० ॥ ॐ कलहप्रियायै० ॥ २१ ॥ ॐ राक्षस्यै नमः ॥ २२ ॥ ॐ घोररक्ताक्ष्यै० ॥ २३ ॥ ॐ विश्वरूपायै० ॥ २४ ॥ ॐ भयङ्कर्य्यै० ॥ २५ ॥ ॐ चण्डिकायै० ॥ २६ ॥ ॐ वीरकौमार्य्यै० ॥ २७ ॥ ॐ वाराह्यै० ॥ २८ ॥ ॐ मुण्डधारिण्यै० ॥ २९ ॥ ॐ सासुर्य्यै० ॥ ३० ॥ ॐ रौद्रझङ्कारभाषिण्यै० ॥ ३१ ॥ ॐ त्रिपुरान्तकायै० ॥ ३२ ॥ ॐ भैरवध्वंसिन्यै० ॥ ३३ ॥ ॐ क्रोधदुर्मुख्यै० ॥३४॥ ॐ प्रेतवाहिन्यै०॥ ३५॥ ॐ खट्वाङ्ग्यै० ॥३६॥ ॐ दीर्घलम्बोष्ठ्यै० ॥ ३७ ॥ ॐ मालिन्यै० ॥ ३८ ॥ ॐ मन्त्रयोगिन्यै० ॥ ३९ ॥ ॐ कालाग्निग्रहण्यै० ॥ ४० ॥ ॐ चक्र्यै नमः ॥ ४१ ॥ ॐ कङ्काल्यै नमः ॥ ४२ ॥ ॐ भुवनेश्वर्य्यै नमः ॥ ४३ ॥ ॐ कटक्यै नमः ॥ ४४ ॥ ॐ कीटिन्यै नमः ॥ ४५ ॥ ॐ रौद्र्यै नमः ॥ ४६ ॥ ॐ यमदूत्यै० ॥४७॥ ॐ करालिन्यै० ॥ ४८ ॥ ॐ घोराक्ष्यै० ॥ ४९ ॥ ॐ कार्मुक्यै० ॥ ५० ॥ ॐ काकदृष्ट्यै नमः ॥ ५१ ॥ ॐ अधोमुख्यै० ॥ ५२ ॥ ॐ मुण्डाग्रधारिण्यै० ॥

---

१ गृहप्रतिष्ठायां विष्ण्वादिदेवप्रतिष्ठायां वा योगिन्यर्चा, भैरवार्चा चेयं सम्प्रदायागतैव, न **मात्स्याग्नेयमयूखोद्योतत्रिविक्रमाद्यभिमता** । शिवप्रतिष्ठायां महारुद्रादौ शिवयागे चेयमावश्यकी, एतेषां तद्गणदेवतात्वात् । दुर्गाहोमे त्वियं प्रधाना ।

॥ ५३ ॥ ॐ व्याघ्रयै० ॥ ५४ ॥ ॐ किङ्किण्यै० ॥५५॥ ॐ प्रेतभक्षिण्यै० ॥ ५६ ॥ ॐ कालरूपायै० ॥ ५७ ॥ ॐ कामाख्यायै० ॥५८॥ ॐ उष्ट्रिण्यै० ॥५९॥ ॐ योगपीठायै० ॥६०॥ ॐ महालक्ष्म्यै० ॥६१॥ ॐ एकवीरायै० ॥६२॥ ॐ कालरात्र्यै० ॥ ६३ ॥ ॐ पीठकायै नमः ॥ ६४ ॥ एवमावाहनं स्थापनं च कृत्वा चतुर्थ्यन्तेन नाममन्त्रेण प्रत्येकं पूजयेत् ॥ अनया पूजया चतुःषष्टियोगिन्यः प्रीयन्तामित्युत्सृज्य मण्डलाग्रे पायसबलिं दद्यात् ॥ इति योगिनीपूजा ॥ ततः क्षेत्रपालीयपीठदेवताः पूजयेत् । ॐ अजरमावाहयामि । ॐ अजराय नमः ॥ १ ॥ ॐ आपकुम्भमावाहयामि । ॐ आपकुम्भाय नमः ॥ २ ॥ ॐ इन्द्रस्तुतिमावाहयामि । ॐ इन्द्रस्तुतये नमः ॥ ३ ॥ एवमावाहनं द्वितीयोद्देशेन, पूजनं चतुर्थ्यन्तेन सर्वत्र ॐ ईडाचाराय नमः ॥४॥ ॐ उक्तसंज्ञाय नमः॥५॥ॐ ऊष्मादाय नमः ॥६॥ ॐ ऋषिसूदनाय नमः ॥७॥ ॐ ऋमुक्ताय नमः ॥८॥ ॐ क्लृप्तकेशाय नमः॥९॥ ॐ लृपकाय नमः ॥ १० ॥ ॐ एकदंष्ट्रकाय० ॥ ११ ॥ ॐ ऐरावताय० ॥ १२ ॥ ॐ ओघबन्धवे नमः ॥ १३ ॥ ॐ ओषधीशाय नमः ॥ १४ ॥ ॐ अञ्जनाय नमः ॥ १५ ॥ ॐ अस्त्रवाराय नमः ॥ १६ ॥ ॐ कवलाय नमः ॥ १७ ॥ ॐ खरुखानलाय नमः ॥ १८ ॥ ॐ गामुख्याय नमः ॥ १९ ॥ ॐ घण्टादाय नमः ॥२०॥ ॐ ङमनसे नमः ॥ २१ ॥ ॐ चण्डिवारणाय नमः ॥ २२ ॥ ॐ छटाटोपाय नमः ॥ २३ ॥ ॐ जटालाय नमः ॥ २४ ॥ ॐ झङ्गीवाय नमः ॥ २५ ॥ ॐ जडश्चराय नमः ॥ २६ ॥ ॐ टङ्कपाणये नमः ॥ २७ ॥ ॐ ठानबन्धवे नमः ॥ २८ ॥ ॐ डामराय नमः ॥ २९ ॥ ॐ ढक्कारवाय नमः ॥ ३० ॥ ॐ णवार्णवाय नमः ॥ ३१ ॥ ॐ तडिद्देहाय नमः ॥ ३२ ॥ ॐ थिराय नमः ॥ ३३ ॥ ॐ दन्तुराय नमः ॥३४॥ ॐ धनदाय नमः ॥ ३५ ॥ ॐ नतिक्तान्ताय नमः ॥ ३६ ॥ ॐ प्रचण्डकाय० ॥ ३७ ॥ ॐ फट्काराय नमः ॥ ३८ ॥ ॐ वीरसङ्गाय नमः ॥ ३९ ॥ ॐ भृङ्गाय नमः ॥ ४० ॥ ॐ मेघभासुराय नमः ॥ ४१ ॥ ॐ युगान्ताय नमः ॥ ४२॥ ॐ राह्यवाय नमः ॥४३॥ ॐ लम्बौष्ठाय नमः ॥४४॥ ॐ वासवाय नमः ॥ ४५ ॥ ॐ शूकनन्दाय नमः ॥ ४६ ॥ ॐ षडालाय नमः ॥४७ ॥ ॐ सुनाम्ने नमः ॥ ४८ ॥ ॐ हंब्रुकाय नमः ॥४९॥ (भेदा एकोनपञ्चाशत् क्षेत्रपा

लस्य कीर्त्तिताः ॥ मातृकाबीजभेदेन संभिन्ना नामभेदतः ॥ ) एवमेकोनपञ्चाशत् क्षेत्रपालान्संस्थाप्य । ॐ क्षौं क्षेत्रपालेभ्यो नमः । इति षोडशोपचारैः संपूज्य प्रार्थयेत् ॥ भ्राजच्चन्द्रजटाधरं त्रिनयनं नीलाञ्जनाद्रिप्रभं दोर्दंडात्तगदाकपालमरुणस्रग्गन्धवस्त्रोज्ज्वलम् ॥ घण्टामेखलघर्घरध्वानिलसज्झंकारभीमं विभुं वन्दे संहितसर्पकुण्डलधरं श्रीक्षेत्रपालं सदा ॥ १ ॥ इति प्रार्थ्य । माषभक्तबलिं गृहीत्वा । ॐ ह्रां ह्रीं ह्रूं । योगिन्यः क्षेत्रपालाश्च सर्वे यत्र समागताः । नगरे वाथ ग्रामे वा ह्यटव्यां सरितस्तथा ॥ २ ॥ ते सर्वे चैव सन्तुष्टा बलिं गृह्णन्तु मे सदा ॥ शरणागतोऽस्म्यहं तेषां सर्वे ते मम सुप्रदाः ॥ २ ॥ बलिदानेन संतुष्टाः प्रयच्छन्तु ममेप्सितम् ॥ सर्वकार्याणि कुर्वन्तु दोषांश्च घ्नन्तु मे सदा ॥ ३ ॥ इति प्रभूतबलिं समर्प्य प्रणमेत्तत आचमनम् ॥ इति श्रीरत्नदुर्गनगरनिवासिना श्रीवासिष्ठकुलोद्भवेन श्रीरामकृष्णपौत्रेण श्रीकस्तूरीचन्द्रसूनुना श्रीमहादेवभक्तेन नानानिबन्धकर्त्रा पण्डितगौडश्रीचतुर्थीलालशर्मणा कृते प्रतिष्ठाप्रकाशे वास्तुपूजनकथनं[1] नाम द्वितीयः परिच्छेदः समाप्तः ॥ २ ॥ अथ मण्डपपूजनं लिख्यते ॥ तत्रादौ गुर्वृत्विग्भिः सर्वौषधीयुतजलेन स्नापितः शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः सपत्नीकः पुत्रपौत्रयुतो यजमानः साचार्यः सर्त्विक् सम्पूर्णकलशहस्तो मंगलतूर्यनिस्वने जायमाने ॐ भ॒द्रङ्कर्णे॑भिः शृणुयामदेवा भ॒द्रम्प॑श्येमा॒क्षभि॒र्यज॑त्राः ॥ स्थि॒रैरङ्गै॑स्तुष्टु॒वाᳪ॑सस्त॒नूभि॒र्व्य॑शेमहि दे॒वहि॑तं॒ यदायुः॑ ॥ इत्यादिवेदघोषेण मण्डपपूजनं कुर्यात् ॥ आचम्य प्राणानायम्य ॥ ॐ अद्येत्यादि देशकालौ संकीर्त्यामुकदेवप्रतिष्ठायज्ञाङ्गतया गणेशपूजापूर्वकमण्डपदेवतास्थापनादि च करिष्य इति संकल्प्य यथाविधि गणेशं संपूज्य स्तम्भपूजनं कुर्यात् ॥ मध्यवेद्या ईशानादितः प्रदक्षिणक्रमेणेशान्यां ब्रह्माणम् । आवाहयामि देवेशं ब्रह्ममूर्तिं पिता

---

१ अत्र वास्तुपूजाविधानमिति युक्तः पाठः, चुरादिपूजधातोर्भावे "चिन्तिपूजिकथिकुम्बिचर्चश्च ३ । ३ । १०५" इति पाणिनीयसूत्रेणाङो विधानात्तस्य हि भावरूपेऽर्थे प्रवृत्त्युन्मुखस्य प्रत्ययान्तरस्य युजादेर्बाधकत्वाच्च ।

महम् ॥ पुस्तकं चाक्षसूत्रं च शूलहस्तं कमण्डलुम् ॥ ॥ १ ॥ हंसपृष्ठसमारूढं देवतागणसेवितम् ॥ आगच्छ भगवन्ब्रह्मन्प्रथमस्तम्भसंस्थितः ॥ २ ॥ ॐ ब्रह्मजज्ञानंप्रथमम्पुरस्ताद्विसीमत ÷ सुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ÷ ॥ ॐ भूर्भुवः स्वः ब्रह्मन्निहागच्छ इह तिष्ठेत्यावाह्य । ॐ ब्रह्मणे नमः इति गन्धादिषोडशोपचारैः पूजयेत् ॥ १ ॥ तत आग्नेयस्तम्भे विष्णुम् । आवाहयामि देवेशं विष्णुं त्रैलोक्यपूजितम् ॥ शंखचक्रगदापद्मचतुर्बाहुं सुशोभनम् ॥ १॥ गरुडे च समारूढं लक्ष्मीगणसमायुतम् ॥ आगच्छ भगवन्विष्णो द्वितीयस्तम्भसंस्थितः ॥ २ ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाꣳसुरे ॥ ॐ भूर्भुवः स्वः विष्णो इहागच्छ इह तिष्ठ ॥ ॐ विष्णवे नम इति पूजयेत् ॥ ततो नैर्ऋत्यस्तम्भे रुद्रम् । आवाहयामि देवेशं शिवं त्रैलोक्यधारिणम् ॥ वृषभे च समारूढं चन्द्रार्धकृतशेखरम् ॥ १ ॥ त्रिशूलायुधसंयुक्तं मुण्डमालाविभूषितम् ॥ उमागणसमायुक्तं नागयज्ञोपवीतकम् ॥ आगच्छ देवदेवेश तृतीयस्तम्भसंस्थितः ॥ २ ॥ ॐ नमस्तेरुद्रमन्यवऽउतोतऽइषवेनमः॥बाहुभ्यामुततेनमः॥ॐ भूर्भुवः स्वः शिव इहागच्छ इह तिष्ठ इत्यावाह्य । ॐ शिवाय नम इति पूजयेत् ॥ ३ ॥ वायुकोणे इन्द्रम् । आवाहयामि देवेशं सहस्राक्षं पुरन्दरम् ॥ ऐरावतगजारूढं वज्रायुधसमान्वितम् ॥ १ ॥ शचीपतिं महाबाहुं नानाभरणभूषितम् ॥ आगच्छ देवराजेन्द्र चतुर्थस्तम्भसंस्थितः ॥ २ ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः ॥ ॐ भूर्भुवः स्वः इन्द्र इहागच्छ इह तिष्ठ इत्यावाह्य । ॐ इन्द्राय नम इति पूजयेत् ॥ ४ ॥ ततो बाह्यस्तम्भेषु ईशानकोणादारभ्य द्वादशस्तम्भपूजनम् ॥ तत्र ईशाने सूर्यम् ॥ आवाहयामि देवेशं भास्करं तिग्मतेजसम् ॥ सप्ताश्ववाहनारूढं रथे काञ्चननिर्मिते ॥ १ ॥ रक्ताङ्गं पद्महस्तं च त्रैलोक्यतिमिरापहम् ॥ सर्वदुःखहरं देवं ब्रह्मण्यमधिकप्रभम् ॥ आगच्छ रक्षक त्वं च पञ्चमस्तम्भसंस्थितः ॥ ॐ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतम्मर्त्यञ्च ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ ॐ भू

र्भुवः स्वः सूर्य इहागच्छ इह तिष्ठ इत्यावाह्य । ॐ सूर्याय नमः इति पूजयेत् ॥ ५ ॥ ईशानपूर्वयोरन्तरालस्तम्भे गणेशम् ॥
आवाहयामि देवेशं गणनाथं विनायकम् ॥ लम्बोदरं महाकायं गजवक्त्रं गणेश्वरम् ॥ १ ॥ सिद्धिबुद्धिप्रदातारं सर्वविघ्नविनाश
कम् । सर्वेषामेव देवानां मुख्यं देवं महाबलम् ॥ आगच्छ गणनाथस्त्वं षष्ठस्तम्भसमाश्रितः ॥ २ ॥ ॐ गुणानान्त्वागुणपति
ह्वहवामहेप्प्रियाणान्त्वाप्प्रियपतिह्वहवामहे निधीनां त्वां निधिपतिह्वहवामहेव्वसोमम ॥ आहमजानिगर्ब्भधमात्वमजासिगर्ब्भधम् ॥ ॐ
भूर्भुवः स्वः गणपत इहागच्छ इह तिष्ठेत्यावाह्य ॐ गणपतये नम इति पूजयेत ॥ ६ ॥ ततः पूर्वाग्न्योरन्तरालस्तम्भे यमम् ॥
आवाहयामि देवेशं यमं जन्तुभयङ्करम् ॥ रौद्रमूर्तिं विरूपाक्षं कृष्णाञ्जनसमप्रभम् ॥ १ ॥ माहिषं रथमारूढं दण्डायुधसमन्वितम् ॥ कर्मणां
साक्षिणं देवं धर्मार्थकामचिन्तनम् ॥ आगच्छ धर्मराजेन्द्र सप्तमस्तम्भसंस्थितः ॥ २ ॥ ॐ यमायत्वामखायत्वासूर्य्यस्यत्वातपसे ॥ देवस्त्वा
सवितामद्ध्वानक्तुपृथिव्याहसुमंस्पृशस्पाहि ॥ अर्च्चिरसिशोचिरसितपोऽसि ॥ ॐ भूर्भुवः स्वः यम इहागच्छ इह तिष्ठ ॥ ॐ यमाय नमः
इति पूजनम् ॥ ७ ॥ ततोऽग्निकोणस्तम्भे शेषम् । आवाहयामि देवेशं पातालतलवासिनम् ॥ सहस्रशिरसं देवं फणामणिविभूषितम् ॥
आशीविषशतोपेतमष्टमस्तम्भसंस्थितम् ॥ १ ॥ नमोऽस्तुसर्प्पेभ्योयेकेचपृथिवीमनु ॥ येऽअन्तरिक्षेयेदिवितेभ्यः सर्प्पेभ्योनमः ॥
ॐ भूर्भुवः स्वः शेष इहागच्छ इह तिष्ठ ॥ ॐ शेषाय नमः इति पूजयेत् ॥ ८ ॥ आग्नेयदक्षिणयोरन्तरालस्तम्भे स्कन्दम् ॥ आवाह
यामि देवेशं षण्मुखं कृत्तिकासुतम् ॥ रुद्रवीर्यसमुद्भूतं देवं गणसमन्वितम् ॥ १ ॥ सर्वशास्त्रपरिज्ञातं तत्त्वज्ञं ब्रह्मवादिनम् ॥ मयूरासन
मारूढं सौम्यमूर्तिं शुभाननम् ॥ आगच्छ देवदेवेश नवमस्तम्भसंस्थितः ॥ २ ॥ ॐ यदक्रन्दः प्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥
श्येनस्यपक्षाहरिणस्यबाहूऽउपस्तुत्यंमहिजातन्तेऽअर्वन् ॥ ॐ भूर्भुवः स्वः स्कन्द इहागच्छ इह तिष्ठ इत्यावाह्य ॥ ॐ स्कन्दाय नमः इति

पूजयेत् ॥ ९ ॥ दक्षिणनैर्ऋत्यान्तरालस्तम्भे वायुम् ॥ आवाहयामि देवेशं भूतानां प्राणसंज्ञितम् ॥ सर्वाधारं महादीप्तिं बाह्याभ्यन्तरसंस्थितम् ॥ १ ॥ कृष्णमृगसमारूढं ध्वजायुधसमन्वितम् ॥ आगच्छ भगवन्वायो स्तम्भेऽस्मिन्सन्निधौ भव ॥ २ ॥ ॐ वायोयेतेसहस्त्रिणोरथा सुस्तेभिरागहि ॥ नियुत्त्वान्त्सोमपीतये ॥ ॐ भूर्भुवः स्वः वायो इहागच्छ इह तिष्ठ इत्यावाह्य ॥ ॐ वायवे नमः इति पूजयेत् ॥ १० ॥ ततो निर्ऋतिस्तम्भे सोमम् । आवाहयामि देवेशं शशिनं रात्रिनायकम् ॥ क्षीरोदधिसमुद्भूतं रुद्रशीर्षनिवासिनम् ॥ १ ॥ शुद्धस्फटिकसंकाशं मुकुटोज्ज्वलभूषितम् ॥ आगच्छ सोम देवेश स्तम्भेस्मिन्सन्निधौ भव ॥ २ ॥ ॐ आप्यायस्वसमेतुतेविश्वत ÷ सोमवृष्ण्यं ॥ भवावाजस्यसंगथे ॥ ॐ भूर्भुवः स्वः सोम इहागच्छ इह तिष्ठ इत्यावाह्य ॥ ॐ सोमाय नम इति पूजयेत् ॥ ११ ॥ ततो निर्ऋतिपश्चिमयोर्मध्यस्तम्भे वरुणम् । आवाहयामि देवेशं वरुणं जलनायकम् ॥ कुम्भे रथसमारूढं श्वेताद्रिशिखरोपमम् ॥ पाशहस्तं महाबाहुं सर्वेषामभयप्रदम् ॥ आगच्छ वरुणेशान द्वादशस्तम्भसंस्थितः ॥ २ ॥ ॐ इमम्मेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥ ॐ भूर्भुवः स्वः वरुण इहागच्छ इह तिष्ठ इत्यावाह्य ॥ ॐ वरुणाय नम इति पूजयेत् ॥ १२ ॥ पश्चिमवायव्ययोर्मध्यस्तम्भे अष्ट वसून् । आवाहयामि देवेशान्वसूनष्टौ महाबलान् ॥ अश्ववाहनसंयुक्तान्पुष्पमालाविभूषितान् ॥ वसवोऽष्टावागच्छन्तु त्रयोदशसमाश्रिताः ॥ १ ॥ ॐ वसोःपवित्रमसिशतधारंवसोःपवित्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातुवसोःपवित्रेणशतधारेणसुप्वाकामधुक्षः ॥ ॐ भूर्भुवः स्वः वसव इहागच्छत इह तिष्ठत इत्यावाह्य ॥ ॐ वसुभ्यो नम इति पूजयेत् ॥ १३ ॥ ततो वायव्यस्तम्भे धनदम् ॥ आवाहयामि देवेशं धनदं यक्षपूजितम् ॥ महाबलं दिव्यदेहं नरयानगतं विभुम् ॥ १ ॥ दिव्यमालाम्बरधरं गदाहस्तं महाभुजम् ॥ आगच्छ यक्षराज त्वं स्तम्भेऽस्मिन्सन्निधौ भव ॥ १ ॥ ॐ वयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावन्तःसचेमहि ॥ ॐ भूर्भुवः स्वः धनद इहागच्छ इह तिष्ठ ॥ ॐ धनदाय नम इति पूजयेत् ॥ १४ ॥ ततो वायव्योत्तरयोरन्त

रालस्तम्भे बृहस्पतिम् । आवाहयामि देवेशं गुरुं त्रैलोक्यपूजितम् ॥ हेमरोचनवर्णाभं पीतस्कन्धं महौजसम् ॥ १ ॥ देवानां मन्त्रिणं प्राज्ञं सर्वविद्याविशारदम् ॥ आगच्छ देवदेवेश स्तम्भेऽस्मिन्सन्निधौ भव ॥ २ ॥ ॐ बृहस्पतेऽअतियदर्य्योऽअर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणंधेहिचित्रम् ॥ ॐ भूर्भुवः स्वः बृहस्पते इहागच्छ इह तिष्ठ ॐ बृहस्पतये नम इति पूजयेत् ॥ १५ ॥ तत उत्तरेशानयोर्मध्यस्तम्भे विश्वकर्माणम् । आवाहयामि देवेशं विश्वकर्माणमीश्वरम् ॥ शुद्धस्फटिकसंकाशं सूर्यकोटिसमप्रभम् ॥ १ ॥ देवर्षिपितृभूतानां गर्भितारं सनातनम् ॥ आगच्छ विश्वकर्मस्त्वं स्तम्भेऽस्मिन्सन्निधौ भव ॥ ॐ विश्वकर्म्मन्हविषावर्धनेनत्रातारमिन्द्रमकृणोरवध्यम् ॥ तस्मैविशः समनमन्तपूर्वीरयमुग्रोविहव्योयथासत् ॥ ॐ भूर्भुवः स्वः विश्वकर्मन्निहागच्छ इह तिष्ठ इत्यावाह्य ॥ ॐ विश्वकर्मणे नम इति पूजयेत् । इति षोडशस्तम्भपूजनम् ॥ ॐ नागमात्रे नम इति बलिकाष्ठानि पूजयेत् ॥ ॐ सर्वेभ्यो नम इति शाखोद्बन्धनादि पूजनम् ॥ ततः पश्चिमद्वारेण निर्गत्य पूर्वादिद्वारतोरणपूजां कुर्यात् ॥ तत्रादौ पूर्वस्यां दिशि मण्डपाद्बहिर्हस्तमात्रे आश्वत्थं सुदृढनामकं सिन्दूरसदृशं महेन्द्रपर्वतयुतं शङ्खाङ्कितं तोरणं न्यस्य अश्वत्थतोरणैनं यज्ञं रक्ष सर्वविघ्नान्निवारय ॥ ॐ अग्निमीळेपुरोहितं यज्ञस्यदेवमृत्विजम् ॥ होतारंरत्नधातमम् ॥ ॐ ऋग्वेदाधिष्ठिताय सुदृढतोरणाय नमः सुदृढतोरणमावाहयामि । ॐ सुदृढतोरणाय नमः गन्धं

---

१ विष्णुप्रतिष्ठायामिमानि शङ्खचक्रगदापद्माङ्कितानि तोरणानि, शिवप्रतिष्ठायान्तु तान्येव विधिविहितकाष्ठैर्यथोक्तप्रमाणकानि त्रिशूलाङ्कितानि कार्याणि । तत्र पूर्वस्यामाश्वत्थे सुदृढतोरणे मङ्गलाख्यं वैष्णवं त्रिशूलं, दक्षिणस्यामौदुम्बरे विकटतोरणे शत्रुघ्ननामकं रौद्रं त्रिशूलं पश्चिमायां प्लाक्षे भीमाख्यतोरणे पुत्रप्रदाह्वयं ब्राह्मं त्रिशूलम्, उत्तरस्यां नैयग्रोधे सुप्रभतोरणे उत्तमाभिधं सौम्यं त्रिशूलमिति । अत्र प्रमाणमाह कुण्डार्के शङ्करभट्टः—"हस्तान्ते तोरणोऽस्मादिषुषडगकरोऽश्वत्थजोदुम्बरोत्थप्लक्षन्यग्रोधजाः प्राक्प्रभृतिषु फलकाः स्वर्धता मूर्ध्नि तस्य । तन्मध्ये विष्णुयागे दशरविमनुभिश्चाङ्गुलः स्वाङ्घ्रिपुष्टा शङ्खं चक्रं गदाब्जं भवति शिवमखे शूलमेकाङ्गुलोनम्" इत्यादि बहु कुण्डमण्डपादिग्रन्थेषु द्रष्टव्यम् ॥

समर्पयामि । पुष्पं धूपं दीपं नैवेद्यं ताम्बूलं दक्षिणां च समर्पयामीति गन्धादिना सम्पूज्य ॥ ॐ कृतयुगाय नम इति कृतयुगं सम्पूज्य । तत्रैव राहवे नमः राहुमावाहयामि । बृहस्पतये नमः बृहस्पतिमावाहयामि इत्यावाह्य । ॐ राहुबृहस्पतिभ्यां नमः इति गन्धादिभिः पूजयेत् । तत्रैकः कलशः स्थाप्यः । तत्र प्रयोगः । महीद्यौरिति भूमिं स्पृष्ट्वा । ॐ महीद्यौः पृथिवीचन इमंयज्ञम्मिमिक्षताम् ॥ पिपृतान्नोभरीमभिः ॥ तत्र ओषधय इति यवान् । ॐ ओषधयः समवदन्तसोमेन सहराज्ञा ॥ यस्मैकृणोतिब्राह्मणस्तः राजन्पारयामसि ॥ २ ॥ आजिघ्रमिति कलशं निधाय । ॐ आजिघ्रकलशंमह्यात्वाविशन्त्विन्दवः ॥ पुनरूर्जानिवर्त्तस्वसानः सहस्रन्धुक्ष्वोरुधारापयस्वतीपुनर्माविशताद्रयिः ॥ ३ ॥ वरुणस्योत्तमिति जलेनापूर्य । ॐ वरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्जनीस्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ ४ ॥ गन्धद्वारामिति गन्धं क्षिपेत् । ॐ गन्धद्वारांदुराधर्षां नित्यपुष्टांकरीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ५ ॥ या ऽओषधीरिति सर्वौषधीः । ॐ याऽओषधीः पूर्वाजातादेवेभ्यस्त्रियुगंपुरा ॥ मनैनुबभ्रूणामहः शतंधामानिसप्तच ॥ ॥ ६ ॥ काण्डात्काण्डादिति दूर्वाः । ॐ काण्डात्काण्डात्प्ररोहन्तीपरुषः परुषस्परि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेन च ॥ ७ ॥ अश्वत्थेव इति पञ्च पल्लवान् ॥ ॐ अश्वत्थेवोनिषदनंपर्णेवोवसतिष्कृता ॥ गोभाजइत्किलासथयत्सनवथपूरुषम् ॥ ८ ॥ स्योनापृथिवीति सप्त मृदः । ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानः शर्मसप्रथाः ॥ ९ ॥ याः फलिनीरिति पूगीफलम् । ॐ याः फलिनीर्य्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वहः हसः ॥ १० ॥ परिवाज इति पञ्चरत्नानि । ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥ ११ ॥ हिरण्यगर्भेति हिरण्यं क्षिपेत् । ॐ हिरण्यगर्भः समवर्त्ततोग्रेभूतस्य जातः पतिरेकऽआसीत् ॥ सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम ॥ १२ ॥ युवासुवासा इति वस्त्रं वेष्टयेत् । ॐ युवासुवासाः परि

वीतऽआगात्सउश्रेयान्भवातिजायमानः ॥ तन्धीरासःकवयुऽउन्नयंतिस्वाध्योमनंसादेवयन्तः ॥ १३ ॥ पूर्णादर्वीति धान्यपूर्णपात्रं निधाय। ॐ पूर्णादर्व्विपरापतसुपूर्णापुनरापंत ॥ वस्नेवुविक्रीणावहाऽइषमूर्ज्जंꣳशतक्रतो ॥ १४ ॥ ॐ श्रीश्चते इति नारिकेलं संस्थाप्य ॥ तस्मिन्कलशे ॐ ध्रुवमावाहयामि इत्यावाह्य ॥ ॐ ध्रुवाय नमः इति गन्धाद्युपचारान्समर्पयेत् ॥ ततः आचम्य दक्षिणे गत्वा औदुम्बरं विकटनामकं चक्राङ्कितं विन्ध्यनामगिरियुतं धूम्रवर्णाभं तोरणं न्यस्य । एह्येहि विकटतोरणैनं यज्ञं रक्ष सर्वविघ्नान्निवारय । ॐ इषेत्वोर्ज्जेत्वावायवंस्थदेवोवंःसविताप्रार्प्पयतुश्रेष्ठतमायकर्म्मणऽआप्यायद्ध्वमघ्न्युऽइन्द्रायभागंप्रजावंतीरनमीवाऽअंयक्ष्मावंस्तेनऽईशतमा घशꣳसोध्रुवाऽअस्मिन्गोपंतौस्यातबह्वीर्य्यजमानस्यपशून्पाहि ॥ ॐ यजुर्वेदाधिष्ठिताय विकटतोरणाय नमः विकटतोरणमावाहयामि । ॐ विकटतोरणाय नमः त्रेतायुगाय नमः, इति गन्धाद्युपचारान्समर्पयेत् ॥ तत्र ॥ ॐ सूर्याय नमः सूर्यमावाहयामि। ॐ अङ्गारकाय नमः अङ्गारकमावाहयामि । ॐ सूर्याङ्गारकाभ्यां नमः इति गन्धादीन्समर्पयेत् । तत्रैकः कलशः पूर्वोक्तविधिना संस्थाप्यः । तस्मिन्कलशे । धरायै नमः धरामावाहयामि । ॐ धरायै नमः इति गन्धाद्युपचारान्समर्पयेत् ॥ तत आचम्य पश्चिमे गत्वा प्लाक्षं सुभीमाख्यं स्वर्णसदृशप्रभं गन्धमादनपर्वतसहितं गदाङ्कितं तोरणं न्यस्य ॥ एह्येहि सुभीमतोरणैनं यज्ञं रक्ष सर्वविघ्नान्निवारय । ॐ अग्न आयाहि वीतये गृणानो हव्यदातये ॥ निहोता सत्सिबर्हिषि ॥ १ ॥ सामवेदाधिष्ठिताय सुभीमतोरणाय नमः सुभीमतोरणमावाहयामि ॥ ॐ सुभीमतोरणाय नमः द्वापरयुगाय नमः इति गन्धादिभिः सम्पूज्य। तत्र शुक्राय नमः शुक्रमावाहयामि। बुधाय नमः बुधमावाहयामि ॥ ॐ शुक्रबुधाभ्यां नमः इति गन्धाद्यर्पणं तत्रैकः कलशः स्थाप्यः। तस्मिन्कलशे वाक्पतिमावाह्य वाक्पतये नमः इति पूजयेत्। तत आचमनमुत्तरे गत्वा । वाटं सुप्रभाख्यं शुद्धस्फटिकप्रभं हिमवत्पर्वतसहितं पद्माङ्कितं तोरणं न्यस्य। एह्येहि सुप्रभतोरणैनं यज्ञं रक्ष सर्वविघ्नान्निवारय। ॐ शन्नोदेवीरभिष्ट

यु॒ऽआपोभवंतुपीतयेँ ॥ शंयोरु॒भिस्रवंतुनः ॥ अथर्ववेदाधिष्ठिताय सुप्रभतोरणाय नमः सुप्रभतोरणमावाहयामीत्यावाह्य । ॐ सुप्रभतोरणाय नमः, कलियुगाय नमः इति गन्धादिना पूजयेत् । तत्र । सोमाय नमः सोममावाहयामि । केतवे नमः केतुमावाहयामि । शनैश्चराय नमः शनैश्चरमावाहयामि । सोमकेतुशनैश्चरेभ्यो नम इति गन्धादिना पूजयेत् । तत्रैकः पूर्ववत्कलशः स्थाप्यः । तस्मिन्कलशे विघ्नेशमावाहयामि । ॐ विघ्नेशाय नमः इति गन्धादिना पूजयेत ॥ ततः पूर्वं गत्वा । पूर्ववन्महीद्यौरित्यादिविधिना प्रतिद्वारशाखं कलशद्वयं संस्थाप्य प्रतिकलशं मन्त्रावृत्तिः । अस्मिन्कलशद्वये ऐरावतदिग्गजमावाहयामि । ऐरावतदिग्गजाय नम इति गन्धादिना पूजयेत् । कलशोपरि घृतेन दीपो देयः ॥ तत्र ऋग्विधिना ऋत्विजौ । ऋग्वेदः पद्मपत्राक्षो गायत्रः सोमदैवतः॥ अत्रिगोत्रस्तु विप्रेन्द्र ऋत्विक्त्वं मे मखे भव ॥ इति प्रार्थ्य ॥ ॐ अ॒ग्निमी॑ळेपु॒रोहि॑तंय॒ज्ञस्य॑दे॒वमृ॒त्विज॑म् ॥ होता॑रंरत्न॒धात॑मम् । इति मन्त्रेण प्रत्येकं गन्धादिना पूजयेत् । श्रीसूक्तं पावमानं च सोमसूक्तं सुमङ्गलम् । पौरुषं रुद्रसूक्तं च वामदेव्यं तथैव च ॥ ९ ॥ श्रीसूक्तं हिरण्यवर्णामिति पञ्चदशर्चम् ॥ ५ ॥ पावमानं स्वादिष्ठयाम इत्यादि । सोमसूक्तं त्वं सोमप्रचिकितो इत्यादि । सुमङ्गलं कनिक्रददित्यादि । पौरुषं सहस्रशीर्षेत्यादि । रौद्रमिमा रुद्राय तवसे इत्यादि । वामदेव्यं कयानश्चित्रेत्यादि ऋग्वेदीयम् ॥ ६ ॥ ततः सहस्राक्षमैरावतसंस्थितं पीतकिरीटिनं कुण्डलधरं दक्षिणवामकरस्थवज्रोत्पलमिन्द्रं ध्यात्वा । ॐ एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधरोऽमरेशः ॥ संवीज्यमानोऽप्सरसां गणेन रक्षाध्वरं नो भगवन्नमस्ते ॥ ॐ भूर्भुवः स्वः इन्द्र इहागच्छ इह तिष्ठ ॥ इति साङ्गं सपरिवारं सायुधं सशक्तिकमिन्द्रं द्वारकलशे आवाह्य ॥ ॐ त्रा॒तार॒मिन्द्र॑मवि॒तार॒मिन्द्र॒ꣳहवे॑हवेसु॒हव॒ꣳ शूर॒मिन्द्र॑म् ॥ ह्वया॑मिश॒क्रम्पु॑रुहू॒तमिन्द्र॒ꣳस्व॒स्तिनो॑म॒घवा॑धा॒त्विन्द्रः॑ ॥ इन्द्राय नमः इति गन्धादिभिः प्रपूज्य ॥ ॐ आ॒शुःशिशा॑नो वृष॒भोनभी॒मोघ॑नाघ॒नःक्षोभ॑णश्चर्षणी॒नाम् ॥ सं॒क्रन्द॑नोनिमि॒षऽए॑कवी॒रःश॒तꣳसेना॑ऽअजयत्सा॒कमिन्द्रः॑ ॥

इति मन्त्रेण पीतौ पताकाध्वजावुच्छ्रयेत ॥ ततो द्वारशाखयोर्दक्षिणोत्तरयोः । धात्रे नमः विधात्रे नमः । ( ऊर्ध्वं ) द्वारश्रियै नमः । गणपतये नमः ॥ ( तदुपरि ) वास्तुपुरुषाय नमः । ( अधो ) देहल्यै नमः । वामदक्षिणस्तम्भयोर्गणेशाय० । स्कन्दाय नमः । कलशद्वये गंगायै नमः । यमुनायै नमः । इन्द्राय नमः । इति संपूज्य इन्द्रः सुरपतिः श्रेष्ठो वज्रहस्तो महाबलः ॥ शतयज्ञाधिपो देवस्तस्मै नित्यं नमो नमः ॥ इति नत्वा ततो माषभक्तबलिं गृहीत्वा ॥ ॐ इन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकायैतं माषभक्तबलिं समर्पयामि । इति बलिं दत्त्वाऽऽचामेत् । तत आग्नेय्यां गत्वा तत्र पूर्ववत्कलशं संस्थाप्य ॥ तत्र ॥ पुण्डरीकाय नमः पुण्डरीकमावाहयामि ॥ अमृताय० अमृतमा० ॥ पुण्डरीकामृताभ्यां नम इति गन्धादिना संपूज्य तत्र दीपो देयः । ततः छागस्थं रक्तवर्णं दक्षिणवामकरद्वयधृतशक्तिकमण्डलुं यज्ञोपवीतिनमग्निं ध्यात्वा ॐ एह्येहि सर्वामरहव्यवाहमुनिप्रवर्यैरभितोऽभिजुष्टः ॥ तेजोवता लोकगणेन सार्द्धं ममाध्वरं पाहि कवे नमस्ते ॥ ॐ भूर्भुवः स्वः अग्ने इहागच्छ इह तिष्ठ इति साङ्गं सपरिवारं सायुधं सशक्तिकं कलशे आवाह्य ॐ त्वन्नोऽअग्नेतवदेवपायुभिर्म्मघोनो रक्षतन्वश्चवन्द्य ॥ त्राता तोकस्यतनयेगवामस्यनिमेषꣳरक्षमाणस्तवव्व्रते ॥ १ ॥ ॐ अग्नये नम इति गंधादिना प्रपूज्य । ॐ अग्निंदूतंपुरोदधेहव्यवाहमुपब्ब्रुवे ॥ देवा२ꣳ आसादयादिह ॥ इति मन्त्रेण रक्तौ ध्वजापताकावुच्छ्रयेत्[1] ( रक्ते ध्वजपताके उच्छ्रयेत् ) ॥ अथ प्रार्थना । आग्नेयः पुरुषो रक्तः सर्वदेवमयोऽव्ययः ॥ धूम्रकेतुरजोऽध्यक्षस्तस्मै नित्यं नमो नमः ॥ १ ॥ अग्नये सांगाय सपरिवाराय सायुधाय सशक्तिकाय एतं माषभक्तबलिं समर्पयामि इति बलिं दत्त्वाऽऽचामेत् ॥ २ ॥ ततो दक्षिणे गत्वा । प्रतिद्वारशाखं कलशद्वयं संस्थाप्य तत्र कलशद्वये । वामनाख्यं दिग्गजमावाहयामि । ॐ वामना

---

१ अशुद्धोऽयं पाठः ध्वजशब्दस्य स्त्रीत्वाभावात् पताकाशब्दस्य च नित्यस्त्रीलिङ्गत्वात् तथा हि " पताका–स्त्री० पत्यते बोध्यते योधादिभेदोऽनया, पत–आकन् " वंशोपरि देये त्रिकोणाकारवस्त्रखण्डे इत्यादि शब्दस्तोममहानिधौ । " पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम् " इत्यमरेऽपि । त्रिकोणचतुष्कोणाकृत्याऽनयोर्भेदः !

र्ध्यदिग्गजाय नम इति संपूज्य दीपं दद्यात् । तत्र यजुर्वेदिनौ द्वारपालौ । कातराक्षो यजुर्वेदस्त्रैष्टुभो विष्णुदैवतः ॥ काश्यपेयस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव ॥ इति प्रत्येकं वृत्वा । इषेत्वोर्जेत्वा० । इति मन्त्रेण गन्धादिभिः प्रत्येकं सम्पूज्य । आ नो भद्रानुवाकश्च आशुः शिशानक स्तथा । यद्देवा त्रीणि च पठेत्ततोऽष्टौ च पुनन्तु माम् ॥ २ ॥ आ नो भद्रानुवाकः आ नो भद्राः क्रतवो इत्यादिदशमन्त्रात्मकः । आशुःशिशानकः आशुःशिशानोइत्यादिअष्टादशमन्त्रात्मकः । यद्देवा देवहेडनमित्यादिमन्त्रत्रयम् । पुनन्तु मा देवजना इत्याद्यष्टौ मन्त्राः॥ततो महिषारूढं धृतदण्डपाश दक्षिणवामकरं कृष्णाञ्जननगोपममाग्निसमलोचनं यमं ध्यात्वा ॥ ॐ एह्येहि वैवस्वत धर्मराज सर्वामरैरर्चितधर्ममूर्ते ॥ शुभाशुभानन्दशुचाम धीश शिवाय नः पाहि मखं नमस्ते ॥ ॐ भूर्भुवः स्वः यम इहागच्छ इह तिष्ठ इति यमं साङ्गं० द्वारकलशे आवाह्य । ॐ यमाय त्वाङ्गिर स्वते पितृमते स्वाहा ॥ स्वाहा घर्माय स्वाहा घर्मः पित्रे ॥ ॐ यमाय नम इति गन्धादिना प्रपूज्य ॥ ॐ आयङ्गौः पृश्निरक्रमीदसदन्मातरं पुरः ॥ पितरञ्च प्रयन्त्स्वः ॥ इति कृष्णौ पताकाध्वजावुच्छ्रयेत् ॥ प्रार्थना । वैवस्वत महादेव नमस्ते धर्मसाक्षिक । शिवाज्ञापिहितो देव दिशं रक्ष भवानिह ॥ १ ॥ ततो द्वारशाखयोः । बलाय नमः । सबलाय नमः । ( ऊर्ध्वम् ) । श्रियै नमः । गणपतये नमः । ( अधः ) । देहल्यै नमः । वास्तुपुरुषाय नमः । स्तम्भयोः । पुष्पदन्ताय नमः । कपर्दिने नमः । कलशद्वये । गोदावर्यै नमः । कृष्णायै नम इति सम्पूज्य । ॐ य माय साङ्गाय० एतं माषभक्तबलिं समर्पयामि । इति बलिं दत्त्वाचामेत् ॥ ततो नैर्ऋत्यां गत्वा । तत्र पूर्ववत्कलशं संस्थाप्य तस्मिन् कुमुदमा वाहयामि । दुर्ज्जयमावाहयामि । कुमुददुर्ज्जयाभ्यां नम इति प्रपूज्य दीपो देयः । तत्र निर्ऋतिं नरारूढं महाकायं खड्गहस्तं महाबलं नीलं राक्ष सवेष्टितं पीताभरणभूषितं ध्यात्वा । एह्येहि रक्षोगणनायकस्त्वं विशालवेतालपिशाचसङ्घैः ॥ ममाध्वरं पाहि पिशाचनाथ लोकेश्वरस्त्वं भगवन्नमस्ते ॥ ॐ भूर्भुवः स्वः निर्ऋते इहागच्छ इह तिष्ठ इति साङ्गं निर्ऋतिं कुम्भे आवाह्य । ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्वि

हितस्क्करस्य ॥ अुन्नयमुस्मादिँच्छुसातंऽइत्यानमौंदेविनिर्ऋतेतुभ्यमस्तु ॥ ॐ निर्ऋतये नम इति संपूज्य ॥ ॐ मोषूणइन्द्रात्रंपृत्सुदेवैरस्तिहिष्मा तेशुष्मिन्नवयाः ॥ मुहश्चिद्यस्यमीढुषोंयुव्याहाविष्मतोमुरुतोवन्दतेगीः ॥ इति नीलपताकाध्वजावुच्छ्रयेत् । राक्षसेभ्यो हि रक्षार्थं भवानत्र प्रतिष्ठितः ॥ निर्विघ्नां यज्ञभूमिं मे कुरुष्व शववाहन ॥ निर्ऋतये साङ्गाय० एतं माषभक्तबलिं० ॥ ततः पश्चिमे गत्वा कलशद्वयं प्रतिशाखं पूर्ववत्संस्थाप्य कलशद्वये अञ्जनाख्यदिग्गजमावाहयामि इत्यावाह्य गन्धादिना प्रपूज्य । तत्र सामवेदिनौ द्वौ द्वारपालौ । सामवेदस्तु पिङ्गाक्षो जागतः शक्रदैवतः ॥ भारद्वाजस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव ॥ इति वृत्वा ॥ ॐ अग्न्नु आयांहि वीतयें गृणानो हुव्यदांतये ॥ निहोतासत्सिबर्हिषि ॥ इति मन्त्रेण प्रत्येकं गन्धादिना सम्पूज्य वामदेव्यं बृहत्साम ज्येष्ठसाम रथन्तरम् । तथा पुरुषसूक्तं च रुद्रसूक्तमतः परम् ॥ आज्यदोहादिसामानि पश्चिमे द्वारपालकौ ॥ १ ॥ ( वामदेव्यं कयानश्चित्रेत्यादि । बृहत्साम, त्वामिद्धिहवामह इत्यादि । ज्येष्ठसाम, मूर्द्धानंदिव इत्यादि । रथन्तरम्, अभित्वाशूरनोनुम इत्यादिकम् । पुरुषसूक्तं, सहस्त्रशीर्षा इत्यादिकम् । रुद्रसूक्तम्, आवोराजानमिति वर्गद्वयम् । आज्यदोहादि देवव्रतानीत्यादिकम् ) ॥ ततो मकरस्थं, पाशहस्तं शुक्लवर्णं किरीटधारिणं वरुणं ध्यात्वा ॥ ॐ एह्येहि यादोगणवारिधीनां गणेन पर्ज्जन्य सहाप्सरोभिः ॥ विद्याधरेन्द्रामरगीयमान पाहि त्वमस्मान्भगवन्नमस्ते ॥ ॐ भूर्भुवः स्वः वरुण इहागच्छ इह तिष्ठ साङ्गं वरुणं कलशयोरावाह्य ॥ ॐ तत्त्वांयामिब्रह्मणाव्वन्दमानुस्तदाशांस्तेयजमानोहुविर्ब्भिः ॥ अहेडमानोव्वरुणेहबोद्धयुरुशꣳसमानुऽआयुःप्रमोषीः ॥ ॐ वरुणाय नमः इति मन्त्रेण गन्धादिभिः सम्पूज्य ॥ ॐ इमम्मेव्वरुणश्रुधीहवमुद्याचमृडय ॥ त्वामवस्युराचके ॥ इति मन्त्रेण श्वेतौ पताकाध्वजावुच्छ्रयेत् ॥ पाशहस्तात्मको देवो जलराश्याधिपो महान् ॥ निम्नगामीति विख्यातस्तस्मै वरुण ते नमः ॥ इति नत्वा ॥ द्वारशाखयोः ॥ जयाय नमः । विजयाय नमः । ( ऊर्ध्वम् ) ॥ श्रियै नमः । गणपतये नमः । ( अधः ) ॥ देहल्यै नमः ।

वास्तुपुरुषाय नमः ॥ स्तम्भयोः ॥ नन्दिने नमः । चन्द्राय नमः ॥ कलशद्वये ॥ रेवायै नमः ॥ नर्मदायै नमः ॥ इति संपूज्य ॥ वरुणाय साङ्गाय० एतं माषभक्तबलिं० ततो वायव्यां गत्वा पूर्ववत्कलशं निधाय तत्र पुष्पदन्तमावाहयामि । ॐ पुष्पदन्ताय नमः । सिद्धार्थमावाहयामि ॐ सिद्धार्थाय नमः । इति गन्धादिना संपूज्य दीपो देयः ॥ ततो मृगाधिरूढं धूम्रवर्णं चित्राम्बरधरं युवानं दक्षिणवामहस्तद्वये वरध्वजधरं वायुं ध्यात्वा ॥ ॐ एह्येहि यज्ञे मम रक्षणाय मृगाधिरूढं सह सिद्धसङ्घैः ॥ प्राणाधिपः कालकवे सहाय गृहाण पूजां भगवन्नमस्ते ॥ ॐ भूर्भुवः स्वः वायो इहागच्छ इह तिष्ठ इति साङ्गं वायुं कलशे आवाह्य ॐ आनोनियुद्भिः शतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिः सदानः ॥ ॐ वायवे नमः इति संपूज्य ॥ ॐ वायोयेतेसहस्रिणोरथासस्तेभिरागहि ॥ नियुत्वान्सोमपीतये ॥ इति धूम्रौ पताकाध्वजावुच्छ्रयेत् ॥ अनाकारो महौजाश्च पश्चादृष्टिर्गतिर्दिवि ॥ तस्मै पूज्याय महते वायवेऽहं नमामि ते ॥ नत्वा । वायवे साङ्गाय० एतं माषभक्तबलिं० ॥ तत उत्तरे गत्वा प्रतिद्वारशाखं कलशद्वयं निधाय तत्र कलशद्वये सार्वभौमदिग्गजमावाहयामि ॥ इत्यावाह्य ॥ ॐ सार्वभौमदिग्गजाय नमः इति संपूज्य दीपं दद्यात् ॥ तत्र अथर्ववेदिनौ द्वारपालौ ॥ बृहन्नेत्रोऽथर्ववेदो ह्यनुष्टुब्रुद्रदैवतः ॥ वैशम्पायन विप्रेन्द्र ऋत्विक् त्वं मे मखे भव ॥ इति वृत्वा ॥ ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये ॥ शंय्योरभिस्रवन्तुनः ॥ इति मन्त्रेण गन्धादिना संपूज्य अथर्वाङ्गिरसं नीलरुद्रं चैवापराजिता ॥ देवी

१ अत्र तस्मा इत्यादि पदचतुष्टये " कर्तुरीप्सिततमं कर्म १ । ४ । ७९ " इति पाणिनीयसूत्रेण द्वितीयैवोचिता, प्रकृतनमधात्वर्थप्रधानीभूतव्यापारप्रयोज्यफलाश्रयत्वेनेच्छोद्देश्यत्वात् । व्यापारस्त्वत्र स्वनिष्ठापकृष्टत्वप्रकारकोत्कृष्टनिष्ठबोधानुकूलः ( स च कर्तृनिष्ठः ) व्यापारजन्यं फलं बोधः ( स च कर्मनिष्ठः) तदाश्रयत्वेनेच्छोद्देश्योऽत्र वायुरिति संक्षेपः ॥ प्रक्षिप्तोऽयं श्लोक इति प्रतीयते ।

च मधुसूक्तं च रोधसं शान्तिकाध्ययम् ॥ अथर्वाणौ द्वारपालौ पठेतामुत्तराश्रितौ ॥ १ ॥ (अथर्वणम्, छन्दोगाय बृहद्गाय इत्यादि । आङ्गिरसम्, अङ्गिरसो जन्मनीत्यादि । नीलरुद्रम् या रुद्रपत्न्यावित्यादि । अपराजितादेवी परिवर्त्मनी इत्यादि । मधुसूक्तम्, मधुवाता इत्यादि । रोधसम्, अभयंद्यावापृथिवी इत्यादि । शान्तिकाध्यायः शन्न इन्द्राग्नीत्यादिको द्वारपालजपः ) ॥ ततो नरयुतविमानस्थं कुण्डलहारकेयूररुचिरं दक्षिणवामभुजद्वये वरगदाधरं मुकुटिनं महोदरं महाकायं हरितवर्णं कुबेरं ध्यात्वा । एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्द्धम् ॥ सर्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते ॥ ॐ भूर्भुवः स्वः सोम इहागच्छ इह तिष्ठ इति साङ्गं सोमं कलशयोरावाह्य । ॐ व्वयꣳसोमव्व्रतेतवमनंस्तनूषुबिभ्रतः ॥ प्रजावन्तꣳसचेमहि ॥ ॐ सोमाय नमः इति गन्धादिना संपूज्य ॥ ॐ आप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यम् ॥ भवावाजस्यसंगथे ॥ इति श्वेतौ पताकाध्वजौ हरितौ वा उच्छ्रयेत् । सर्वनक्षत्रमध्ये तु सोमो राजा प्रकीर्तितः ॥ तस्मै सोमाय देवाय नक्षत्रपतये नमः ॥ इति नत्वोत्तरद्वारशाखयोः ॥ चण्डाय नमः । प्रचण्डाय नमः । ( ऊर्ध्वम् ) द्वारश्रियै नमः । गणपतये नमः । ( अधः ) देहल्यै नमः । वास्तुपुरुषाय नमः । स्तम्भयोः ॥ महाकालाय नमः । भृङ्गिणे नमः कलशद्वये ॥ वारुण्यै नमः । वेण्यै नमः । इति संपूज्य । सोमाय साङ्गाय एतं माषभक्तबलिं० ॥ तत ऐशान्यां गत्वा तत्र पूर्ववत्कलशं निधाय । तत्र सुप्रतीकाय नमः । मंगलाय नमः। इति संपूज्य दीपं दत्वा । ततो वृषारूढं दक्षिणवामहस्तयोर्वरात्रिशूलधरं त्रिनेत्रं शुक्लवर्णमीशानं ध्यात्वा । ॐ एह्येहि विश्वेश्वर विश्वनाथ कपालखट्वाङ्गधरेण सार्द्धम् ॥ लोकेश यज्ञेश्वर यज्ञसिद्धये गृहाण पूजां भगवन्नमस्ते ॥ ॐ भूर्भुवः स्वः ईशान इहागच्छ इह तिष्ठ इति साङ्गमीशानमावाह्य ॥ ॐ तमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ॐ ईशानाय नमः ॥ इति गन्धादिभिः पूजयेत् । सर्वाधिपो महादेव ईशानः शुक्ल ईश्वरः ॥ शूलपाणिर्विरूपाक्षस्तस्मै नित्यं नमो नमः ॥ इति

नत्वा ॥ ॐ तमीशानमिति पूर्वोक्तमन्त्रेण श्वेतौ पञ्चवर्णौ पताकाध्वजावुच्छ्रयेत् । तत ईशानाय साङ्गाय० एतं माषभक्तबलिं समर्पयामीति बलिं दत्त्वाचामेत् ॥ तत ईशानपूर्वयोर्मध्ये ऊर्ध्वमुद्दिश्य पूर्ववत्कलशं निधाय तत्र ब्रह्माणं पूजयेत् । अक्षसूत्रकुशमुष्टिधरं दक्षिणकरे, स्रुवकमंडलुधरं वामकरे चतुर्मुखं श्मश्रुलं जटिलं लम्बोदरं रक्तवर्णं ब्रह्माणं ध्यात्वा ॥ ॐ एह्येहि सर्वाधिपते सुरेन्द्र लोकेन सार्द्धं पितृदेवताभिः ॥ सर्वस्य धातास्यमितप्रभावो विशाध्वरन्नः सततं शिवाय ॥ ॐ भूर्भुवः स्वः ब्रह्मन्निहागच्छ इह तिष्ठ इति साङ्गं ब्रह्माणमावाह्य ॥ ॐ ब्रह्मयज्ञानम्प्रथमंपुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ इति मन्त्रेण गन्धादिना प्रपूज्य तेनैव मन्त्रेण रक्तौ पताकाध्वजौ उच्छ्रयेत् । ॐ पद्मयोनिश्चतुर्मूर्तिर्वेदावासः पितामहः ॥ यज्ञाध्यक्षश्चतुर्वक्त्रस्तस्मै नित्यं नमो नमः ॥ इति नत्वा सांगाय ब्रह्मणे एतं माषभक्तबलिं समर्पयामीति बलिं दत्त्वाचामेत् ॥ ततो निर्ऋतिवरुणयोर्मध्ये पूर्ववत्कलशं निधाय तत्राधः, अनन्तशयनासीनं फणासप्तकमण्डितम् ॥ पद्मशंखधरमूर्ध्वाधोदक्षिणकरद्वये नीलवर्णमनन्तं ध्यात्वा ॥ ॐ एह्येहि पातालधरामरेन्द्र नागाङ्गनाकिन्नरगीयमान ॥ रक्षोरगेन्द्रामरलोकसंघैरनन्त रक्षाध्वरमस्मदीयम् ॥ ॐ भूर्भुवः स्वरनन्त इहागच्छ इह तिष्ठ इति साङ्गं सपरिवारं सायुधं सशक्तिकमनंतमावाह्य ॥ ॐ आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः ॥ पितरञ्चप्रयन्त्स्वः ॥ ॐ अनन्ताय नमः ॥ इति गन्धादिभिः संपूज्य ॥ योसावनन्तरूपेण ब्रह्माण्डं सचराचरम् ॥ पुष्पवद्धारयेन्मूर्ध्नि तस्मै नित्यं नमो नमः ॥ इति नत्वा ॥ ॐ आयङ्गौरिति पूर्वमन्त्रेण धूम्रौ श्वेतौ वा पताकाध्वजावुच्छ्रयेत् । ततः साङ्गाय सपरिवाराय सशक्तिकाय सायुधायानन्तायैतं माषभक्तबलिं समर्पयामीति बलिं दत्त्वाचामेत् ॥ ततो मण्डपमध्ये चामरकिङ्किणीयुतः षोडशहस्त

दण्डो वा दशहस्तदण्डावलम्बितो दशसप्तपञ्च वा[1] हस्तदीर्घस्त्रिहस्तविस्तारैकहस्तविस्तारो[2] वा पञ्चवर्णविचित्रो महाध्वजः ॥ ॐ इन्द्रस्य वृष्णो इत्युच्छ्रयेत ॥ ॐ इन्द्रस्यवृष्णोवरुणस्यराज्ञआदित्यानांमरुताᳪंशर्द्धउग्रम् ॥ महामनसाम्भुवनच्युवानांघोषोदेवानांजयतामुदस्थात ॥ १ ॥ तत्र ब्रह्मयज्ञानमिति ब्रह्माणं पूजयेत् ॥ ॐ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुन्ध्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ २ ॥ ततो मण्डपषोडशस्तम्भेषु सर्वेभ्यो देवेभ्यो नमः । वंशेषु किन्नरेभ्यो नमः । पृष्ठे पन्नगेभ्यो नमः इति पूजयेत् । ततः पूर्वस्यां दिशि मण्डपाद्बहिः किञ्चिद्भूमिमुपलिप्य तत्रोपविश्य ॥ त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च । ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्वन्तु ते सदा ॥ देवदानवगन्धर्वा यक्षराक्षसपन्नगाः । ऋषयो मुनयो गावो देवमातर एव च । सर्वे ममाध्वरे रक्षां प्रकुर्वन्तु मुदान्विताः ॥ ब्रह्मा विष्णुश्च रुद्रश्च क्षेत्रपालो गणैः सह । रक्षन्तु मण्डपं सर्वे घ्नन्तु रक्षांसि सर्वतः ॥ त्रैलोक्यस्थानि स्थावराणि भूतान्यावाहयामि ॥ ॐ त्रैलोक्यस्थस्थावरभूतेभ्यो नमः त्रैलोक्यस्थानि चराणि भूतान्यावाहयामि ॥ त्रैलोक्यस्थेभ्यश्चरेभ्यो भूतेभ्यो नमः । ॐ ब्रह्मणे नमः । विष्णवे नमः । देवेभ्यो नमः । दानवेभ्यो नमः । गन्धर्वेभ्यो नमः । यक्षेभ्यो नमः । राक्षसेभ्यो नमः । पन्नगेभ्यो नमः । गोभ्यो नमः । ऋषिभ्यो नमः । मनुष्येभ्यो नमः । देवमातृभ्यो नमः । इत्यावाहनपाद्यादिभिः प्रत्येकं संपूज्य प्रत्येकं माषभक्तबलीन्दद्यात् । ततो यजमानः साचार्यर्त्विक् प्रक्षालितपाणिपाद आचान्तः प्राग्द्वारेण मण्डपं प्रविशेत् । इति श्रीरत्नगढनगरनिवासिना श्रीवसिष्ठकुलोद्भवेन श्रीरामकृष्णपौत्रेण श्रीकस्तूरिचन्द्रसूनुना महादेवभक्त वाजसनेयिना नानानिबन्धकर्तृणा[3] पण्डितगौडश्रीचतुर्थीलालशर्मणा कृते प्रतिष्ठाप्रकाशे मण्डपपूजनं नाम तृतीयः परिच्छेदः ॥ ३ ॥

---

१ अत्र वाशब्दव्यवधानेन समासाभावादपपाठोऽयं, युक्तस्त्वत्र " दशसप्तपञ्चान्यतमहस्तदीर्घः " इति । २ अत्रास्य सन्धेरशास्त्रीयत्वात् " विस्तार एकहस्त " इति पृथक् पाठः समीचीनः । ३ अत्र "नानानिबन्धानां कर्त्रा " इति पाठः समुचितः, विशेषणगतलिङ्गस्य विशेष्याधीनत्वात् । अत्र चतुर्थीलालशर्मणेति पदं विशेष्यम् । अत्र कर्त्रेत्यस्य तृजन्तत्वेन कर्त्रर्थकतृचा योगे " तृजकाभ्यां कर्तरि । २ । २ । १५ " इति शास्त्रेण षष्ठीसमासस्य निषेधात्, निबन्धानामिति पदं व्यस्तमेव प्रशस्तमिति मन्मतम् ।

ततो यजमानः साचार्यऋत्विक् प्रक्षालितपादपाणिराचान्तः प्राग्द्वारेण मण्डपं प्रविश्य दक्षिणद्वारसमीपे पश्चिमगत उदङ्मुख उपविश्य । भो गुर्वादयो यथाविहितं कर्म कुरुध्वमिति साविनयं प्रार्थयेत् ॥ यथायोग्यं करवामेति प्रतिवचनम् ॥ ततः पूर्वकुण्डे ऋग्वेदिनौ होतारावुपविशेताम् ॥ तत्रैको ब्रह्मा स च पश्चिममुखः । अपरो होमकर्त्ता स चोदङ्मुखः ॥ ततो दक्षिणकुण्डे यजुर्वेदिनौ ॥ तत्र ब्रह्मा उदङ्मुखः । होमकर्त्ता पूर्वमुखः ॥ ततः पश्चिमकुण्डे सामवेदिनौ ॥ उत्तरकुण्डेऽथर्ववेदिनौ ॥ एवं तत्तत्कुण्डसन्निधौ च तत्तद्वेदविदौ होतृवद्द्वौ द्वौ जापकावुपविशेताम् । तत आचार्य्य इन्द्रेशानयोर्मध्ये स्वकुण्डे प्राङ्मुख उपविशेत् । तत्र ब्रह्मा उदङ्मुखः । ( ततो गुरुः स्वकुण्डे आगत्य स्वगृह्योक्तविधिनाग्निं स्थापयेत् । तेपि च कुर्युः ॥ एवं क्रमः पञ्चकुण्डीपक्षे ज्ञेयः ॥ एककुण्डीपक्षे त्वाचार्यः प्राङ्मुखः ) तत्रादौ कुण्डपूजा ॥ यजमानोऽग्न्यायतनाद्दक्षिणत उपविश्य । आचार्यस्तु कुण्डपश्चिमत उपविश्य । आचम्य प्राणानायम्य ॥ ॐ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ इति गौरसर्षपान्विकीर्य पञ्चगव्येन कुण्डं प्रोक्ष्य ॥ ॐ गुरुभ्यो नमः । गणपतये नमः । इति नत्वा हस्ते गन्धाक्षतपुष्पजलादीनि गृहीत्वा । अद्येत्यादिदेशकालौ संकीर्त्य० अमुकदेवप्रासादोत्सर्गकर्मण्यग्निप्रतिष्ठां करिष्ये । तदङ्गतया संमार्जनमेखलायोनिदेवतास्थापनं पूजनं च करिष्य इति सङ्कल्प्याग्न्यायतनं सम्मृज्य कुशोदकेन कुण्डं प्रोक्ष्याञ्जलौ पुष्पाण्यादाय कुण्डं स्पृष्ट्वाऽऽवाहयेत् ॥ ॐ आवाहयामि तत्कुण्डं विश्वकर्मविनिर्मितम् ॥ शारीरं यच्च ते दिव्यमग्न्यधिष्ठानमद्भुतम् ॥ १ ॥ इत्यावाह्य ॐ कुण्डाय नमः इति गन्धादिभिः संपूज्य प्रार्थयेत् ॥ ये च कुण्डे स्थिता देवाः कुण्डांगे याश्च देवताः ॥ ऋद्धिं यच्छन्तु ते सर्वे यज्ञसिद्धिं मुदान्विताः ॥ १ ॥ हे कुण्ड तव निर्माणं रचितं विश्वकर्मणा ॥ अस्माकं वाञ्छितां सिद्धिं यज्ञसिद्धिं ददातु भोः ॥ २ ॥ इति संप्रार्थ्य कुण्डमध्ये विश्वकर्माणं पूजयेत् । ॐ विश्वकर्मन्निति भौवन ऋषिस्त्रिष्टुप् छन्दो विश्वकर्मा देवता विश्वकर्मपूजने

विनियोगः । ॐ विश्वकर्म्मन्हविषावर्द्धनेनत्रातारमिन्द्रमकृणोरवद्ध्यम् ॥ तस्मैविशःसमनमन्तपूर्वीरयमुग्रोविहव्योयथासत ॥ उपयामगृहीतो
सीन्द्रायत्वाविश्वकर्मणएषतेयोनिरिन्द्रायत्वाविश्वकर्मणे ॥ ॐ विश्वकर्मणे नमः ॥ इति चन्दनादिभिः संपूज्य ॥ अज्ञानाज्ज्ञानतो वापि दोषाः
स्युः खननोद्भवाः ॥ नाशाय त्वं हि तान्सर्वान्विश्वकर्मन्नमोऽस्तु ते ॥ इति संप्रार्थ्य ॥ उपरिगतमेखलायां श्वेतवर्णालङ्कृतायां विष्णुमावाह
येत् । ॐ विष्णो यज्ञपते देव दुष्टदैत्यनिषूदन ॥ विभो यज्ञस्य रक्षार्थं कुण्डे सन्निहितो भव ॥ इत्यावाह्य ॥ ॐ इदंविष्णुरिति मन्त्रस्य मे
धातिथिर्ऋषिर्गायत्रीछन्दः विष्णुर्देवता विष्णुपूजने विनियोगः ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपांꣳसुरे ॥ इति
मन्त्रेण विष्णुं संपूज्य । प्रथममेखलायै विष्णुदेवत्यै श्वेतवर्णालङ्कृतायै नम इति मेखलां च पूजयेत् ॥ १ ॥ ततो मध्यमेखलायां रक्तवर्णा
लङ्कृतायां ब्रह्माणम् । ॐ हंसपृष्ठसमारूढ देवदेवगणावृत ॥ रक्षार्थं मम यज्ञस्य कुण्डेऽस्मिन्सान्निधौ भव ॥ इत्यावाह्य ॥ ॐ ब्रह्मयज्ञान
मिति विवस्वानृषिस्त्रिष्टुप् छन्दः ब्रह्मा देवता ब्रह्मपूजने विनियोगः ॥ ॐ ब्रह्मयज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्या
ऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ इति मन्त्रेण ब्रह्माणं संपूज्य ॥ मध्यममेखलायै ब्रह्मदैवत्यै रक्तवर्णालङ्कृतायै नम इति
मेखलां च पूजयेत् ॥ २ ॥ ततोऽधोमेखलायां कृष्णवर्णालङ्कृतायां रुद्रं० । ॐ गङ्गाधर महादेव वृषारूढ महेश्वर ॥ आगच्छ भगवन्रुद्र
कुण्डेऽस्मिन्सन्निधौ भव ॥ इत्यावाह्य ॥ ॐ नमस्ते रुद्र मन्यव इति परमेष्ठी ऋषिर्गायत्री छन्दः रुद्रो देवता रुद्रपूजने विनियोगः । ॐ
नमस्तेरुद्रमन्यवऽउतोतऽइषवेनमः ॥ बाहुभ्यामुततेनमः ॥ इति रुद्रं संपूज्य तृतीयायै रुद्रदैवत्यै कृष्णवर्णालङ्कृतायै मेखलायै नम
इति मेखलां च पूजयेत् ॥ ३ ॥ अथ योनिपूजा ॥ जगदुत्पत्तिहेतुकायै मनोभवयुतायै योन्यै नमो नमः । ॐ क्षत्रस्य योनिरिति वि

१ योनिस्वरूपश्चैवमुक्तः कुण्डमण्डपे–मेखलामध्यतो योनिः कुण्डत्र्यंशेन विस्तृता । कुण्डार्धेन च दीर्घा सा जिनांशेनोन्नता तथा । दशाङ्गुलाथवा योनिर्दीर्घा वा कुण्डपश्चिमे ।–

वस्वानृषिः द्विपदा गायत्री छंदः योनिर्देवता योनिपूजने विनियोगः ॥ ॐ क्षत्रस्ययोनिरसिक्षत्रस्युनाभिरसि ॥ मात्वाहिꣳसीन्मामाहिꣳसीः ॥ इति गन्धादिभिः संपूज्य प्रार्थयेत् । सेवन्ते महतीं योनिं देवर्षिसिद्धमानवाः ॥ चतुरशीतिलक्षाणि पन्नगाद्याः सरीसृपाः ॥ १ ॥ पशवः पक्षिणः सर्वे संसरन्ति यतो भुवि ॥ योनिरित्येव विख्याता जगदुत्पत्तिहेतुका ॥ २ ॥ मनोभवयुता देवी रतिसौख्यप्रदायिनी ॥ मोहयन्ती सुरान्सर्वाञ्जगद्धात्रि नमोऽस्तुते ॥ ३ ॥ योने त्वं विश्वरूपासि प्रकृतिर्विश्वधारिणी ॥ कामस्था कामरूपा च विश्वयोन्यै नमोऽस्तु ते ॥ ४ ॥ इति योनिपूजा ॥ ततः कण्ठपूजनम् ॥ जीवनं सर्वजन्तूनां स्रगादिस्थानमुत्तमम् ॥ उत्तमाङ्गस्य चाधारं कण्ठमावाहयाम्यहम् ॥ इत्यावाह्य ॥ ॐ नीलग्रीवा इति परमेष्ठी प्रजापतिर्ऋषिरनुष्टुप् छन्दो रुद्रो देवता कण्ठपूजने विनियोगः ॥ ॐ नीलग्रीवाःशितिकण्ठादिवꣳरुद्राऽउपश्रिताः ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ १ ॥ इति मन्त्रेण कण्ठं संपूज्य प्रार्थयेत् । कण्ठ मङ्गलरूपेण सर्वकण्ठे प्रतिष्ठितः ॥ परितो मेखलास्त्वत्तो रचिता विश्वकर्मणा ॥ ततो नाभिपूजा । पद्माकाराथवा कुण्डसदृशाकृतिबिभ्रती ॥ आधारः सर्वकुण्डानां नाभिमावाहयाम्यहम् ॥ इत्यावाह्य ॥ ॐ नाभिर्मेति प्रजापतिर्ऋषिर्महापङ्क्तिजगती छन्दो रुद्रो देवता रुद्रपूजने विनियोगः ॥ ॐ नाभिर्मेचित्तंविज्ञानंपायुर्मेपचितिर्भसत् ॥ आनन्दनन्दावाण्डौमेभगःसौभाग्यंपसः ॥ जङ्घाभ्यांपद्भ्यांधर्मोस्मिविशिराजाप्रतिष्ठितः ॥ इति मन्त्रेण संपूज्य । नाभे त्वं कुण्डमध्ये तु देवैः सह प्रतिष्ठिता ॥ अतस्त्वं पूजिता देवि शुभदा ऋद्धिदा भव ॥ इति नत्वा ततः कुण्डमध्ये नैर्ऋति

---

–सप्ताङ्गुला च विस्तीर्णा कर्तव्याश्वत्थपत्रवत् । एकाङ्गुलप्रमाणेन पृथूच्चा योनिमेखला । अन्तर्बिला नता कुण्डे प्रविष्टैकाङ्गुलाधरा । कूर्मपृष्ठोन्नता मध्ये पार्श्वयोश्चाङ्गुलोच्छ्रया । गजोष्ठसदृशी तद्वदायता छिद्रसंयुता । योनिमध्यगतं लिङ्गं तुङ्गं पृथुकराङ्गुलम् । मृत्पिण्डद्वितयं तस्याः पार्श्वे वा कुम्भिकं भवेत् । एकाङ्गुलं तु योन्यग्रं कुर्याद्दीर्घमधोमुखम् ॥

१ कण्ठः खातमेखलयोरन्तराले, एकद्व्यङ्गुलात्मको देशविशेषः " कण्ठो जिनांशमानः स्यादर्कांश इति चापरे " इति कुण्डमण्डपसिद्धौ । २ नाभिमानं यथा " द्व्यङ्गुलोच्चा-

कोणे वास्तुपुरुषं पूजयेत् । पुष्पाण्यादाय । आवाहयामि देवेशं पुरुषं च महाबलम् । देवदेवं गणाध्यक्षं पातालतलवासिनम् ॥ इत्यावाह्य ॐ वास्तोष्पतेति प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दः वास्तुर्देवता वास्तुपूजने विनियोगः ॥ ॐ वास्तोष्पते प्रतिजानीह्यस्मान्त्स्वावेशोऽनमीवोभवानः ॥ यत्त्वेमहे प्रतितन्नोजुषस्वशन्नोऽभवाद्विपदेशंचतुष्पदे ॥ ॐ वास्तुपुरुषाय नम इति गन्धादिभिः संपूज्य ॥ वास्तुपुरुषाय इमं बलिं समर्पयामीति बलिं दत्त्वा प्रार्थयेत् ॥ अस्य देहे स्थिता क्षोणी ब्रह्माण्डं विश्वमण्डलम् ॥ व्यापिनं भीमरूपं च सुरूपं विश्वरूपिणम् ॥ १ ॥ पितामहसुतो मुख्यस्तुभ्यं वास्तुपते नमः ॥ इति संप्रार्थ्य वक्ष्यमाणविधानेनाग्निं स्थापयेत् ॥ अथाग्निस्थापनप्रकारः ॥ ततो यथापरिमिते तुषकेशशर्करादिरहिते कुण्डे स्थण्डिले वा चतुरस्रां भूमिं कुशैः[२] परिसमुह्य तान्कुशानीशान्यां परित्यज्य गोमयोदके[३]

---

—स्मृता नाभिर्विस्तृता चतुरङ्गुलैः" इति **कुण्डमार्तण्डे**ऽन्यत्र च सर्वत्रैवमेव । स्वरूपं तु मूले उक्तमेव । १ साम्प्रतं श्रद्धालुयजमानाभावेन श्रौतस्मार्तकर्मणां प्रायो लोपप्रसङ्गात् कुण्डनिमित्तके खनने च यवयवार्द्धस्यापि न्यूनाधिक्ये महादोषश्रवणादाधुनिकाः कर्मठाः संक्षिप्तहोमकर्मसु कुण्डस्थाने स्थण्डिलमेव प्रायः कारयन्ति, ततोऽत्रैकहस्तमितस्थण्डिलमुद्दिश्य प्रमाणत्वेन किञ्चिदुच्यते—"एकादशीतिपदं कुर्याद्रेणुभिः कनकेन च" इत्याद्युपक्रम्य "अग्निसंस्थापनार्थाय मेखलात्रयसंयुतम् । कुण्डं कुर्याद्विधानेन योन्याकारं विशेषतः ॥ स्थण्डिलं वा प्रकुर्वीत मतिमान् सर्वकर्मसु" इति **परिशिष्टप्रदीपे** । "शिख्यादिपञ्चचत्त्वारिंशद्देवांस्तत्र पूजयेत् । वेदमन्त्रैर्नाममन्त्रैः प्रणवव्याहृतिभिस्तथा । होमस्त्रिमेखले कार्यः कुण्डे हस्तप्रमाणके" । इति **मत्स्यपुराणे, शौनककारिकायां** च लिखितत्वाद्वास्तौ यजमानैकहस्तमितं कुण्डं तदशक्तौ स्थण्डिलं वा कार्यम् । "एककर्मणि गुणविशेषे फलविशेषः" इति कात्यायनोक्तेश्च । परन्त्वत्र कुण्डविधाने महद्वैदुष्यमपेक्षितमन्यथाकरणे महत्यनर्थापत्तिः, सा यथा **परशुरामपद्धतौ कुण्डमण्डपे**—"आयामखातविस्तारो यथायथं तथातथम् । न्यूनाधिकं न कर्तव्यं कुण्डं तद्ध्वंशनाशकम् । खातेऽधिके भवेद्रोगी हीने धेनुधनक्षयम् । वक्रे कुण्डे च सन्तापो मरणं छिन्नमेखले । मेखलारहिते शोकोऽभ्यधिके वित्तसंक्षयः । योनिहीने

स्त्रिया नाशो विकण्ठेऽपैति पञ्चताम् । एवं लक्षणहीनस्य कुण्डस्य फलमीदृशम् । अतो दोषान् विविच्यादौ कुण्डनिर्माणमारभेत् । यावान्कुण्डस्य विस्तारस्तावानायाम ईरितः ।
तिर्यगूर्ध्वध्वजायार्थं खन्यमेकाङ्गुलाधिकम् । स्थापने सर्वकुण्डानां ध्वजायः सर्वसिद्धिदः । ध्वजायरहितं कुण्डं सर्वानिष्टफलप्रदम् । सलक्षणमपि त्याज्यं ध्वजायेन विना कृतम् । तस्मात्कु
ण्डविधानार्थं ध्वजायं पूर्वमानयेत् । मानादूनाधिकं क्षेत्रं कार्यं पूर्वयवादिना । व्यासे दैर्घ्यहतेऽष्टाप्तशेषेऽत्रायोध्वजादिकः । इत्यादि बहु विचार्यं तत्र, स्थण्डिले तु न किञ्चित् । न्यूनाधि
केऽपि न दोषापत्तिः । कुण्डकरणाशक्तौ स्थण्डिलविधाने प्रमाणानि यथा–**कुण्डरत्नाकरे**–" यद्वाशक्तौ स्थण्डिलं स्वल्पहोमे रक्तैर्वा मृच्चूर्णकैर्वालुकाभिः ॥ अङ्गुष्ठोच्चं वेदमाना
ङ्गुलैर्वा वेदास्रं तद्धस्तमानं विशालम् ॥ **कुण्डोद्योते** च " कुण्डाभावे स्थण्डिलं स्याद्वेदास्रं हस्तमानतः " । **कुण्डकौमुद्यामपि**–कुण्डाभावेऽल्पहोमे शरमितमथवा स्थण्डिलं
हस्तमात्रमित्यादि । **कुण्डमार्तण्डे** च–" कनकरुचिरकान्त्या सन्मृदा स्थण्डिलं वा करमितचतुरस्रं कूर्मपृष्ठोन्नतं च । बुध कुरु कृतसंख्यैरङ्गुलैरुन्नतं वाङ्गुलमितमपि रम्यं स्वल्पहोमे
मुदा त्वम् " इत्यादि बहु बहुत्र । केचनात्र स्थंडिलेऽपि मेखलायोन्यौ कुर्वन्ति वदन्ति च प्रमाणम्–" स्थण्डिले मेखलाः कार्याः कुण्डोक्ताः स्थण्डिलाकृतिः । योनिस्तत्र प्रकर्तव्या
कुण्डवत्तन्त्रवेदिभिः " । " समेखलं स्थण्डिलं तु प्रशस्तं होमकर्मणि । कण्ठं तु वर्जयेत्तत्र खाते कण्ठः प्रकीर्तितः ॥ स्थण्डिले मेखलादीनां प्राप्तिरस्त्येव शास्त्रतः । अग्न्यायतन
धर्मा हि यतस्ते मेखलादयः" इत्यादि, परन्त्वेतानि वचनानि निर्मूलानीति सिद्धान्तितं, कमलाकरभट्ट–दिनकरभट्ट–रामकृष्णभट्टादिभिः कोटिहोमादिपद्धतौ । समूलानि चेद्बौधायन
शाखिभिरेव ग्राह्याणि, नान्यैरस्मदादिभिर्माध्यन्दिनीयैः, " कुण्डवन्मेखलां कृत्वा योनिं कृत्वा ततः परम् । बौधायनमते प्रोक्तं स्थंडिलं चतुरस्रकम् " इत्येकपद्यातिरिक्तवचनेषु कुत्रापि
कस्य चिन्महर्षेर्नाम्नोऽश्रवणात् ॥ तस्मात् स्थंडिले मेखलादयो न भवन्तीति मे मतम् । विशेषस्तु मदीये **स्मार्तवल्लभे** विलोकनीयः । २ त्रिभिर्दर्भैः पांसूनपसार्येति **हरिहरः** ।
"धृत्वाङ्गुष्ठकनिष्ठाभ्यां मूलैः साग्रैः कुशत्रयम् । तदग्रैस्तस्य रजसः पूर्वस्यामपसारणम् । कृमिकीटपतङ्गाद्या विचरन्ति महीतले । तेषां संरक्षणार्थाय परिसमूहनमुच्यते" इति **कुशक
ण्डिकाभाष्ये** । ३ " रुग्णा वृद्धा प्रसूता च वन्ध्या सन्धिन्यमेध्यभुक् । मृतवत्सा च नैतासां ग्राह्यं मूत्रं शकृत्पयः " इति **कल्पवल्ल्याम्** । " पुरा शक्रेण वज्रेण हतो वृत्रो
महासुरः । व्यापिता मेदसा पृथ्वी तदर्थमुपलेपनम् " इति **कुशकण्डिकायाम्** ।

नोपलिप्य स्फ्येन स्रुवमूलेन वा प्रागग्रं प्रादेशमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्योल्लेखनक्रमेणैवाऽनामिकाङ्गुष्ठाभ्यां मृदमुद्धृत्य जलेनाभ्युक्ष्य ततः कांस्य पात्रस्थं वह्निं द्वितीयकांस्यपात्रेण पिहितं कुण्डाद्बहिराग्नेय्यां दिशि निधाय ॐ हुं फट्स्वाहेति क्रव्यादांशं नैर्ऋत्यां दिशि परित्यज्य गायत्र्या संपूज्य योनिमार्गेण ॥ ॐ अग्निंदूतम्पुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२ऽआसादयादिह ॥ इति मन्त्रेण कुण्डे स्वाभिमुखं स्थापयेत्। तद्रक्षार्थं कश्चिन्नियुज्यानीताग्निपात्रयोर्जलादिप्रक्षेपणं ततोऽग्नेर्ध्यानम् ॥ ॐ चत्वारि शृङ्गात्रयोऽअस्य पादा द्वे शीर्षे सप्त हस्तासोऽअस्य। त्रिधाबद्धो वृष

---

१ स्फ्यः खादिरः खड्गाकृतिर्हस्तमात्रो यज्ञपात्रविशेषः। २ प्रागग्रा उदक्संस्थाः स्थण्डिलपरिमाणास्तिस्रो रेखाः, इति **हरिहरः**। एतदेव **कल्पवल्ल्यामपि**-रेखात्रयमुदक्संस्थं प्रागग्रं स्थण्डिलावधि। अथवैतत्प्रकुर्वीत द्वादशाङ्गुलमायतम् ॥ इति। ३ अङ्गुष्ठोपकनिष्ठाभ्यामग्निकार्यं तथोत्किरम्। रेखाभ्यः समुपादायारत्निमात्रे निधापयेदिति **ग्रहयज्ञकल्पवल्ल्याम्**। ये भ्रमन्ति पिशाचाद्या अन्तरिक्षनिवासिनः। तेषां प्रहरणार्थाय समुद्ध्रः कथितो बुधैरिति **कुशकाण्डियाम्**। ४ इदमभ्युक्षणं न्युब्जपाणिना विधेयं तत्र प्रमाणम्-" अवोक्षणं तु कर्तव्यमुत्तानेनैव पणिना। तद्वदभ्युक्षणं चैव कर्तव्यं न्युब्जमुष्टिना" इति **कल्पवल्ल्याम्**। ५ कांस्यपात्रद्वयेनैवाग्निरानेतव्यो न तु मृच्छरावेण तत्र दोषश्रवणात् तद्यथा " शरावे भिन्नपात्रे वा कपाले चोल्मुके तथा। नाग्नेः प्रणयनं कार्यं व्याधिशोकभयावहम्। कपालम्=खर्परम् उल्मुकं ज्वलदग्नेरेकदेशः॥ कुलालचक्रघटितं मृन्मयं पात्रमासुरम्। तदेव हस्तघटितं स्थाल्यादि दैविकं स्मृतम्" इति **कल्पवल्ल्याम्**। सम्पुटेनाग्निमानीय स्थाप्योऽग्नेर्दिशि कुण्डतः। आमक्रव्यभुजौ तस्मात्त्यक्त्वा कुण्डे विनिक्षिपेत् ॥ आनीतपात्रयोरेव प्लावनं तत्क्षणे भवेत्। नोचेत्कर्तुर्मनस्तापः स्यात्सन्तापस्तयोरपि" इति **कल्पवल्ल्यां, कारिकायां** चापि-अग्न्यानयनपात्रे तु प्रक्षिपेदक्षतोदकम्। अकृते अष्टहोमः स्यादिति वेदविदो विदुरिति। अत्र पञ्चभूतसंस्कारे-त्रिरुल्लेखनम्, त्रिरुद्धरणमिति **हरिहरः**। परिसमूहनादीनि पञ्चापि त्रिस्त्रिरित्यन्ये। **कर्कोपाध्यायैरपि** " विपर्यस्य पित्र्येषु सकृद्दक्षिणा च " इत्येतत्सूत्रव्याख्यानावसरे यदभ्यस्तं रूपं दैवे स्मर्यते, तत्पित्र्ये सकृत्कर्तव्यम्। यथा परिसमुह्योपलिप्योल्लेखनमिति लेखनेनैव तावद्दर्शितम्। दैवे परिसमूहनादि त्रिस्त्रिः, पित्र्ये सकृत् सकृत् इति। एते पञ्च भूसंस्कारा इति **भर्तृयज्ञभाष्ये**। अग्न्यर्था इति **कर्कोपाध्याया** इत्यादि सर्वं गदाधरकृते **गृह्यसूत्रभाष्ये** स्पष्टम् ॥

भो रौरवीति मुहो देवो मर्त्याँ २ऽआविवेश ॥ १ ॥ रुद्रतेजः समुद्भूतं द्विमूर्द्धानं द्विनासिकम् ॥ षण्नेत्रं च चतुःश्रोत्रं द्विपादं सप्तहस्तकम् ॥ १ ॥
याम्यभागे चतुर्हस्तं सप्तभागे त्रिहस्तकम् ॥ स्रुवं स्रुचं च शक्तिं च त्र्यक्षमालां च दक्षिणे ॥ २ ॥ तोमरं व्यजनं चैव घृतपात्रं तु वामके ॥ बिभ्रतं
सप्तभिर्हस्तैर्द्विमुखं सप्तजिह्वकम् ॥ ३ ॥ दक्षिणं च चतुर्जिह्वं त्रिजिह्वमुत्तरे मुखम् ॥ द्वादशकोटिमूर्त्याख्यं द्विपञ्चाशत्कलायुतम् ॥ ४ ॥ स्वाहा
स्वधावषट्कारैरङ्कितं मेषवाहनम् ॥ रक्तमाल्याम्बरधरं रक्तपद्मासनस्थितम् ॥५॥ रौद्रं तु वह्निनामानं वह्निमावाहयाम्यहम् ॥ त्वं मुखं सर्वदेवानां सप्ता
र्चिरमितद्युते ॥ आगच्छ भगवन्देव यज्ञेऽस्मिन्सन्निधौ भव ॥ ६ ॥ अग्ने वैश्वानर शाण्डिल्यगोत्र शाण्डिल्यासितदेवलेति त्रिप्रवरान्वितभूमि
मातः वरुणपितः मेषध्वज प्राङ्मुख मम सम्मुखो भव इत्यग्निं प्रतिष्ठाप्य ॥ ॐ अग्नये नमः इति वायव्यकोणे बहिः गन्धादिभिः पूजयेत् । ततः
ॐ अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ॥ हिरण्यवर्णमनलं समृद्धं विश्वतोमुखम् ॥ १ ॥ इति प्रार्थ्य ॥ तस्मादाचार्यकुण्डादुद्धरणं सर्वेषु
पूर्वादिषु कुण्डेषु कर्तव्यम् ॥ इत्यग्निस्थापनम् ॥ अथ नवग्रहस्थापनम् ॥ ईशान्यां ग्रहपीठे सूर्यादिनवग्रहाणामावाहनम् ॥ आचम्य देशकालौ स्मृ
त्वा । अमुकदेवप्रतिष्ठायज्ञकर्मण्यादित्यादिग्रहादीनां स्थापनमर्चनं च करिष्ये इति संकल्प्य स्थापयेत् ॥ तत्र मध्ये वर्त्तुलाकारे रविं प्राङ्मुखं
रक्तपुष्पाक्षतैः । ॐ आकृष्णेनेति मन्त्रस्य हिरण्यस्तूपऋषिस्त्रिष्टुप् छन्दः सविता देवता सूर्यावाहने विनियोगः ॥ ॐ आकृष्णेनुरजंसावर्त्तमानोनि
वेशयन्नमृतंमर्त्यंञ्च ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ ॐ भूर्भुवः स्वः कलिङ्गदेशोद्भव काश्यपसगोत्र सूर्य इहागच्छ
इह तिष्ठ ॥ ॐ सूर्याय नमः इति स्थापयेत् ॥ १ ॥ आग्नेय्यामर्द्धचन्द्राकारे चक्रे प्रत्यङ्मुखं चन्द्रं श्वेतपुष्पाक्षतैः । ॐ इमं देवा
इत्यस्य वरुण ऋषिः यजुश्छन्दः सोमो देवता सोमावाहने विनियोगः ॥ ॐ इमंदेवाऽअसपत्नꣳसुवध्वम्महतेक्षत्रायमहतेज्यैष्ठ्यायम
हतेजानराज्यायेन्द्रस्येन्द्रियाय ॥ इमममुष्यपुत्रममुष्यैपुत्रमस्यैविशएषवोमीराजासोमोस्माकंब्राह्मणानाꣳराजा ॥ ॐ भूर्भुवः स्वः

यमुनातीरदेशोद्भव आत्रेयसगोत्र चन्द्र इहागच्छ इह तिष्ठ ॥ ॐ चन्द्राय नमः ॥ २ ॥ याम्यां त्रिकोणे दक्षिणाभिमुखं भौमं रक्त पुष्पाक्षतैः । ॐ अग्निर्मूर्द्धेति विरूपाक्ष ऋषिर्गायत्री छन्दोऽङ्गारको देवताऽङ्गारकावाहने विनियोगः ॥ अग्निर्मूर्द्धादिवःककुत्पतिः पृथिव्याऽअयम् ॥ अपाᳬरेताᳬसिजिन्वति ॥ ॐ भूर्भुवः स्वः अवन्तिदेशोद्भव भारद्वाजसगोत्र भौम इहागच्छ इह तिष्ठ ॥ ॐ भौमाय नमः ॥ ३ ॥ ईशान्यां बाणाकारमण्डले उदङ्मुखं बुधं पीतपुष्पाक्षतैः । ॐ उद्बुध्यस्वेति परमेष्ठी ऋषिस्त्रिष्टुप् छन्दः बुधो देवता बुधावाहने विनियोगः । ॐ उद्बुध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्त्तेसᳬसृजेथामयंच ॥ अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वेदेवायज मानश्चसीदत ॥ ॐ भूर्भुवः स्वः मगधदेशोद्भव आत्रेयसगोत्र बुध इहागच्छ इह तिष्ठ ॥ ॐ बुधाय नमः ॥ ४ ॥ उत्तरे चतुरस्रमण्डले उदङ्मुखं बृहस्पतिं पीतपुष्पाक्षतैः । ॐ बृहस्पते इति गृत्समद ऋषिस्त्रिष्टुप् छन्दो बृहस्पतिर्देवता बृहस्पत्यावाहने विनियोगः । ॐ बृहस्पतेऽअतियदर्य्योऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणंधेहिचित्रम् ॥ ॐ भूर्भुवः स्वः सिन्धुदे शोद्भव आङ्गिरसगोत्र बृहस्पते इहागच्छ इह तिष्ठ ॥ ॐ बृहस्पतये नमः ॥ ५ ॥ पूर्वे पञ्चकोणमण्डले प्राङ्मुखं शुक्रं शुक्लपुष्पाक्षतैः । ॐ अन्नात्परिस्रुतेति प्रजापत्यश्विसरस्वतीन्द्रा ऋषयोऽतिजगती छन्दः शुक्रो देवता शुक्रावाहने विनियोगः ॥ ॐ अन्नात्परिस्रुतोरसंब्रह्मणाव्य पिबत्क्षत्रम्पयᳬसोमंप्रजापतिः ॥ ऋतेनसत्यमिन्द्रियंविपानᳬशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ॐ भूर्भुवः स्वः भोजकटदेशो द्भव भार्गवसगोत्र शुक्र इहागच्छ इह तिष्ठ ॥ ॐ शुक्राय नमः ॥ ६ ॥ पश्चिमे धनुषि मण्डले प्रत्यङ्मुखं शनिं कृष्णपुष्पाक्षतैः ॥ ॐ शन्नोदेवीति दध्यङ्ङाथर्वण ऋषिस्त्रिष्टुप् छन्दः शनिर्देवता शन्यावाहने विनियोगः । ॐ शन्नो देवीरभिष्टयआपोभवन्तुपीतये ॥ शंय्योरभिस्रवन्तुनः ॥ ॐ भूर्भुवः स्वः सौराष्ट्रदेशोद्भव काश्यपसगोत्र शनैश्चर इहागच्छेह तिष्ठ ॥ ॐ शनैश्चराय नमः ॥ ७ ॥ नैर्ऋत्ये शूर्प

कारमण्डले दक्षिणाभिमुखं राहुं कृष्णपुष्पाक्षतैः । ॐ कयानश्चित्र इति वामदेव ऋषिर्गायत्रीछन्दो राहुर्देवता राह्वावाहने विनियोगः । ॐ कयानश्चि त्रऽआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता । ॐ भूर्भुवः स्वः राठिनदेशोद्भव पैठीनसगोत्र राहो इहागच्छ इह तिष्ठ ॥ ॐ राहवे नमः ॥ ८ ॥ वायव्यां ध्वजाकारमण्डले दक्षिणाभिमुखं केतुं धूम्रपुष्पाक्षतैः । ॐ केतुं कृण्वन्निति मधुच्छन्दा ऋषिर्गायत्री छन्दः केतुर्देवता के त्वावाहने विनियोगः । ॐ केतुंकृण्वन्नकेतवेपेशोमर्याऽअपेशसे ॥ समुषद्भिरजायथाः ॥ ॐ भूर्भुवः स्वः अन्तर्वेदिदेशोद्भव पैठीनसगोत्र केतो इहागच्छ इह तिष्ठ ॥ ॐ केतवे नमः ॥ ९ ॥ इति स्थापयेत् ॥ अथाधिदेवतानामावाहनं स्थापनं च ॥ सर्वे आदित्याभिमुखाः स्थाप्याः॥ मध्ये रविः। दक्षिणपार्श्वे श्वेतपुष्पाक्षतैः रुद्रमावाहयेत् । ॐ त्र्यम्बकमिति वसिष्ठ ऋषिरनुष्टुप् छन्दः रुद्रो देवता रुद्रावाहने विनि० ॥ ॐ त्र्यम्बकंयजा महेसुगन्धिम्पुष्टिवर्धनम् ॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् । ॐ भूर्भुवः स्वः रुद्र इहागच्छ इह तिष्ठ ॥ १ ॥ आग्नेय्यां चन्द्रस्य दक्षिणे रक्तपुष्पाक्षतैरुमाम् । ॐ श्रीश्चतेति नारायण ऋषिस्त्रिष्टुप् छन्दः उमा देवता उमास्थापने विनियोगः । ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरा त्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मऽइषाण ॥ ॐ भूर्भुवः स्वः उमे इहागच्छ इह तिष्ठ ॥ उमायै नमः ॥ २॥ याम्यां भौमस्य दक्षिणे पीतपुष्पाक्षतैः स्कन्दम् ॥ ॐ यदक्रन्द इति भार्गवजमदग्निर्दीर्घतमा ऋषयस्त्रिष्टुप् छन्दः स्कन्दो देवता स्कन्दावाहने विनियोगः । ॐ यदक्रन्दःप्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूऽउपस्तुत्यम्महिजातन्तेऽअर्वन् ॥ ॐ भूर्भुवः स्वः स्कन्द इहागच्छ इह तिष्ठ ॥ स्कन्दाय नमः ॥ ३ ॥ ईशान्यां बुधदक्षिणे पीतपुष्पाक्षतैर्विष्णुम् ॥ ॐ इदम्विष्णुरिति मेधातिथिर्ऋषिर्गा यत्री छन्दो विष्णुर्देवता विष्ण्वावाहने विनियोगः । ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपांसुरे ॥ ॐ भूर्भुवः स्वः विष्णो इहागच्छ इह तिष्ठ॥ विष्णवे नमः ॥ ४ ॥ उत्तरे गुरोर्दक्षिणे श्वेतपुष्पाक्षतैर्ब्रह्माणम् ॥ ॐ ब्रह्मयज्ञानमिति प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दः ब्रह्मा-

देवता ब्रह्मावाहने विनियोगः । ॐ ब्रह्मयज्ञानम्प्रथमंपुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चवि
वः॥ ॐ भूर्भुवः स्वः ब्रह्मन्निहागच्छ इह तिष्ठ ॥ ब्रह्मणे नमः ॥५॥ पूर्वे शुक्रदक्षिणे पीतपुष्पाक्षतैरिन्द्रम् ॥ ॐ त्रातारमिन्द्रमित्यस्य गर्ग ऋषिस्त्रिष्टुप्
छन्दः इन्द्रो देवता इन्द्रावाहने विनियोगः । ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्ति
नोमघवाधात्विन्द्रः॥ ॐ भूर्भुवः स्वः इन्द्र इहागच्छ इह तिष्ठ ॥ इन्द्राय नमः ॥ ६ ॥ पश्चिमे शनिदक्षिणे कृष्णपुष्पाक्षतैर्यमम् । ॐ यमाय
त्वा इति यम ऋषिस्त्रिष्टुप् छन्दः यमो देवता यमावाहने विनियोगः । ॐ यमायत्वामखायत्वासूर्य्यस्यत्वातपसे ॥ देवस्त्वासवितामद्ध्वानक्तुपृथि
व्याꣳसꣳस्पृशस्पाहि ॥ अर्चिरसिशोचिरसितपोसि ॥ ॐ भूर्भुवः स्वः यम इहागच्छ इह तिष्ठ ॥ यमाय नमः ॥ ७ ॥ नैर्ऋत्यां राहोर्दक्षिणे धूम्रपु
पाक्षतैः कालम् । । ॐ कार्षिरासिरिति प्रजापतिर्ऋषिरनुष्टुप् छन्दः कालो देवता कालावाहने विनियोगः । ॐ कार्षिरसिसमुद्रस्यत्वाक्षित्याऽउ
न्नयामि ॥ समापोऽअद्भिरग्मतसमोषधीभिरोषधीः ॥ ॐ भूर्भुवः स्वः काल इहा० ॥ ८ ॥ वायव्यां केतुदक्षिणे रक्तपुष्पाक्षतैश्चित्रगुप्तम् । ॐ चि
त्रावसो इत्यस्य हिरण्यस्तूप ऋषिः अतिजगती छन्दश्चित्रगुप्तो देवता चित्रगुप्तावाहने विनियोगः । ॐ चित्रावसोस्वस्तितेपारमशीय ॥ ॐ भूर्भु
वः स्वश्चित्रगुप्त इहा०॥९॥ इत्यधिदेवताः ॥ अथ प्रत्यधिदेवतानामावाहनम् ॥ मध्ये सूर्यस्य वामे रक्तपुष्पाक्षतैरग्निमावाहयेत् ॥ ॐ अग्निं दूतमिति
विरूपाक्ष ऋषिर्गायत्रीछन्दोऽग्निर्देवताग्न्यावाहने विनियोगः । ॐ अग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२ऽआसादयादिह ॥ ॐ भूर्भुवः स्वरग्ने
इहागच्छ इह तिष्ठ ॥ अग्नये नमः ॥ १ ॥ आग्नेय्यां चन्द्रवामे श्वेतपुष्पाक्षतैर्जलम् ॥ ॐअप्स्वग्ने इति देवा ऋषयः देवी बृहती छन्दः आपो देवता
अपामावाहने विनियोगः । अप्स्वग्नेसधिष्टवसौषधीरनुरुद्ध्यसे ॥ गर्ब्भेसञ्जायसेपुनः । ॐ भूर्भुवः स्वः आप इहाग० ॥ २ ॥ दक्षिणे भौमवा
मपार्श्वे रक्तपुष्पाक्षतैः भूमिम् । ॐ स्योनापृथिवीति मेधातिथिर्ऋषिः गायत्री छन्दः पृथिवी देवता भूम्यावाहने विनियोगः । ॐस्योनापृथिविनोभ

वानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाः । ॐ भूर्भुवः स्वः पृथिवि इहागच्छ इह तिष्ठ० ॥ ३ ॥ ईशान्यां बुधवामे पीतपुष्पाक्षतैर्विष्णुम् । ॐ इदं विष्णुरिति मेधातिथिर्ऋषिर्गायत्री छन्दः विष्णुर्देवता विष्णवावाहने विनियोगः । ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्य पाꣳसुरेस्वाहा ॥ ॐ भूर्भुवः स्वः विष्णो इहागच्छ इह तिष्ठ० ॥ ४ ॥ उत्तरे गुरुवामे पीतपुष्पाक्षतैरिन्द्रम् । ॐ सजोषाइन्द्र इति विश्वामित्र ऋषिस्त्रिष्टुप् छन्दः इन्द्रो देवता इन्द्रावाहने विनियोगः । ॐ सजोषाइन्द्रसगणोमरुद्भिꣳसोमम्पिबवृत्रहाशूरविद्वान् ॥ जहिशत्रूꣳरपमृधोनुद स्वाथाभयंकृणुहिविश्वतोनः ॥ ॐ भूर्भुवः स्वः इन्द्र इहा० ॥ ५ ॥ पूर्वे शुक्रस्य वामे पीतपुष्पाक्षतैरिन्द्राणीम् । ॐ अदित्यै रास्ना इति दध्यङ्ङाथर्वण ऋषिर्यजुश्छन्दः इन्द्राणी देवता इन्द्राण्यावाहने विनियोगः । ॐ अदित्यैरास्नासीन्द्राण्याऽउष्णीषः ॥ पूषासिघर्म्मायदीष्व ॥ ॐ भूर्भुवः स्वः इन्द्राणीहाग० ॥ ६ ॥ पश्चिमे शनेर्वामे श्वेतपुष्पाक्षतैः प्रजापतिम् ॥ ॐ प्रजापत इति हिरण्यगर्भ ऋषिस्त्रिष्टुप्छन्दः प्रजापति र्देवता प्रजापत्यावाहने विनियोगः । ॐ प्रजापतेनत्त्वदेतान्यन्योविश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तुवयꣳस्यामपत योरयीणाम् ॥ ॐ भूर्भुवः स्वः प्रजापते इहा० ॥ ७ ॥ नैर्ऋत्यां राहोर्वामे कृष्णपुष्पाक्षतैर्नागम् । ॐ नमोऽस्तु सर्पेभ्य इत्यस्य प्रजापति ऋषिरनुष्टुप्छन्दः सर्पा देवताः सर्पावाहने वि० । ॐ नमोस्तुसर्प्पेभ्योयेकेचपृथिवीमनु ॥ येऽअन्तरिक्षेयेदिवितेभ्यः सर्पेभ्योनमः ॥ ॐभूर्भुवःस्वः अष्टकुलीनाग[1] इहा० ॥ ८ ॥ वायव्यां केतोर्वामे श्वेतपुष्पाक्षतैर्ब्रह्माणम् । ॐ ब्रह्मयज्ञानमित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः ब्रह्मा देवता

---

१ अष्टकुलीनागेति—अत्राष्टानां कुलानां समाहार इति विग्रहे "तद्धितार्थोत्तरपदसमाहारे च २ । १ । ५१" इति पाणिनीयसूत्रेण समासे सति, "संख्यापूर्वो द्विगुः २ । १ । ५२" इत्यनेन द्विगुसंज्ञायां च विहितायां "स नपुंसकम्" इत्यनेन क्लैब्ये जाते, "अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः" इति वार्तिकबलादस्य स्त्रीत्वप्रसक्तिस्ततो "द्विगोः ४ । १ । २१" इति शास्त्रेण ङीपि कृतेऽष्टकुलीति सिद्धम् । ततो नागशब्देन सहात्र षष्ठीतत्पुरुषः ॥ नचात्राष्टकुलशब्दान्मत्वर्थीय इनिरिति वाच्यं, "न कर्मधारयान्मत्वर्थीयो, बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः" इति सिद्धान्तोक्तेः ॥

ब्रह्मावाहने विनियोगः । ॐ ब्रह्मयज्ञानंप्रथमंपुरस्ताद्विसीमतः सुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥
ॐ भूर्भुवः स्वर्ब्रह्मन्निहागच्छ इह तिष्ठ० ॥ ९ ॥ इति प्रत्यधिदेवताः ॥ अथ पञ्चलोकपालानावाहयेत् ॥ नैर्ऋत्यां राहोरुत्तरभागे पीतपुष्पा
क्षतैर्गणपतिमावाहयेत् ॥ ॐ गणानां त्वा इति प्रजापतिर्ऋषिरनुष्टुप्छन्दः गणपतिर्देवता गणपत्यावाहने विनियोगः ॥ ॐ गणानांत्वागणपति
ᳬहवामहेप्प्रियाणान्त्वाप्रियपतिᳬहवामहेनिधीनान्त्वानिधिपतिᳬहवामहेवसोमम ॥ आहमजानिगर्ब्भधमात्त्वमजासिगर्ब्भधम् ॥ ॐ भूर्भुवः
स्वः गणेश इहागच्छ इह तिष्ठ० ॥ १ ॥ पश्चिमे शन्युत्तरे रक्तपुष्पाक्षतैर्दुर्गाम् । ॐ जातवेदसे इति प्रजापतिर्ऋषिरनुष्टुप्छन्दो दुर्गा देवता
दुर्गावाहने विनियोगः । ॐ जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः ॥ सनः पर्षदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः ॥
ॐ भूर्भुवः स्वः दुर्गे इहा० ॥ २ ॥ मध्ये सूर्योत्तरे पीतपुष्पाक्षतैर्वायुम् । ॐ आनोनियुद्भिरित्यस्य वसिष्ठऋषिस्त्रिष्टुप्छन्दः वायुर्देवता
वाय्वावाहने विनियोगः ॥ ॐ आनोनियुद्भिः शतिनीभिरध्वरᳬसहस्त्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्ति
भिःसदानः ॥ ॐ भूर्भुवः स्वः वायो इहागच्छ इह० ॥ ३ ॥ पूर्वे शुक्रस्य पूर्वभागे नीलपुष्पैराकाशम् । ॐ घृतं घृतपावान इति प्रजापति
र्ऋषिर्विराट् छन्द आकाशो देवता आकाशावाहने विनियोगः । ॐ घृतंघृतपावानःपिबतवसांवसापावानःपिबतान्तरिक्षस्यहविरसिस्वाहा ॥
दिशः प्रदिशऽआदिशोविदिशऽउद्दिशोदिग्भ्यःस्वाहा ॐ भूर्भुवः स्वराकाश इहा० ॥ ४ ॥ नैर्ऋत्यां राहोर्दक्षिणे श्वेतपुष्पाक्षतैरश्विनौ ।
ॐ यावांकशेति मेधातिथिर्ऋषिर्गायत्री छन्दः अश्विनौ देवते अश्विनोरावाहने विनियोगः । ॐ यावाङ्कशामधुमत्त्यश्विनासूनृतावती ॥
तयायज्ञम्मिमिक्षतम् ॥ उपयामगृहीतोस्यश्विब्भ्यान्त्वैषतेयोनिर्म्माध्वीभ्यान्त्वा ॥ ॐ भूर्भुवः स्वरश्विनाविहागच्छतम् इह तिष्ठतम्० ॥ ५ ॥
इति पञ्चलोकपालाः ॥ अथ पूर्वादिदिक्षु इन्द्रादीनावाहयेत् ॥ पूर्वे । ॐ त्रातारमिन्द्रमवितारमिन्द्रᳬहवेहवेसुहवᳬशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरु

हूतमिन्द्रꣳ स्वस्तिनोमघवाधात्विन्द्रः ॥ ॐ भूर्भुवः स्वरिन्द्र इहागच्छ इह तिष्ठ० ॥ १ ॥ आग्नेय्याम् । ॐ त्वन्नोऽअग्नेवरुणस्यविद्वा
न्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमः शोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत् ॥ ॐ भूर्भुवः स्वरग्ने इहागच्छ० ॥ २ ॥ याम्ये
ॐ यमायत्वामुखायत्वासूर्य्यस्यत्वातपसे ॥ देवस्त्वासवितामध्वानक्तुपृथिव्याःसꣳस्पृशस्पाहि ॥ अर्चिरसिशोचिरसितपोसि ॥ ॐ भूर्भुवः स्वर्य
म इहा० ॥ ३ ॥ नैर्ऋत्याम् । ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमुस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतु
भ्यमस्तु ॥ ॐ भूर्भुवः स्वर्निर्ऋते इहा० ॥ ४ ॥ पश्चिमे ॐ वरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनीस्स्थोवरुणस्यऽऋतसदन्यसिवरुणस्य
ऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ ॐ भूर्भुवः स्ववरुण इहा० ॥ ५ ॥ वायव्याम् । ॐ आनोनियुद्भिः शतिनीभिरध्वरꣳ सहस्रि
णीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयंपातस्वस्तिभिःसदानः ॥ ॐ भूर्भुवः स्ववायो इहा० ॥ ६ ॥ उत्तरे । ॐ वयꣳ सोम
व्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावन्तःसचेमहि ॥ ॐ भूर्भुवः स्वः कुबेर इहाग० ॥ ७ ॥ ऐशान्याम् । ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धि
यञ्जिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ॐ भूर्भुवः स्वः ईशान इहा० ॥ ८ ॥ ईशानपूर्वयोर्मध्ये
ब्रह्माणम् । ॐ अस्म्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥ यःशꣳसतेस्तुवतेधायिपज्ज्रऽइन्द्रज्ज्येष्ठाऽअस्माँ २ अवन्तुदेवाः ॥ ॐ भू
र्भुवः स्वर्ब्रह्मन्निहागच्छ इह तिष्ठ० ॥ ९ ॥ निर्ऋतिवरुणयोर्मध्येऽनन्तम् । ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाः ॥
ॐ भूर्भुवः स्वरनन्त इहागच्छ इह तिष्ठ० ॥ १० ॥ इति दिक्पालावाहनम् ॥ अथ मण्डलमध्ये सूर्यपरितः प्रदक्षिणक्रमेण पितामहाद्यावाह
नम् ॥ ॐ ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ ॐ भूर्भुवः स्वर्ब्रह्म
न्निहागच्छ इह तिष्ठ० ॥ १ ॥ ॐ त्र्यम्बकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्व्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ त्र्यम्बकंयजामहेसुग

न्धिपतिवेदनम् ॥ त्र्यम्बकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम् । उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ ॐ भूर्भुवः स्वः शिव इहा० ॥ २ ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाꣳसुरे ॥ ॐ भूर्भुवः स्वर्विष्णो इहा० ॥ ३ ॥ ॐ गणानान्त्वा० गर्भधम् ॥ ॐ भूर्भुवः स्वः गणपते इहा० ॥ ४ ॥ ॐ श्रीश्चते लक्ष्मीश्च० सर्वलोकम्मऽइषाण ॥ ॐ भूर्भुवः स्वर्लक्ष्मि इहा० ॥ ५ ॥ ॐ पञ्चनद्यःसरस्वतीमपियन्तिसस्रोतसः ॥ सरस्वतीतुपञ्चधासोदेशे भवत्सरित ॥ ॐ भूर्भुवः स्वः सरस्वति इहा० ॥ ६ ॥ ॐ अम्बेऽअम्बिकेम्बालिकेनमानयतिकश्चन ॥ ससस्त्यश्वकःसुभद्रिकाङ्काम्पीलवासिनीम् ॥ ॐ भूर्भुवः स्वर्दुर्गे इहा० ॥ ७ ॥ ॐ नहिस्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरऽएतारमग्नेः ॥ एमेनमवृधन्नमृताऽअमर्त्यंवैश्वानरंक्षेत्रजित्यायदेवाः ॥ ॐ भूर्भुवः स्वः क्षेत्रपाल इहा० ॥ ८ ॥ ॐ भूतायत्वानारातयेस्वरभिविख्येषन्दृꣳहन्तान्दुर्य्याःपृथिव्यामुर्वन्तरिक्षमन्वेमिपृथिव्यास्त्वानाभौसादयाम्य दित्याऽउपस्थेग्नेहव्यꣳरक्ष ॥ ॐ भूर्भुवः स्वः भूतानि इहागच्छतेह तिष्ठत ॥ ९ ॥ ॐ विश्वकर्म्मन्हविषावर्द्धनेनत्रातारमिन्द्रमकृणोरवद्ध्यम् ॥ तस्मैविशःसमनमन्तपूर्वीरयमुग्रोविहव्योयथासत् ॥ ॐ भूर्भुवः स्वः विश्वकर्मन्निहागच्छ इह तिष्ठ ॥ १० ॥ इत्यावाह्य ॥ ॐ मनोजूतिर्जुष तामाज्ज्यस्यबृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳसमिमन्दधातु ॥ विश्वेदेवासऽइहमादयन्तामों३ प्रतिष्ठ ॥ १ ॥ इति प्रतिष्ठाप्य ॥ ततो देश कालौ संकीर्त्य मम इह सकलदुरितोपशमनद्वारा श्रीपरमेश्वरप्रीत्यर्थं सूर्यादिनवग्रहाणामधिदेवतानां प्रत्यधिदेवतानां पञ्चलोकपालानां दश दिक्पालानां ब्रह्मविष्णुरुद्रलक्ष्मीसरस्वतीनां सक्षेत्रपालगणपतिवरुणादीनां च पूजनमहं करिष्य इति सङ्कल्प्य ॥ ॐ ग्रहाऽऊर्ज्जाहुतयोव्यन्तो

---

१ 'जन्मभूर्गोत्रमग्निश्च वर्णस्थानमुखानि च। योऽज्ञात्वा कुरुते शान्तिं ग्रहास्तेनावमानिताः ॥' इति स्कन्दवाक्याद् ग्रहाणां जन्म—भू—गोत्र—वह्नि—वर्ण—स्थान—मुख—स्वरूपाः अधिदेवतादिवरुणान्तानामेषां ग्रहमण्डलमध्यवर्तिनां देवानां स्थापनदेशः, पूजायां च प्रतिदैवतं वस्त्र—गन्ध—पुष्प—धूप—दीप—नैवेद्यादिदेयद्रव्याणां पार्थक्येनोपदेशः प्रतिग्रहं होमद्र व्याणि चेत्याद्यनेकेऽवश्यं ज्ञातव्यविषयास्तु मदीये "स्मार्तवल्लभे" संस्कारभास्करादिग्रन्थान्तरेषु वा द्रष्टव्याः।

विप्रायमुतिम् । तेषांविशिष्प्रियाणांवोहमिषमूर्ज्जᳫ समग्रभमुपयामगृहीतोसीन्द्रायत्वाजुष्टं ह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् ॥ सम्पृचौ स्त्थःसंमाभद्रेणपृङ्क्तंविपृचौस्त्थोविमापाप्मनापृङ्क्तम् ॥ १ ॥ इति पठित्वा पश्चात्तद्ग्रहवर्णयुतैः पुष्पाक्षतचन्दनधूपदीपनैवेद्यादिभिराकृष्णे नेत्यादिपूर्वोक्तैर्मन्त्रैः सूर्यादीन्सर्वान्मडलमध्यस्थापितान्देवान्पूजयेत् । तद्यथा ॐ सूर्यादिनवग्रहेभ्यो नमः । ॐ रुद्राद्यधिदेवताभ्यो नमः ॐ अग्न्यादिप्रत्यधिदेवताभ्यो नमः । ॐ विनायकादिपञ्चलोकपालेभ्यो नमः । ॐ इन्द्रादिदशदिक्पालेभ्यो नमः । ॐ ब्रह्मादिविश्वकर्मान्तेभ्यो नमः ॥ एवं संपूज्य ततो ग्रहवेदीसमीपे भूमौ पूर्ववन्नाममन्त्रैर्ग्रहदेवताभ्यो बलिं दद्यात् । सूर्याय गुडौदनम् । सोमाय घृतपायसम् । कुजाय मसूरान्नम् । बुधाय क्षीरौदनम् । बृहस्पतये दध्योदनम् । शुक्राय घृतौदनम् । शनैश्चराय तिलपिष्टं कृच्छ्रान्नं वा । राहवे पायसम् । केतवे चित्रौदनम् । अन्येभ्यः पायसबलीन्दद्यात् ॥ अनया पूजया आदित्यादिग्रहमण्डलदेवताः प्रीयन्तामिति पठेत् ॥ तत ईशानकोणेऽव्रणं कलशं[1] स्थापयेत् ॥ भूमिस्पर्शनमन्त्रः ॥ ॐ भूरसिभूमिरस्यदितिरसिविश्वधायाविश्वस्यभुवनस्यधर्त्री ॥ पृथिवींयच्छपृथिवींदृᳫहपृथिवींमाहिᳫसीः ॥ १ ॥ धान्यमसीति धान्यक्षेपणम् । ॐ धान्यमसिधिनुहिदेवान्प्राणायत्वोदानायत्वाव्यानायत्वा ॥ दीर्घामनुप्रसितिमायुषेधांदेवोवः सविताहिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिनाचक्षुषेत्वामहीनाम्पयोसि ॥ २ ॥ आजिघ्रेति धान्योपरि कलशस्थापनम् । ॐ आजिघ्रकलशंमह्यात्वाविशन्त्विन्दवः ॥ पुनरूर्ज्जानिवर्त्तस्वसानः सहस्रंधुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयिः ॥ ३ ॥ वरुणस्येत्युदकं पूरयेत् । ॐ वरुणस्योत्तम्भनमसिवरुणस्य स्कम्भसर्ज्जनीस्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ ४ ॥ वसोः पवित्रेति वस्त्रं कण्ठे वेष्टयेत् । ॐ



१ अयं रुद्रकलशो यजमानस्य स्नानार्थमिति कमलाकरः ।

वसोःपवित्रमसिशतधारंवसोःपवित्रमसिसहस्रधारम् । देवस्त्वासवितापुनातुवसोःपवित्रेणशतधारेणसुप्प्वाकामधुक्षः ॥ ५ ॥ याः फलिनीरिति पूगीफलम् ॥ ॐ याऽफलिनीर्याअफलाअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वꣳहसः ॥ ६ ॥ परिवाजेति पञ्चरत्नानि ॥ ॐ परिवाजपतिःकविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥ ७ ॥ हिरण्यगर्भेति हिरण्यम् । ॐ हिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातःपतिरेकऽआसीत् ॥ सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम ॥ ८ ॥ गन्धद्वारेति गन्धम् । ॐ गन्धद्वारां दुराधर्षांनित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ९ ॥ याऽओषधीरिति सर्वौषधीः । ॐ याऽओषधीःपूर्वाजातादेवेभ्यस्त्रियुगम्पुरा ॥ मनैनुबभ्रूणामहꣳशतंधामानिसप्तचं ॥ १० ॥ ततोऽस्मिन्कलशे ( अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात् । राजद्वाराद्गोकुलाच्च मृदमानीय निक्षिपेत् ) ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ ११ ॥ इति सप्त मृदः ॥ काण्डात्काण्डादिति दूर्वाः ॐ काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ १२ ॥ अश्वत्थेव इति मन्त्रेण पञ्च पल्लवान् । अश्वत्थेवोनिषदनंपर्णेवोवसतिष्कृता ॥ गोभाजऽइत्किलासथयत्सनवथपूरुषम् ॥ १३ ॥ पवित्रे स्थ इति मन्त्रेण पवित्राणि क्षिपेत् । ॐ पवित्रेस्थोवैष्णव्यौसवितुर्वःप्रसवऽउत्पुनाम्यच्छिद्रेणपवित्रेणसूर्य्यस्यरश्मिभिः ॥ तस्यतेपवित्रपतेपवित्रपूतस्ययत्कामःपुनेतच्छकेयम् ॥ १४ ॥ पूर्णादर्वीति मन्त्रेण तन्दुलपूरितपात्रं कलशोपरि स्थापयेत् । ॐ पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाऽइषमूर्जꣳशतक्रतो ॥ १५ ॥ श्रीश्चत इति श्रीफलम् । ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मऽइषाण ॥ १६ ॥ ॐ मनोजूतिर्जुषतामाज्ज्यस्यबृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳसमिमंदधातु ॥ विश्वेदेवासऽइहमादयन्तामों ३ प्रतिष्ठ ॥ १७ ॥ इति कलशप्रतिष्ठा ॥ ततस्तत्र तत्त्वायामीति वरुणमावाह्य ॥ ॐ तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरु

णेहबोध्युरुशꣳस मानुऽआयुꣳप्रमोषीः ॥ १८ ॥ ॐ भूर्भुवः स्वः वरुण इहागच्छ इह तिष्ठ । ॐ वरुणाय नम इति षोडशोपचारैः वरुणं पूजयेत् ॥ ततः ॐ असंङ्ख्याताः सहस्राणि ये रुद्राऽअधिभूम्याम् ॥ तेषांꣳसहस्रयोजनेवधन्वानितन्मसि ॥ १ ॥ इति मन्त्रेण रुद्रमावाह्य षोडशोपचारैः संपूज्य ततो गङ्गाद्यावाहनम् । सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ॥ आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ १ ॥ ( ततः कलशाभिमन्त्रणम् ) कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ॥ मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ १ ॥ कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा ॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ॥ अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥ २ ॥ ( ततः कलशप्रार्थना ) । देवदानवसंवादे मथ्यमाने महोदधौ ॥ उत्पन्नोऽसि यदा कुम्भ विधृतो विष्णुना स्वयम् ॥ १ ॥ त्वत्तः सर्वाणि तीर्थानि देवाः सर्वे त्वयि स्थिताः ॥ त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ २ ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ॥ आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ ३ ॥ त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ॥ त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ ४ ॥ इति कलशप्रार्थना ॥ अनेन कलशोदकेन [१]अभिषेकसमये पत्न्या सह यजमानमभिषिञ्चेत् ) अथ सर्वदेवप्रतिष्ठासु प्रधानतया मूलभूतं सर्वतोभद्रमण्डलं [२]सदैवं सपूजनमाह ।

---

१ अत्र अन्यत्रापि च सर्वत्राभिषेके ब्राह्मणा उत्तिष्ठन्तो भवेयुरिति बोद्धव्यम् । तत्प्रमाणं यथा "सर्वप्रायश्चित्तप्रयोगपद्धतौ"--"अभिषेकं मूर्ध्नि होमं माङ्गल्यं स्वस्तिवाचनम् ॥ प्रैषं च मन्त्रपाठं च तिष्ठन् कुर्यात् सदैव हि " इति ॥ मूर्धनि होमो विनायकशान्त्यां भवति । अभिषेके पत्नी वामे, इति च न विस्मरणीयं प्रमाणन्त्वत्रैव पुण्याहवाचनस्य टिप्पण्यामुक्तपूर्वम् । अभिषेकान्ते च सुवासिन्या यजमानस्य नीराजनं ( आरार्तिकम् ) कर्तव्यं " वारुणैः पावमानीयैरभिषिच्य सपत्निकम् । नीराजनं ततः कुर्यादन्ते कर्मेश्वरार्पणम्" इति संस्कारभास्करे पुण्याहवाचनपारिभाषायामुक्तत्वात् । २ अत एवात्र प्रधानेऽस्मिन्मण्डले प्रधानपूजनमप्यनन्तरमुच्यमानं यथाज्ञानं सविधानं विधेयम् ।

हेमाद्रौ स्कान्दे । प्रागुदीच्यां गता रेखाः कुर्यादेकोनविंशतिः ॥ खण्डेन्दुस्त्रिपदः कोणे शृङ्खला पञ्चभिः पदैः ॥ १ ॥ एकादशपदा वल्ली भद्रं तु नवभिः पदैः ॥ चतुर्विंशत्पदा वापी विंशत्या परिधिः पदैः ॥ २ ॥ मध्ये षोडशभिः कोष्ठैः पद्ममष्टदलं स्मृतम् ॥ श्वेतेन्दुः शृङ्खला कृष्णा वल्ली नीलेन पूरयेत् ॥ ३ ॥ भद्रं रक्तं सिता वापी परिधिः पीतवर्णकः ॥ बाह्यान्तरदलैः श्वेता कर्णिका पीतवर्णिका ॥ ४ ॥ परिध्यावेष्टितं पद्मं बाह्ये सत्त्वं रजस्तमः ॥ तन्मध्ये स्थापयेद्देवान्ब्रह्माद्यांश्च सुरेश्वरान् ॥ ५ ॥ अथ सर्वतोभद्र ( मण्डल ) देवतापूजनम् ( तत्रादौ कर्ता प्रातर्जलाशयं गत्वा तत्र कात्यायनोक्तस्नानविधिना स्नात्वा[1] कृतसन्ध्यादि[2]नित्यकर्मा कर्मार्थं भूयोऽपि कृतमङ्गल[3]स्नानः सपत्नीको[4] यजमानः परिहिताहत[5]शुक्लद्विवासा

---

१ वाराहे—सुस्नातः सम्यगाचान्तः कृतसन्ध्यादिकक्रियः । कामक्रोधविहीनश्च पाखण्डस्पर्शवर्जितः । जितेन्द्रियः सत्यवादी सर्वकर्मसु शस्यते ॥ तथा च **परशुरामः**—पातादिवर्जिते प्रातर्नित्यं कर्म समारभेत् । नद्यां वाऽथ तडागे वा देवखाते ह्रदेऽथवा । सूत्रोक्तविधिना शौचपूर्वं स्नानं समाचरेत् ॥ **आग्नेये**—स्नानानामपि सर्वेषां वारुणेन च मानवः । कर्तुमर्हति कर्माणि विधिवत्सर्वदा द्विजः ॥ **हेमाद्रौ प्रचेताः**—स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि । पवित्राङ्गस्तथा जाप्ये दाने च विधिचोदिते । इति ॥ २ सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यदन्यत् कुरुते कर्म न तस्य फलमश्नुते । इति **संस्कारभास्करे** ॥ ३ **परशुरामः**—ततः स्वगृहमागत्य मङ्गलस्नानमाचरेत् । सर्वौषधीगन्धचूर्णैर्युक्तैः कृष्णतिलामलैः । उद्वर्त्याङ्गानि तैलेन चम्पकादिसुगन्धिना । इत्येतन्मङ्गलस्नानं कुर्वीत ब्राह्मणैः सह ॥ ४ **धर्मे चार्थे च कामे च नातिचरितव्येति** वाक्येनात्र दम्पत्योः सहाधिकारः सिद्ध एव अत्र **"पत्युर्नो यज्ञसंयोगे ४ । १ । ३३ "** इति सूत्रव्याख्यावसरे दम्पत्योः सहाधिकारादिति दीक्षितवाक्ये, जयपुरीयैः **महामहोपाध्यायैः श्रीशिवदत्तशर्मशास्त्रिभिः** टिप्पणीरूपेण यत्प्रपञ्चितं तद्दिदृक्षुभिस्तत्र ( सिद्धान्तकौमुद्यां स्त्रीप्रत्ययप्रकरणे ) द्रष्टव्यमत्र तु ग्रन्थगौरवभिया न लिख्यते ॥ ५ ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् । अहतं तद्विजानीयात् सर्वकर्मसु पावनम् । इति **स्मृतिरत्नावल्याम्** । ईषद्धौतम्—अरजकादिना सकृत्प्रक्षालितमिति ॥ अत्र शुक्लशब्दो नील्यादिरागरक्तवस्त्रनिषेधाभावपरो बोध्यः । नीलीरागनिषेधश्च सर्वत्र धर्मशास्त्रेषु, तत्र **गृह्यसूत्रभाष्ये हरिहरः** । एकपङ्क्त्युपविष्टानां भोजनेन पृथक् पृथक् । यद्येको लभते नीलीं सर्वे तेऽशुचयः स्मृताः ॥ यस्य पट्टे शुचौ तन्तु—

बद्धशिखी यज्ञोपवीती यथायोग्यमलङ्कृतो धृतकुङ्कुमकेशरान्यतमम‍ङ्गलतिलको भस्मरुद्राक्षमालाधरः कृतजानुमध्यकरः करद्वये धृतकौशहैम

—नीलीरक्तो हि दृश्यते । त्रिरात्रोपोषणं देयं शेषाश्चैकोपवासिनः ॥ इति । **भविष्ये**—नीलीरक्तेन वस्त्रेण यत्कर्म कुरुते द्विजः । स्नानं दान तपो होमः स्वाध्यायः पितृकर्म च॥वृथा तस्य महा यज्ञा नीलीरक्तस्य धारणात् ॥ इत्यादि बहु बहुत्र । कुत्रचिदस्यापवादोऽपि यथा **संस्कारभास्करे** परिभाषायाम् ( कम्बले पट्टवस्त्रे च नीली रागो न दुष्यति इति । **क्षौमे वस्त्रेऽहते पत्नी चेति** सूत्रे अनन्तयाज्ञिकैरप्येवं व्याख्यातमिति ) । १ सदोपवीतिना भाव्यं सदा बद्धशिखेन च । विशिखो व्युपवीतश्च यत् करोति न तत् कृतम् । इति । **बौधायनोक्तिर्भास्करे** शिखाबन्धने मन्त्रश्च वैदिको "मानस्तोके०"इति । २ **विष्णुधर्मोत्तरे**—तिलकं कुङ्कुमेनैव सदा मङ्गलकर्मणि । कारयित्वा सुमतिमान्न श्वेतचन्दनं मृदा । इदं ब्राह्मणद्वारा कार्यं कारयित्वेति कारितार्थप्रयोगदर्शनात् । ३ विभूतिर्यस्य नो भाले नाङ्गे रुद्राक्षधारणम् । न हि वाण्यां शिवोच्चारस्तं त्यजेदन्त्यजं यथा । इति । **नित्यकर्मप्रयोगमालायाम्** । ४ यथाह, **आपस्तम्बः**—आर्द्रवासास्तु यत् कुर्याज्जपहोमपरिग्रहम् । सर्वं तद् राक्षसं विद्याद्बहिर्जानु च यत् कृतम् । ५ अत्र कौशपवित्रकरणे दृश्यते प्रायो बहुविधो विकल्पः स यथा—**संस्कारभास्करे मार्कण्डेयवचनम्**—चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् । एकैकं न्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम् । सर्वेषां वा भवेद् द्वाभ्यां पवित्रं ग्रथितं न वा । चतुर्भिः शान्तिके कार्यं पौष्टिके पञ्चभिस्तथा ॥ **गारुडे**—सप्तभिर्दर्भपिञ्जूलैः कुर्याद् द्विजपवित्रकम् । पञ्चभिः क्षत्रियस्यैव चतुर्भिस्तु तथा विशः । द्वाभ्यां शूद्रस्य विहितमङ्गनानां तथैव च ॥ **सुमन्तुकश्यपौ**—सव्ये चैव तथा त्रीन्वै बिभृयाद् द्वौ च दक्षिणे ॥ **बौधायनः**—हस्तयोरुभयोर्द्वौ द्वावासनेऽपि तथैव च । सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रकः ॥ इति । **छन्दोगपरिशिष्टे मार्कण्डेयः**-चतुर्भिः शान्तिके कार्यं पौष्टिके पञ्चभिस्तथा । पैतृके तु त्रयो दर्भा द्वौ दर्भौ नित्यकर्मणि । इत्यादि बहु । गौडमैथिलदाक्षिणात्यभेदाश्चापि भेदोऽत्र बहुविधः शास्त्रेषु दृष्टः । अस्य धारणस्थाने, उच्छिष्टानुच्छिष्टे चास्ति विकल्पवादः । **रत्नावल्याम्**—द्वयोस्तु पर्वणोर्मध्ये पवित्रं धारयेद् बुधः । अनामिकाग्रपूर्वे तु विसर्गे तु पवित्रकम्॥अनामिकामूलदेशे पवित्रं धार्यते द्विजैरित्यनेनात्र विरोधः॥ प्रथमस्तु ग्रन्थावत्र विकल्पस्ततस्तद्धृतपवित्रपाणिनाचमने, उच्छिष्टानुच्छिष्टात्मको द्वितीयः, यथोक्तं **हारीतस्मृतौ**—"ग्रन्थिर्यस्य पवित्रस्य न तेनाचमनं चरेत् ।" इति । तत्रैव च "आचामेत्प्रयतो नित्यं पवित्रेण द्विजोत्तमः । नोच्छिष्टस्तु भवेत्तत्र भुक्तोच्छिष्टं विवर्ज्जयेत् ॥" इति बहुविधविकल्पदर्शनात्सौवर्णमेव तत् कार्यमिति मे मतिः । तद्विधिस्तु **शारदातिलके**—ताम्रतारसुवर्ण

पवित्रः स्वासने प्रागास्य आसीनः स्मार्तविधिना द्विराचम्य प्राणानायम्य कर्मकलशं संस्थाप्य तज्जलेनात्मानं स्वद

-नामर्क १२ षोडश १६ खेन्दु १० भिः। कृता त्रिशक्तिमुद्रेयं तीव्रदारिद्र्यनाशिनी । माषाणां षोडशादूर्ध्वं कुर्याद्धेमपवित्रकम् ॥ **नागाह्निकेऽपि**--अन्यान्यपि पवित्राणि कुशदूर्वामयानि च । हेमात्मकपवित्रस्य कलां नार्हन्ति षोडशीम् । माषाणां षोडशादूर्ध्वं कुर्याद्धेमपवित्रकम् । तेभ्यः स्वल्पतरं न्यूनं न कुर्वीत कदाचन । हीनकर्मणि चोच्छिष्टे कुशधृतपवित्रकम् । निर्माल्यं तेषु सम्प्राप्तिर्न हेम्नश्च पवित्रके ॥ इति ॥ **संस्कारभास्करे लघुहारीतश्च**–जपे होमे तथा दाने स्वाध्याये पितृकर्मणि । अशून्यं तु करं कुर्यात् सुवर्णरजतैः कुशैरिति । उभाभ्यामेव हस्ताभ्यां विप्रैर्दर्भपवित्रके । धारणीये प्रयत्नेन ब्रह्मग्रन्थिसमन्विते । इत्यत्रिवाक्यादत्र ग्रन्थिर्देया तद्विधानं च **गारुडे**--सन्त्यज्य वैष्णवं मार्गं ब्रह्ममार्गविनिःसृतम् । सकृत्प्रदक्षिणीकृत्य पवित्रमभिधीयते । तद् ब्रह्मग्रन्थिमत्प्रोक्तं पवित्रं वेदवादिभिः ॥ **आह्निकसूत्रावल्याम्**--द्विगुणीकृतानां दर्भशिखानां यदा स एव पाशः प्रादक्षिण्येन समग्रेवेष्टनं विधाय पुरोभागेन प्रवेश्यते तदा स ब्रह्मग्रन्थिरिति । एतच्च समन्त्रं धार्यते--मन्त्रेण धारयेद्विद्वान् पवित्रं सर्वकर्मसु । मन्त्रं विना धृतं यत्तु पवित्रमफलं हि तत् । इति **प्रयोगपारिजाते** । मन्त्रश्च **"पवित्रे स्थो वैष्णव्यौ"** इति । १ " वारणादिविहितकाष्ठानिर्मिते " । २ उदङ्मुखः प्राङ्मुखो वा दैवं कर्म समाचरेत् ॥ **छन्दोगपरिशिष्टे** च, यत्र दिङ्नियमो नास्ति जपादिषु कथंचन । तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्री सौम्याऽपराजिता ॥ ३ आसीनः प्रह्व ऊर्ध्वो वा नियमो यत्र नेदृशः । तदासीनेन कर्तव्यं न प्रह्वेण तिष्ठतेति **संस्कारभास्करे** छन्दोगवचनम् ॥ ४ श्रौतादिषड्विधेष्वाचमनेष्वत्र स्मार्तकर्मप्राधान्याच्चद्विधिरेवोच्यते–**मनुस्मृतौ**–ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् । कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन ॥ अङ्गुष्ठमूलस्य तलं ब्राह्मं तीर्थं प्रचक्षते । कायमङ्गुलिमूलेऽग्रे दैवं,पित्र्यं तयोरधः। त्रिराचामेदपःपूर्वं द्विःप्रमृज्यात्ततो मुखम् । खानि चैव स्पृशेदद्भिरात्मानं शिर एव च । कियता जलेन तत्कार्यमित्याह **याज्ञवल्क्यः**–हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः।शुद्ध्येरन् स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः। अन्ततः ओष्ठप्रान्तेनेत्यर्थः। **कण्वोऽपि**-संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः । मुक्ताङ्गुष्ठकनिष्ठेन शेषेणाचमनं चरेत् ॥ माषमज्जनपरिमितं पाणितले स्थितमिति पद्धतिकाराः । इन्द्रियस्पर्शे विशेषमाह **शङ्खः**–तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम्। मध्यमाङ्गुष्ठयोगेन स्पृशेन्नेत्रद्वयं ततः॥ अङ्गुष्ठस्यानामिकाया योगेन श्रोत्रयोः स्पृशेत् । कनिष्ठाङ्गुष्ठयोगेन स्पृशेत् स्कन्धद्वयं ततः। नाभिं च हृदयं तद्वत् स्पृशेत् पाणितलेन तु । संस्पृशेत्तु ततः शीर्षमयमाचमने विधिः । ५ इदं स्मार्ताचमनं द्विरावृत्तौ सम्पूर्णं पुनरावर्तनीयं " द्विराचामः क्रियादिषु" इति स्मृतेः । ६ कर्मकलशविधानं तु पूर्वमुक्तम् ( पञ्चदशतमे पृष्ठे ) ।

क्षिणोपस्थापितपूजासंभारांश्च संप्रोक्ष्याक्षतपुञ्जे रक्षोदीपं निधाय, विधाय च शङ्खघण्टाद्यर्चनं शान्तिपाठपुरस्सरं संकल्पं कुर्यात्, तत्राद्येत्यादि पूर्ववत् ) देशकालौ संकीर्त्य ( अद्यामुकगोत्रोऽमुकनामाहं ) ममेह जन्मनि जन्मान्तरे वा कृतकायिकवा

---

१ नाप्रोक्षितं स्पृशेत् किञ्चिद् दैवे पित्र्ये च कर्मणि।इति **श्राद्धविवेके**। २विना दीपेन सकला कर्मसिद्धिर्न जायते। अतः प्रकाशको दीपः पूर्वं स्थाप्यो यथाविधि।इति**तन्त्रसारे**।स्थापनदेशश्चोक्तः **पारिजाते**—कर्मादौ स्थापयेद् दीपं पूर्वभागे विचक्षणः। दीपस्थानं समाश्रित्य कृतं कर्म फलप्रदमिति। **मन्त्रमहोदधौ**—घृतदीपो दक्षिणे स्यात्तैलदीपस्तु वामतः। सितवर्त्तिस्तु दक्षे वामेऽङ्गे रक्तवर्तिकः। इति रक्षादीपस्थापनम्। देवपूजायां तु—देवस्य दक्षिणे पार्श्वे दीपं दद्याद्यथाविधि। साधारं स्थापयेद् दीपमन्यथा ह्यशुभं भवेदिति च। सोऽयं दीपोऽक्षतपुञ्जे निवेश्य तत्र प्रमाणम्-दीपं न स्थापयेद् भूमौ घृततैले न मिश्रयेत्।पात्रं तस्य न भग्नं स्याद्वर्तिका चाप्यदूषिता॥सर्वंसहा वसुमती सहते न त्विदं द्वयम्। अकार्ये पादघातं च दीपतापं तथैव च। कृत्वा तु पृथिवीतापं दीपमुत्सृज्यते नरः। स तापपापं नरकं प्राप्नोत्येव शतं समाः। लभ्यते यस्य तापस्तु दीपस्य चतुरंगुलात्। न स दीप इति ख्यातो ह्योऽघवह्निस्तु स स्मृतः। नैव निर्वापयेद् दीपं देवार्थमुपकल्पितम्। दीपहर्ता भवेदन्धः काणो निर्वापको भवेत्॥ दीपनिर्वापणात्पुंसः कूष्माण्डच्छेदनात् स्त्रियः। अचिरेणैव कालेन पिण्डनाशो भवेद् ध्रुवम्।**इत्याह्निकसूत्र्यावल्याम्**। एवं यथोक्तलक्षणं दीपं प्रज्वाल्य तत्र "**अग्निर्ज्योतिः०**" इति मंत्रेण दीपस्थदेवमावाह्य संपूज्य प्रार्थयेत्।भो दीप त्वं देवरूपः कर्मसाक्षी ह्यविघ्नकृत्। यावत्पूजासमाप्यते तावत्त्वं सन्निधौ भव।भक्त्या दीपं प्रयच्छामि देवाय परमात्मने।त्राहि मां निरयाद् घोराद् दीपज्योतिर्नमोऽस्तु ते। ३शङ्खे जलं प्रपूर्य--शंखे चन्द्रार्कदैवत्यं वरुणं चाधिदैवतम्। पृष्ठे प्रजापतिं विद्यादग्रे गङ्गा सरस्वती। त्रैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया। शङ्खे तिष्ठन्ति विप्रेन्द्र तस्माच्छङ्खं प्रपूजयेत्॥ तत्र "**अग्निर्ऋषिः०**"इति मन्त्रेणावाह्य संपूज्य नमस्कुर्यात्। त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे।।निर्मितः सर्वदेवैश्च पाञ्चजन्य नमोऽस्तु ते इति॥ततो घण्टापूजनम्। आगमार्थं तु देवानां गमनार्थं च रक्षसाम्। घण्टानादं प्रकुर्वीत पश्चाद् घण्टां प्रपूजयेदिति। मंत्रश्चात्र पूजने "**सुपर्णोसि०**" इति। ४ संकल्पेन विना कर्म यत् किंचित् कुरुते नरः। फलं चाप्यल्पकं तस्य धर्मस्यार्धक्षयो भवेत्॥ इति **संस्कारभास्करे**॥ **कात्यायनस्तु** एतं विना सर्वस्य कर्मणो नैष्फल्यमेव सम्मनुते यथा—संकल्प एव मुख्यः स्यात्स्नानदानादिकर्मसु। कर्म संकल्परहितं तत्सर्वं निष्फलं भवेदित्यलं विस्तरेण।

चिकगानासिकसांसर्गिकदोषपरिहारार्थमिहामुत्रसुखसौभाग्यसन्तत्यादिफलप्राप्त्यर्थं श्रीनारायणप्रीतयेऽमुकदेवप्रतिष्ठायज्ञकर्मणि एतत्सर्वतोभद्रमण्डले वेदमन्त्रैर्ब्रह्मादिषट्पञ्चाशद्देवतावाहनस्थापनपूजनं करिष्ये ( तत्रादौ निर्विघ्नतार्थं संक्षेपतो गणपतिपूजां स्वस्तिपुण्याहवाचनं च करिष्ये ) इति संकल्प्य, अक्षतान्गृहीत्वा मध्ये कर्णिकायां ब्रह्माणमावाहयेत् । ॐ ब्रह्मयज्ञानमिति गौतमवामदेवब्रह्माण ऋषयस्त्रिष्टुप् छन्दो ब्रह्मा देवता ब्रह्मस्थापने विनियोगः । ॐ ब्रह्मयज्ञानम्प्रथमंपुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ भूर्भुवः स्वः ब्रह्मन्निहागच्छ इह तिष्ठ ॥ ॐ ब्रह्मणे नमः ॥ १ ॥ उत्तरे वाप्यां सोमम् ॥ ॐ वयꣳसोमेत्यस्य वसुर्ऋषिर्गायत्री छन्दः सोमो देवता सोमस्थापने विनियोगः ॥ ॐ वयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावन्तःसचेमहि ॥ ॐ भूर्भुवः स्वः सोम इहागच्छ इह तिष्ठ ॥ ॐ सोमाय नमः ॥ २ ॥ ईशान्यां खण्डेन्दावीशानम् । ॐ तमीशानमिति मन्त्रस्य गौतम ऋषिस्त्रिष्टुप् छन्दः ईशो देवता ईशस्थापने विनियोगः ॥ ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ॐ भूर्भुवः स्वः ईशान इहा० ॥ ईशानाय नमः ॥ ३ ॥ पूर्वस्यां दिशि वाप्यामिन्द्रम् । ॐ त्रातारमिन्द्रमिति मन्त्रस्य गर्ग ऋषिस्त्रिष्टुप् छन्दः इन्द्रो देवता इन्द्रस्थापने विनियोगः ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः ॥ ॐ भूर्भुवः स्वः इन्द्र इहा० ॥ ॐ इन्द्राय नमः ॥ ४ ॥ आग्नेय्यां खण्डेन्दावग्निम् । ॐ त्वन्नोऽअग्ने इत्यस्य हिरण्यस्तूपऋषिस्त्रिष्टुप् छन्दोऽग्निर्देवताऽग्निस्थापने विनियोगः । त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत् ॥ ॐ भूर्भुवः स्वरग्ने इहा० ॥ ॐ अग्नये नमः ॥ ५ ॥ दक्षिणे वाप्यां यमम् । ॐ सुगन्नः पन्थेति प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दो यमो देवता यमस्थापने विनियोगः ॥ ॐ सुगन्नःपन्थाम्प्रदिशन्नऽएहिज्योतिष्मद्धेह्यजरन्नऽआयुः ॥ अपैतुमृत्युममृतन्नऽआगा

द्वैवस्वतोनो ऽअभयंकृणोतु ॥ ॐ भूर्भुवः स्वः यम इहा० ॥ ॐ यमाय नमः ॥ ५ ॥ नैर्ऋत्यां खण्डेन्दौ निर्ऋतिम् । ॐ असुन्वेति मन्त्रस्य विव स्वानृषिस्त्रिष्टुप् छन्दः निर्ऋतिर्देवता निर्ऋतिस्थापने विनियोगः ॥ ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्म दिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ ॐ भूर्भुवः स्वः निर्ऋते इहा० ॥ ॐ निर्ऋतये नमः ॥ ७ ॥ पश्चिमे वाप्यां वरुणम् । ॐ तत्त्वाया मीति मन्त्रस्य शुनःशेप ऋषिस्त्रिष्टुप् छन्दो वरुणो देवता वरुणस्थापने विनियोगः । ॐ तत्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहवि र्भिः ॥ अहेडमानोवरुणेहबोद्ध्युरुशश्समानऽआयुःप्रमोषीः ॥ ॐ भूर्भुवः स्वः वरुण इहा० ॥ वरुणाय नमः ॥ ८ ॥ वायव्यां खण्डेन्दौ वा युम् । ॐ आनोनियुद्भिरिति मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दो वायुर्देवता वायुस्थापने विनियोगः । ॐ आनोनियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिःसदानः॥ ॐ भूर्भुवः स्वः वायो इहा०॥ ॐ वायवे नमः ॥९॥ वायुसो मयोर्मध्ये भद्रे अष्ट वसून् । ॐ वसोःपवित्रमसीति मन्त्रस्य गौतम ऋषिर्जगती छन्दः वसवो देवता वसुस्थापने विनियोगः । ॐ वसोःपवित्रमसि शतधारंवसोःपवित्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातुवसोःपवित्रेणशतधारेणसुप्वाकामधुक्षः ॥ भूर्भुवः स्वः वसव इहागच्छत इह तिष्ठ त ॥ वसुभ्यो नमः ॥१॥ सोमेशानयोर्मध्ये भद्रे एकादश रुद्रान् । ॐ नमस्ते रुद्र इति मन्त्रस्य परमेष्ठी ऋषिर्गायत्री छन्दो रुद्रो देवता रुद्रस्थापने विनियोगः । ॐ नमस्तेरुद्रमन्यवऽउतोतइषवेनमः ॥ बाहुभ्यामुततेनमः ॥ ॐ भूर्भुवः स्वः एकादश रुद्रा इहागच्छत इह तिष्ठत ॥ ॐ रुद्रेभ्योनमः ॥ २ ॥ ईशानपूर्वयोर्मध्ये भद्रे द्वादशादित्यान् । ॐ अदितिर्द्यौरिति मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दः आदित्या देवता द्वादशादित्यस्थापने विनियोगः । ॐ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता सपिता सपुत्रः ॥ विश्वेदेवाऽअदितिःपञ्चजनाऽअदितिर्जातमदितिर्जनित्वम् ॥ ॐ भूर्भुवः स्वः द्वादशादित्या इहागच्छत इह तिष्ठत ॥ ॐ द्वादशादित्येभ्यो नमः ॥ ३ ॥ इन्द्राग्न्योर्मध्ये भद्रेऽश्विनौ । ॐ अश्विनातेज

सेति मन्त्रस्य परमेष्ठी ऋषिरनुष्टुप् छन्दोऽश्विनौ देवते अश्विस्थापने विनियोगः । ॐ अश्विनातेजसाचक्षुः प्राणेनसरस्वतीवीर्यम् ॥ वाचेन्द्रोबलेनेन्द्रायदधुरिन्द्रियम् ॥ ॐ भूर्भुवः स्वः अश्विनाविहागच्छतमिह तिष्ठतम् ॥ ॐ अश्विभ्यां नमः ॥ ४ ॥ अग्नियमयोर्मध्ये भद्रे विश्वेदेवान्सपितॄन् । ॐ विश्वेदेवासऽआगत इति मन्त्रस्य परमेष्ठी ऋषिर्गायत्री छन्दो विश्वेदेवा देवता विश्वेदेवस्थापने विनियोगः ॥ ॐ विश्वेदेवासऽआगतशृणुतामऽइमꣳहवम् ॥ इदंबर्हिर्निषीदत ॥ ॐ भूर्भुवः स्वः विश्वेदेवा इहागच्छत इह० ॥ विश्वेभ्यो देवेभ्यो नमः ॥ तत्रैव । ॐ आयन्तु न इति मन्त्रस्य विवस्वानृषिर्बृहती छन्दः पितरो देवता पितृस्थापने विनियोगः ॥ ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताःपथिभिर्देवयानैः ॥ अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥ ॐ भूर्भुवः स्वः पितरः इहा० ॥ ॐ पितृभ्यो नमः ॥ ५ ॥ यमनिर्ऋत्योर्मध्ये भद्रे सप्त यक्षान् । ॐ अभित्यं देवमित्यस्य प्रजापतिर्ऋषिरष्टिश्छन्दः सप्त यक्षा देवताः सप्तयक्षस्थापने विनियोगः ॥ ॐ अभित्यं देवꣳ सवितारमोण्योःकविक्रतुमर्चामिसत्यसवसꣳरत्नधामभिप्रियम्मतिङ्कविम् ॥ ऊर्ध्वायस्यामतिर्भाऽअदिद्युतत्सवीमनिहिरण्यपाणिरमिमीतसुक्रतुः कृपास्वः ॥ प्रजाभ्यस्त्वाप्रजास्त्वानुप्राणन्तुप्रजास्त्वमनुप्राणिहि ॥ ॐ भूर्भुवः स्वः सप्त यक्षा इहागच्छत इह० ॥ ॐ सप्तयक्षेभ्यो नमः ॥ ६ ॥ निर्ऋतिवरुणयोर्मध्ये भद्रे भूतनागान् । ॐ भूतायत्वेति मन्त्रस्य पराशर ऋषिर्विराट् छन्दः नारायणो देवता भूतस्थापने विनियोगः ॥ ॐ भूतायत्वानारातयेस्वरभिविख्येषन्दृꣳहन्तादुर्याःपृथिव्यामुर्वन्तरिक्षमन्वेमिपृथिव्यास्त्वानाभौसादयाम्यदित्याउपस्थेग्नेहव्यꣳरक्ष ॥ ॐ भूर्भुवः स्वः भूतानि इहागच्छत इह तिष्ठत ॥ ॐ भूतेभ्यो नमः ॥ ७ ॥ तत्रैव । ॐ नमोऽस्तु सर्पेभ्य इति मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप छन्दः सर्पो देवता सर्पस्थापने विनियोगः । ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ॥ येऽअन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥ ॐ भूर्भुवः स्वः सर्पा इहागच्छत इह तिष्ठत ॥ ॐ सर्पेभ्यो नमः ॥ ८ ॥

वरुणवाय्वोर्मध्ये भद्रे गन्धर्वाप्सरसः । ॐ गन्धर्वस्त्वेति मन्त्रस्य गौतम ऋषिर्द्विपदा विराट् छन्दः गन्धर्वो देवता गन्धर्वस्थापने विनियोगः । ॐ गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः ॥ इन्द्रस्य बाहुरसि दक्षिणो विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः ॥ मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्मणा विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः ॥ ॐ भूर्भुवः स्वः गन्धर्वा इहागच्छत इह तिष्ठत ॥ ॐ गन्धर्वेभ्यो नमः ॥ ९ ॥ तत्रैव । ॐ अयं पुरो हरिकेश इति मन्त्रस्य परमेष्ठी ऋषिः ककुप् छन्दोऽप्सरसो देवता अप्सरःस्थापने विनियोगः । ॐ अयं पुरो हरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानीग्रामण्यौ पुञ्जिकस्थला च क्रतुस्थला चाप्सरसौ दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेतिस्तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ ॐ भूर्भुवः स्वः अप्सरसः इहागच्छत इह तिष्ठत ॥ ॐ अप्सरोभ्यो नमः ॥ १० ॥ ब्रह्मसोमयोर्मध्ये वाप्यां स्कन्दनन्दीश्वरं शूलं च । ॐ यदक्रन्द इति मन्त्रस्य औतथ्यदीर्घतमास्कन्दऋषयस्त्रिष्टुप् छन्दः स्कन्दो देवता स्कन्दावाहने विनियोगः । ॐ यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात् ॥ श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन् ॥ ॐ भूर्भुवः स्वः स्कन्द इहागच्छ इह तिष्ठ ॥ ॐ स्कन्दाय नमः ॥ १ ॥ तदुत्तरे । ॐ आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ॥ सङ्क्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत्साकमिन्द्रः ॥ ॐ भूर्भुवः स्वः नन्दिन्निहाग० ॥ ॐ नन्दीश्वराय नमः ॥ २ ॥ तत्रैव । ॐ कार्षिरसि समुद्रस्य त्वाक्षित्या उन्नयामि समापो अद्भिरग्मत समोषधीभिरोषधीः ॥ ॐ भूर्भुवः स्वः शूल इहा० ॥ शूलाय नमः ॥ ३ ॥ तदुत्तरे । ॐ कार्षिरसि० रोषधीः ॥ ॐ भूर्भुवः स्वः महाकाल इहा० ॥ ॐ महाकालाय नमः ॥ ४ ॥ ब्रह्मेशानयोर्मध्ये वल्लीषु दक्षादीन्सप्त प्रजापतीन् ॥ ॐ प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव ॥ यत्कामास्ते जुहुमस्तन्नो अस्तु वयमुमुष्य पितासावस्य

पितावुयꣳस्यामुपर्तयोरयुणाम् ॥ ॐ भूर्भुवः स्वः प्रजापते इहा० ॥ ॐ प्रजापतिभ्यो नमः ॥ ५ ॥ ब्रह्मेन्द्रयोर्मध्ये दुर्गाम् । अम्बेऽअम्ब इत्यस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दः दुर्गा देवता दुर्गास्थापने विनियोगः ॥ ॐ अम्बेऽअम्बिकेम्बालिकेनमानयति कश्चन ॥ ससस्त्यश्व कः सुभद्रिकाङ्काम्पीलवासिनीम् ॥ ॐ भूर्भुवः स्वः दुर्गे इहा० ॥ ॐ दुर्गायै नमः ॥ ६ ॥ दुर्गापूर्वे विष्णुम् ॥ ॐ इदंविष्णुरिति मन्त्रस्य मेधातिथिर्ऋषि गायत्री छन्दो विष्णुर्देवता विष्णवावाहने विनियोगः । ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधे पदम् ॥ समूढमस्यपाꣳसुरे स्वाहा ॥ ॐ भूर्भुवः स्वः विष्णो इहा० ॥ ॐ विष्णवे नमः ॥ ७ ॥ ॐ ब्रह्माग्न्योर्मध्ये वल्लीषु स्वधासहितपितॄन् । ॐ उदीरतामवर इति मन्त्रस्य शंखऋषिस्त्रिष्टुप् छन्दः पितरो देवताः स्वधासहितपित्रावाहने विनियोगः । ॐ उदीरतामवरउत्परासउन्मध्यमाः पितरः सोम्यासः ॥ असुं य ईयुरवृकाऋतज्ञास्तेनोव न्तुपितरोहवेषु ॥ ॐ भूर्भुवः स्वः स्वधासहिताः पितर इहागच्छत इह तिष्ठत ॥ पितृभ्यो नमः ॥ ८ ॥ ब्रह्मयमयोर्मध्ये वाप्यां मृत्युरोगान् ॥ ॐ परं मृत्यो इति मन्त्रस्य संकुशिक ऋषिस्त्रिष्टुप् छन्दो मृत्युर्देवता मृत्युरोगावाहने विनियोगः । ॐ परंमृत्योअनुपरेहिपन्थांयस्तेअन्यइत रोदेवयानात् ॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमानः प्रजाꣳरीरिषोमोतवीरान् ॥ ॐ भूर्भुवः स्वः मृत्युरोगा इहा० ॥ ॐ मृत्युरोगेभ्यो नमः ॥ ९ ॥ ब्रह्मनिर्ऋत्योर्मध्ये वल्लीषु गणपतिम् । ॐ गणानां त्वा इति मन्त्रस्य शौनक ऋषिर्जगती छन्दो गणपतिर्देवता गणपत्यावाहने विनियोगः । ॐ गणानांत्वागणपतिꣳहवामहेप्रियाणांत्वाप्रियपतिꣳहवामहेनिधीनांत्वानिधिपतिꣳहवामहे वसो मम ॥ आहमजानिगर्भधमात्वमजासिगर्भ धम् ॥ ॐ भूर्भुवः स्वः गणपते इहा० ॥ ॐ गणपतये नमः ॥ १० ॥ ब्रह्मवरुणयोर्मध्ये वाप्यामपः ॥ ॐ अपो अद्येति मन्त्रस्य हिरण्यस्तूप ऋषि स्त्रिष्टुप् छन्दः आपो देवता अपां स्थापने विनियोगः । ॐ अपोऽअद्यान्वचारिषꣳरसेनसमसृक्ष्महि ॥ पयस्वानग्नऽआगमन्तम्मासꣳसृजवर्चसा प्रजयाचधनेनच ॥ ॐ भूर्भुवः स्व आप इहागच्छत इह तिष्ठ० ॥ ॐ अद्भ्यो नमः ॥ ११ ॥ ब्रह्मवायुमध्ये वल्लीषु मरुतः ॥ बृहदिन्द्रायेति मन्त्रस्य

परमेष्ठी ऋषिर्बृहती छन्दो मरुतो देवता मरुत्स्थापने विनियोगः । ॐ बृहदिन्द्रायगायतमरुतोवृत्रहन्तमम् ॥ येनुज्ज्योतिरजनयन्नृतावृधो देवन्देवायुजागृवि ॥ ॐ भूर्भुवः स्वः मरुत इहा० ॥ ॐ मरुद्भ्यो नमः ॥ १२ ॥ ब्रह्मणः पादमूले कर्णिकाधः पृथिवीम् । ॐ महीद्यौरिति मन्त्रस्य मेधातिथिर्ऋषिर्गायत्री छन्दः पृथिवी देवता पृथिव्यावाहने विनियोगः । ॐ महीद्यौः पृथिवीचनऽइमंयज्ञम्मिमिक्षताम् ॥ पिपृतान्नोभरीमभिः ॥ ॐ भूर्भुवः स्वः पृथिवीहा० ॥ ॐ पृथिव्यै नमः ॥ १३ ॥ तत्रैव गङ्गादिसप्तसरितः ॥ ॐ इमं मे इति मन्त्रस्य सिन्धुक्षित्प्रय्यमेधा ऋषयः जगती छन्दः गङ्गादेवता गङ्गादिनद्यावाहने विनियोगः । ॐ इमंमेगङ्गेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्णिया ॥ असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेश्रृणुह्यासुषोमया ॥ ॐ भूर्भुवः स्वः गङ्गादिसप्तसरित इहागच्छत इह तिष्ठत ॥ ॐ गङ्गादिसरिद्भ्यो नमः ॥ १४ ॥ तत्रैव सप्त सागरान् । ॐ मापोमौषधीत्यस्य वामदेव ऋषिरनुष्टुप् छन्दः वरुणो देवता सप्तसागरावाहने विनियोगः । ॐ मापोमौषधीर्हिंसीर्धाम्नोधाम्नोराजँस्ततोवरुणनोमुञ्च ॥ यदाहुरघ्न्याऽइतिवरुणेतिशपामहेततोवरुणनोमुञ्च ॥ ॐ भूर्भुवः स्वः सप्त सागरा इहा० ॥ ॐ सप्तसागरेभ्यो नमः ॥ १५ ॥ तदुपरि मेरुं नाममन्त्रेणावाहयेत् । मेरुमावाहयामि स्थापयामि । ॐ भूर्भुवः स्वः मेरो इहागच्छ इह० ॥ ॐ मेरवे नमः ॥ १६ ॥ ततो मण्डलाद्बहिः सोमादिसन्निधौ क्रमेण आयुधान्यावाहयेत् । ( उत्तरे ) गदामावाहयामि स्थापयामि । ॐ भूर्भुवः स्वः गदे इहा० ॥ ॐ गदायै नमः ॥१॥ (ऐशान्याम्) त्रिशूलमावाहयामि स्थापयामि ॥ ॐ भूर्भुवः स्वः त्रिशूल इहा०॥ ॐ त्रिशूलाय नमः ॥२॥ ( पूर्वे ) वज्रमावाहया०॥ॐभूर्भुवः स्वः वज्र इहा०॥ॐ वज्राय नमः॥३॥ एवं द्वितीयोद्देशेन सर्वत्रावाहनम् ।(आग्नेय्याम्)शक्तये नमः॥४॥ (दक्षिणस्याम्) दण्डाय नमः॥५॥(नैर्ऋत्याम्)खड्गाय नमः॥६॥(पश्चिमे)पाशाय नमः॥७॥(वायव्याम्) अङ्कुशाय नमः॥८॥ तद्बाह्ये (उत्तरे) गौतमाय नमः ॥१॥ (ऐशान्याम्) भरद्वाजाय०॥२॥(पूर्वे)विश्वामित्राय०॥३॥ (आग्नेय्याम्)कश्यपाय०॥४॥ (दक्षिणे)जमदग्नये०॥५॥ (नैर्ऋत्याम्) वसिष्ठाय०॥६॥ (पश्चिमे) अत्रये नमः ॥ ७ ॥

(वायव्याम्) अरुन्धत्यै नमः॥८॥तद्बाह्ये पूर्वादिदिक्क्रमेण॥(पूर्वे) ऐन्द्र्यै नमः ॥ १ ॥ (आग्नेय्याम्) कौमार्य्यै नमः॥२॥(दक्षिणस्याम्)ब्राह्म्यै नमः ॥३॥
( नैर्ऋत्याम् ) वाराह्यै नमः ॥ ४ ॥ ( पश्चिमायाम् ) चामुण्डायै नमः ॥ ५ ॥ ( वायव्याम् ) वैष्णव्यै नमः ॥ ६ ॥ ( उत्तरस्याम् ) माहेश्वर्य्यै नमः
॥ ७ ॥ ( ऐशान्याम् ) वैनायक्यै नमः ॥ ८ ॥ एवं षट्पञ्चाशद्देवानावाह्य ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ
समिमं दधातु ॥ विश्वेदेवासऽइहमादयन्तामों ३ प्रतिष्ठ ॥ इति प्रतिष्ठाप्य यथालब्धोपचारैः प्रत्येकं वा एकतन्त्रेण ब्रह्मादीन्संपूज्य वेदिमध्य
स्थे पद्मे ताम्रकलशं स्थापयेत् ॥ तत्र प्रयोगः ॥ ॐ भूरसीति भूमिं स्पृष्ट्वा ॥ ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री ॥
पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं माहिꣳसीः ॥ १ ॥ ओषधयः समिति तत्र यवान्वा तन्दुलान्प्रक्षिप्य ॥ ॐ ओषधयः समवदन्त सोमेन स
ह राज्ञा ॥ यस्मै कृणोति ब्राह्मणस्तꣳ राजन्पारयामसि ॥ २ ॥ तत्र ॥ ॥ ॐ आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः ॥ पुनरूर्ज्जा निवर्त्तस्व सा नः
सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्म्माविशताद्रयिः ॥ इति कलशं स्थापयेत् ॥ ३ ॥ ॐ वरुणस्योत्तम्भनमसि० ॥ इत्युदकं निक्षिपेत् ॥ ४ ॥ ॐ
सुजातो ज्योतिषा सह शर्म्म वरूथमासदत्स्वः ॥ वासोऽअग्ने विश्वरूपꣳ संव्ययस्व विभावसो ॥ इति वस्त्रेण वेष्टयेत् ॥ ५ ॥ ॐ याः फलिनीर्य्या
ऽअफलाऽअपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वꣳहसः ॥ इति पूगीफलम् ॥ ६ ॥ ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत ॥
दधद्रत्नानि दाशुषे ॥ इति पञ्च रत्नानि ॥ ७ ॥ ॐ हिरण्यगर्भेति हिरण्यं क्षिपेत् ॥ ८ ॥ ॐ गन्धद्वारामिति गन्धं क्षिपेत् ॥ ९ ॥ ॐ याऽ
ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगम्पुरा ॥ मनै नु बभ्रूणामहꣳ शतं धामानि सप्त च ॥ इति सर्वौषधीः ॥ १० ॥ ॐ स्योना पृथिवि नो भवानृक्षरा नि
वेशनी ॥ यच्छा नः शर्म्म सप्रथाः ॥ इति कलशे सप्त मृदः क्षिपेत् ॥ ११ ॥ ॐ काण्डात्काण्डादिति दूर्वाम् ॥ १२ ॥ ॐ अश्वत्थे वो निषदनं
पर्णे वो वसतिष्कृता ॥ गोभाजऽइत्किलासथ यत्सनवथ पूरुषम् ॥ इति पञ्चपल्लवान्कलशमुखे स्थापयेत् ॥ १३ ॥ ॐ पवित्रेस्थ इति मन्त्रेण

पवित्राणि ॥ १४ ॥ ॐ पूर्णादर्वि परापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाऽइषमूर्ज्जंꣳ शतक्रतो ॥ इति मन्त्रेण तन्दुलपूरितपात्रं कलशोपरि स्थापयेत् ॥ १५ ॥ ॐ श्रीश्च ते लक्ष्मीश्चेति श्रीफलं निधाय ॥ ॐ मनोजूतिरिति प्रतिष्ठाप्य ॥ तत्र ॥ ॐ तत्त्वायामिब्रह्मणावन्दमानस्तदाशा स्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयुःप्रमोषीः ॥ ॐ भूर्भुवः स्वः वरुण इहागच्छ इह तिष्ठ ॥ इत्यावाह्य ॐ वरुणाय नम इति वरुणं षोडशोपचारैः संपूज्य ॥ ॐ कलशस्य मुखे विष्णुरित्यादि संप्रार्थ्य तदुपरि स्वर्णमयीं प्रधानदेवप्रतिमामग्न्यु त्तारणपूर्वकं सन्निधाय पट्टवस्त्राद्यैराच्छाद्य । ॐ सहस्रशीर्षापुरुष इत्यादिमन्त्रैः षोडशोपचारैः संपूज्य प्रार्थयेत् ॥ अथ षोडशोपचारपूजनमन्त्राः ।

१ अग्न्युत्तारणसूक्तं वास्तुपूजायां पूर्वमुक्तम् । २ षोडशोपचारनिर्देशश्चैवं विष्णुपुराणे, आचारमयूखे, कर्मप्रदीपे, संस्कारभास्करे च।आवाहनासने पाद्यमर्घ्यमाचमनीयकम् । स्नानं वस्त्रोपवीतं च गन्धमाल्यान्यनुक्रमात् । धूपो दीपश्च नैवेद्यं ताम्बूलं च प्रदक्षिणा । पुष्पाञ्जलिरिति प्रोक्ता उपचारास्तु षोडशेति । शास्त्रान्तरेष्वपीमे नैकविधा उक्तास्ते तत एवावगन्त व्याः । वस्तुतस्तु " आवाहनासनार्घं पाद्याचमननमधुपर्कस्नानापश्च । वासोयुगलं गन्धः सुमनोयुतधूपदीपभोज्यानि।प्रादक्षिण्यं नतिरिति कथयन्त्युपचारषोडशकम्" इति हेमाद्र्युक्तमेव प्रधा नम् । यद्यपि, अत्र दक्षिणाशब्दो न क्वापि समायातस्तथापि केचनास्मद्बन्धवो बुधा मुधैवात्र पञ्चदशतमे प्रदक्षिणोपचारे "प्र"इति पदं परित्यज्यास्याः षोडशोपचारेष्वन्तर्वर्तित्वं प्रलपन्तः पुष्पाञ्जलितः प्रागेव देवानां पुरतो ( यजमानेन ) दाक्षिणादानव्याजेन किञ्चित् धनं निधापयन्तीति नहि विदितामाविदितम् अतएव पूज्यैर्ग्रन्थकारैः कैलासवासिभिः पंडितश्रीचतुर्थीलालजी शर्मभिरप्यत्र ( षोडशोपचारपूजायाम् ) दाक्षिणा नाऽलेखि।कृतायाः पूजायाः साद्गुण्यार्थं, साङ्गतार्थं च कर्मणोऽवसाने त्वियमवश्यं दातव्यैव, अन्यथा तु"हतं यज्ञमदक्षिणम्" "साङ्गताद क्षिणार्पणात्" इत्यादि वचसां वैयर्थ्यापत्तिः स्यात् । दक्षिणा हि कर्मान्ते तत्क्षणमवश्यं देया, नतु कालविलम्बेन । कालक्षेपेण तत्र ( दक्षिणायाम् )वृद्धिविधानदर्शनात् । अदाने महादोष श्रवणात् । तद्यथा **शब्दकल्पद्रुमे**--"यज्ञो दक्षिणया सार्द्धं पुत्रेण च फलेन च । कार्म्मिणां फलदाता चेत्येवं वेदविदो विदुः । कृत्वा कर्म च तस्यैव तूर्णं दद्याच्च दक्षिणाम् । तत्कर्म फलमाप्नोति वेदैरुक्तमिदं मुने । कर्ता कर्मणि पूर्णे च तत्क्षणं यदि दक्षिणाम् । न दद्याद् ब्राह्मणेभ्यश्च दैवेनाज्ञानतोऽथवा ॥ मुहूर्ते समतीते तु द्विगुणा सा भवेद् ध्रुवम् । एकरात्रे व्यतीते तु

ॐ सहस्रशीर्षापुरुषः सहस्राक्षःसहस्रपात् ॥ ॥ सभूमिꣳसर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् । इत्यावाहनम् ॥ १ ॥ ॐ पुरुषएवेदꣳसर्वंय्यद्भूतं य्यच्चभाव्यम् ॥ उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ इत्यासनम् ॥ २ ॥ ॐ एतावानस्यमहिमातोज्यायाँश्चपूरुषः ॥ पादोस्यविश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ इति पाद्यम् ॥ ३ ॥ ॐ त्रिपादूर्ध्वऽउदैत्पुरुषःपादोस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्रामत्साशनान शनेऽअभि ॥ इत्यर्घ्यम् ॥ ४ ॥ ॐ ततो विराडजायत विराजोऽअधिपूरुषः ॥ सजातोऽअत्यरिच्यत पश्चाद्भूमिमथोपुरः ॥ इत्याचमनम् ॥ ५ ॥ ॐ तस्माद्यज्ञात्सर्वहुतः सम्भृतंपृषदाज्यम् ॥ पशूंस्ताँश्चक्रेवायव्यानारण्यान्ग्राम्याश्चये ॥ इति स्नानम् ॥ ६ ॥ ततः ॐ पयः पृथिव्यामित्यादिमन्त्रैः पञ्चामृतेन संस्नाप्य पुनः पुरुषसूक्तेनाभिषेकं कुर्य्यात् ( शिवस्य नमस्ते रुद्र इत्यादिनाभिषेकः ) ॥ ॐ तस्माद्यज्ञात्सर्वहुतऽऋचःसामानिजज्ञिरे ॥ छन्दाꣳसिजज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ इति कौशेयवस्त्रयुग्मम् ॥ ७ ॥ ॐ तस्मा दश्वाऽअजायन्तयेकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताअजावयः ॥ इति यज्ञोपवीतम् । आचमनम् ॥ ८ ॥ ॐ तंय्य ज्ञंबर्हिषिप्रौक्षन्पुरुषञ्जातमग्रतः ॥ तेन देवाऽअयजन्तसाध्याऽऋषयश्चये ॥ इति गन्धम् ॥ ९ ॥ ॐ यत्पुरुषंव्यदधुः कतिधाव्यकल्प

---

–भवेच्छतगुणा च सा । त्रिरात्रे तद्दशगुणा सप्ताहे द्विगुणा ततः । मासे लक्षगुणा प्रोक्ता ब्राह्मणानाञ्च वर्द्धते । संवत्सरे व्यतीते तु सा त्रिकोटिगुणा भवेत् । कर्म तद् यजमानानां सर्वं च निष्फलं भवेत् । स च ब्रह्मस्वापहारी न कर्म्मार्होऽशुचिर्नरः । दरिद्रो व्याधियुक्तश्च तेन पापेन पातकी । तद्गृहाद्याति लक्ष्मीश्च शापं दत्त्वा सुदारुणम् । पितरो नैव गृह्णन्ति तद्दत्तं श्राद्धत र्पणम् । एवं सुराश्च तत्पूजां तद्दत्तामग्निराहुतिम् । दाता न दीयते दानं ग्रहीता च न याचते । उभौ तौ नरकं यातश्छिन्नरज्जुर्यथा घटः । नार्पयेद् यजमानश्चेद् याचितारं च दक्षिणाम् । भवेद् ब्रह्मस्वापहारी कुम्भीपाकं व्रजेद् ध्रुवम् । वर्षलक्षं वसेत्तत्र यमदूतेन ताडितः । ततो भवेत् स चाण्डालो व्याधियुक्तो दरिद्रकः । पातयेत् पुरुषान् सप्त पूर्वांश्च सप्तजन्मनः । इति ब्रह्मवैवर्ते प्रकृतिखण्डे लिखितत्वात् ।

यन् ॥ मुखङ्किमस्यासीत्किम्बाहूकिमूरूपादाऽउच्येते ॥ इति पुष्पाणि ॥ १० ॥ ॐ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यः कृतः ॥
ऊरू तदस्य यद्वैश्यः पद्भ्याᳪ शूद्रोऽअजायत ॥ इति धूपम् ॥ ११ ॥ ॐ चन्द्रमा मनसो जातश्चक्षोःसूर्य्योऽअजायत ।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥ इति दीपम् ॥ १२ ॥ ॐ नाभ्या आसीदन्तरिक्षᳬशीर्ष्णो द्यौः समवर्तत ॥ पद्भ्याम्भूमिर्दि
शः श्रोत्रात्तथा लोकाँ२अकल्पयन् ॥ इति नैवेद्यम् ॥ १३ ॥ तत आचमनम् ॥ पूगीफलं ताम्बूलं च ॥ ॐ यत्पुरुषेण हविषादेवा
यज्ञमतन्वत ॥ वसन्तोस्यासीदाज्यङ्ग्रीष्मऽइध्मः शरद्धविः ॥ इति नमस्काराः ॥ १४ ॥ ॐ सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः
कृताः ॥ देवा यद्यज्ञन्तन्वानाअबध्नन्पुरुषं पशुम् ॥ इति प्रदक्षिणा ॥ १५ ॥ ॐ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्यासन् ॥
तेहनाकम्महिमानः सचन्त यत्रपूर्वेसाध्याः सन्ति देवाः ॥ इति पुष्पाञ्जलिम् ॥ १६ ॥ इति षोडशोपचारमन्त्राः ॥ ( प्रार्थना )
एह्येहि भगवान्विष्णो लोकानुग्रहकारक ॥ यज्ञभागं गृहाणेमं वासुदेव नमोऽस्तु ते ॥ १ ॥ ॐ विष्णवे नमः । ॐ मधुसूदनाय नमः ।
ॐ त्रिविक्रमाय नमः । ॐ वामनाय नमः । ॐ श्रीधराय नमः । ॐ हृषीकेशाय नमः । ॐ पद्मनाभाय नमः । एतैर्नामभिः पुनरपि
संपूज्य प्रणमेत् । शिवप्रतिष्ठायां तु वक्ष्यमाणलिङ्गतोभद्रमण्डले शिवं षोडशोपचारैः पूजयेदिति सर्वतोभद्रमण्डलपूजनप्रयोगः ॥ अथ
द्वादशलिङ्गतोभद्रमण्डलं सदैवतमाह ॥ उक्तं च रुद्रयामले । रुद्र उवाच । उद्धारं कथयिष्येऽहं मदर्चार्थं तव प्रिये । चतुस्त्रिंशत
३४ समा रेखाः कुर्यात्पूर्वोत्तराः शुभाः ॥ १ ॥ मध्ये वृत्तं समालेख्यं तन्मध्ये च दशाष्टकम् ॥ बहिरष्टदलं पद्मं ततः षोडशपत्रकम्
॥ २ ॥ चतुर्विंशतिपत्राढ्यं द्वात्रिंशत्पत्रकं तथा ॥ चत्वारिंशत्पत्रकं तु वृत्तं सूर्यसमप्रभम् ॥ ३ ॥ खण्डेन्दुस्त्रिपदैः कोणे शृङ्ख
ला दशकोष्ठिका ॥ एकविंशत्पदा वल्ली भद्रं तु षट्पदैस्तथा ॥ ४ ॥ अष्टादशपदं लिङ्गं भद्रं चाष्टपदं तथा ॥ त्रयोदशपदा वापी कुर्या

लिङ्गस्य सन्निधौ ॥ ५ ॥ पूज्योपर्यपि भद्राणि भवन्ति नवभिः पदैः ॥ एवं द्वादशलिङ्गाख्यं वापीषोडशकान्वितम् ॥ ६ ॥
षट्पदाष्टकभद्राख्यं पूज्यं द्वादशकात्मकम् ॥ मध्ये विंशतिभद्रं तु कथितं पूर्वसूरिभिः ॥ ७ ॥ वर्णक्रममथो वक्ष्ये मण्डलस्य च सिद्धये ॥
घृततण्डुलपिष्टेन कृष्णवर्णेन निर्मितम् ॥ ८ ॥ लिङ्गजातं सितेन्दु स्याद्वल्लीबिल्वदलप्रभा ॥ शृङ्खला कृष्णवर्णा च पीतं भद्र
द्वयं भवेत् ॥ ९ ॥ सिता वाप्यस्तथा पूज्यमध्यभद्रे त्वयं क्रमः ॥ पूज्योपर्यरुणे भद्रे सिते द्वे मध्यमं सितम् ॥ १० ॥ सत्त्वं रजस्तमश्चैव
बाह्यतः परिधित्रयम् ॥ एवं सुशोभितं कार्यं मण्डलं शिवपूजने ॥ ११ ॥ अथ देवतास्थापनम् ॥ तत्रादौ सपत्नीको यजमानः मध्यवेद्यां
समागत्य ॥ आचम्य प्राणानायम्य देशकालौ संकीर्त्य ॥ अद्य पुण्यतिथौ मम इह जन्मनि जन्मान्तरे च सुखसौभाग्यसन्तानादिफलप्रा
प्त्यर्थं श्रीमदुमामहेश्वरप्रीतये शिवप्रतिष्ठाङ्गभूतलिङ्गतोभद्रमण्डलदेवताऽऽवाहनप्रतिष्ठापूजनानि करिष्ये इति संकल्प्य ॥ अक्षतान् गृहीत्वा
देवानावाहयेत् । मण्डलबाह्ये । ( ईशानकोणे ) ॐ गुरवे नमः । गुरुमावाहयामि स्थापयामि ॥ १ ॥ एवं सर्वत्र । ( आग्नेय्याम् ) ॥ ॐ
गणपतये नमः ॥ २ ॥ ( नैर्ऋत्याम् ) ॐ दुर्गायै नमः ॥ ३ ॥ ( वायव्याम् )। ॐ क्षेत्रपालाय नमः ॥ ४ ॥ ततो मण्डलमध्ये ॥ ॐ श्रीशि
वाय नमः ॥ १ ॥ ततो भद्रमध्ये अष्टदले ॥ ( पूर्वस्यां दिशि ) ॐ कालाग्निरुद्राय नमः ॥ १ ॥ ॐ कूर्माय नमः । २ । ॐ मण्डूकाय नमः । ३ ।
( आग्नेय्याम् ) । ॐ वाराहाय नमः । ४ । ॐ अनन्ताय नमः । ५ । ( दक्षिणे ) ॐ पृथिव्यै नमः । ६ । ॐ स्कन्दाय नमः । ७ । ॐ अङ्कुशाय नमः
। ८ । ( नैर्ऋत्याम् ) ॐ नलाय नमः । ९ । ॐ पद्माय नमः । १० । ( पश्चिमे ) ॐ पत्रेभ्यो नमः । ११ । ॐ केशरेभ्यो नमः । १२ । ॐ कर्णिकायै
नमः । १३ । ( वायव्याम् ) ॐ सिंहासनाय नमः । १४ । ॐ पद्मासनाय नमः । १५ । ( उत्तरे ) ॐ धर्माय नमः । १६ । ॐ ज्ञानाय नमः । १७ ।
ॐ वैराग्याय नमः । १८ । ( ऐशान्याम् ) ॐ ऐश्वर्याय नमः । १९ । ॐ चिदाकाशाय नमः । २० । पद्ममध्ये ) ॐ योगपीठात्मने नमः । २१ ।

ततः कर्णिकोपरि ( पूर्वे ) ॐ पृथिव्यै नमः । १ । ( दक्षिणे ) ॐ कपालाय नमः । २ । ( पश्चिमे ) । ॐ सप्तसरिद्भ्यो नमः । ३ । ( उत्तरे ) ॐ वामदेवाय नमः । ४ । अथ तत्समीपे कृष्णानि अष्टौ भद्राणि तद्देवतास्थापनम् ॥ ईशानादिक्रमेण ( ऐशान्याम् ) ॐ भगवत्यै नमः । १ । ( पूर्वे ) ॐ उमायै नमः । २ । ( आग्नेय्याम् ) ॐ शङ्करप्रियायै० । ३ । ( दक्षिणे ) ॐ पार्वत्यै० । ४ । ( नैर्ऋत्ये ) ॐ गौर्यै नमः । ५ । ( पश्चिमे ) ॐ काम्यैनमः । ६ । ( वायव्याम् ) ॐ कौर्म्यै० । ७ । ( उत्तरे ) ॐ विश्वम्भर्यै नमः ॥ ८ ॥ ततः कृष्णभद्राणामधः अष्टौ रक्तभद्राणि तद्देवतास्थापनमीशान्यादिक्रमेण ॥ ( ऐशान्याम् ) ॐ नन्दिन्यै नमः ॥ १ ॥ ( पूर्वे ) ॐ महाकालाय नमः ॥ २ ॥ ( आग्नेय्याम् ) ॐ वृषभाय० ॥ ३ ॥ ( दक्षिणे ) ॐ भृङ्गरीटिने नमः ॥ ४ ॥ ( नैर्ऋत्याम् ) ॐ स्कन्दाय नमः । ५ । ( पश्चिमे ) ॐ उमापतये० । ६ । ( वायव्याम् ) ॐ चण्डेश्वराय० । ७ । ( उत्तरे ) ॐ सोमसूत्राय नमः ॥ ८ ॥ अथ लिङ्गोपरि चत्वारि श्वेतभद्राणि तद्देवतास्थापनम् । ( पूर्वे ) ॐ धात्रे नमः । १ । ( दक्षिणे ) ॐ मित्राय नमः । २ । ( पश्चिमे ) ॐ यमाय नमः । ३ । ( उत्तरे ) ॐ रुद्राय नमः । ४ । ततः तत्समीपलिङ्गोपर्यष्टौ पीतभद्राणि तद्देवतास्थापनम् ॥ ( ऐशान्याम् ) ॐ वरुणाय० । १ । ( पूर्वे ) ॐ सूर्याय नमः । २ । ( आग्नेय्याम् ) ॐ भगाय नमः । ३ । ( दक्षिणे ) ॐ विवस्वते नमः । ४ । ( नैर्ऋते ) ॐ पुरुषोत्तमाय० । ५ । ( पश्चिमे ) ॐ सवित्रे नमः । ६ । ( वायव्ये ) ॐ त्वष्ट्रे नमः । ७ । ( उत्तरे ) ॐ विष्णवे० ॥ ८ ॥ ततः द्वादशलिङ्गदेवतास्थापनं पूर्वादिक्रमेण । ( पूर्वे ) ॐ शिवाय नमः । १ । ॐ एकनेत्राय नमः । २ । ॐ एकरुद्राय० । ३ । ( दक्षिणे ) ॐ त्रिमूर्त्तये नमः । १ । ॐ श्रीकण्ठाय नमः । २ । ॐ वामदेवाय० । ३ । ( पश्चिमे ) ॐ ज्येष्ठाय नमः । १ । ॐ श्रेष्ठाय नमः । २ । ॐ रुद्राय नमः । ३ । ( उत्तरे ) ॐ कालाय नमः । १ । ॐ कलविकरणाय० । २ । ॐ बलविकरणाय नमः । ३ । अथ श्वेतषोडशवापीदेवतास्थापनमीशान्यादिक्रमेण । ॐ अणिमायै नमः । १ । ॐ महिमायै० । २ । ॐ लघिमायै नमः । ३ । ॐ गरिमायै० । ४ । ॐ प्राप्त्यै नमः

।५। ॐ प्राकाम्यै० । ६ । ॐ ईशितायै० ।७। ॐ वशितायै० ।८। ॐ ब्राह्म्यै नमः ।९। ॐ माहेश्वर्यै नमः । १० । ॐ कौमार्यै० ॥ ११ ॥ ॐ वैष्णव्यै० ॥ १२ ॥ ॐ वाराह्यै० । १३ । ॐ इन्द्राण्यै नमः ॥ १४ ॥ ॐ चामुण्डायै० । १५ । ॐ चण्डिकायै नमः ॥ १६ ॥ ततः वापीसमीपेऽष्टौ रक्तभद्राणि तद्देवतास्थापनमीशानादिक्रमेण । ॐ असिताङ्गभैरवाय नमः । १ । ॐ रुरुभैरवाय० । २ । ॐ चण्डभैरवाय०।३। ॐ क्रोधभैरवाय० । ४ । ॐ उन्मत्तभैरवाय०॥५॥ ॐ कालभैरवाय०॥६॥ ॐ भीषणभैरवाय०॥७॥ ॐ संहारभैरवाय०॥ ८ ॥ अष्टवल्लीदेवतास्थापनम् ( ईशानादिक्रमेण ) ॐ घृताच्यै नमः । १ । ॐ मेनकायै० ।२। ॐ रम्भायै नमः । ३ । ॐ उर्वश्यै नमः ।४। ॐ तिलोत्तमायै०॥५॥ ॐ सुकेशायै०॥६॥ ॐ मञ्जुघोषायै०॥७॥ ॐ अप्सरसे० ॥ ८ ॥ ततो मण्डलमध्ये परिधिसमीपे शृंखलादेवतास्थापनम् ॥ आग्नेय्यादिक्रमेण ॥ ( आग्नेय्याम् ) ॐ भवाय नमः ॥ १ ॥ ॐ शिवाय० ॥ २ ॥ ॐ रुद्राय० ॥ ३ ॥ ॐ पशुपतये० ॥ ४ ॥ ॐ उग्राय० ॥ ५ ॥ ॐ महादेवाय० ॥ ६ ॥ ॐ भीमाय नमः ॥ ७ ॥ ॐ ईशानाय० ॥ ८ ॥ ॐ अनन्ताय० ॥ ९ ॥ ॐ वासुकये नमः ॥ १० ॥ ततो नैर्ऋत्यां परिधिसमीपे शृङ्खलादेवताः ॥ ॐ तक्षकाय नमः ॥ १ ॥ ॐ कुलीरकाय० ॥ २ ॥ ॐ कर्कोटकाय० ॥ ३ ॥ ॐ शंखपालाय नमः ॥ ४ ॥ ॐ कम्बलाय० ॥ ५ ॥ ॐ अश्वतराय ॥ ६ ॥ ॐ वैन्याय०॥७॥ ॐ अङ्गाय० ॥ ८ ॥ ॐ हैहयाय० ॥ ९ ॥ ॐ अर्जुनाय नमः ॥ १० ॥ ततो वायव्ये दशशृङ्खलादेवताः ॥ ॐ शाकुन्तलाय० ॥ १ ॥ ॐ भरताय० ॥ २ ॥ ॐ नलाय० ॥ ३ ॥ ॐ रामाय नमः ॥ ४ ॥ ॐ सार्वभौमाय नमः ॥ ५ ॥ ॐ निषधाय नमः ॥ ६ ॥ ॐ विन्ध्याचलाय नमः ॥ ७ ॥ ॐ माल्यवते नमः ॥ ८ ॥ ॐ पारियात्राय नमः ॥ ९ ॥ ॐ सह्याय नमः ॥ १० ॥ तत ऐशान्ये परिधिसमीपे दशशृङ्खलादेवताः ॥ ॐ हेमकूटाय नमः ॥ १ ॥ ॐ गन्धमादनाय नमः ॥ २ ॥ ॐ कुलाचलाय नमः ॥ ३ ॥ ॐ हिमवते नमः ॥ ४ ॥ ॐ रैवताय नमः ॥ ५ ॥ ॐ देवगिरये नमः ॥ ६ ॥ ॐ मलयाचलाय नमः ॥७॥ ॐ कनकाचलाय नमः ॥८॥ ॐ पृथिव्यै नमः ॥९॥ ॐ अनन्ताय नमः

॥१०॥ इति शृङ्खलादेवताः॥अथ चतुर्दिक्षु खण्डेन्दुदेवतास्थापनमीशानादिक्रमेण ॥ ( ऐशान्याम् ) ॐ अश्विनीकुमाराभ्यां नमः ॥१॥ ( आग्नेय्याम् ) ॐ विश्वेभ्यो देवेभ्यो नमः ॥२॥ (नैर्ऋत्ये) ॐ पितृभ्यो नमः ॥३॥ (वायव्याम्) ॐ नागेभ्यो नमः ॥४॥ ततो मण्डलाद्बहिः प्रथमं सत्त्वपरिधौ पूर्वादि क्रमेण देवताः ॥ (पूर्वे) ॐ इन्द्राय नमः ॥१॥ ॐ अग्नये नमः ॥२॥ ॐ यमाय नमः ॥३॥ ॐ निर्ऋतये नमः ॥४॥ ॐ वरुणाय नमः ॥५॥ ॐ वायवे नमः ॥ ६ ॥ ॐ कुबेराय नमः ॥ ७ ॥ ॐ ईश्वराय नमः ॥ ८ ॥ ॐ ब्रह्मणे नमः ॥ ९ ॥ ॐ अनन्ताय नमः ॥ १० ॥ तद्बहिः ॥ रजः परिधौ पूर्वादिक्रमेण० ॥ ( पूर्वे ) ॐ वज्राय नमः ॥ १ ॥ ॐ शक्तये नमः ॥ २ ॥ ॐ दण्डाय नमः॥ ३ ॥ ॐ खड्गाय नमः ॥ ४ ॥ ॐ पाशाय नमः ॥ ५ ॥ ॐ अङ्कुशाय नमः ॥ ६ ॥ ॐ गदायै नमः ॥ ७ ॥ ॐ त्रिशूलाय नमः ॥ ८ ॥ तद्बहिः तमोमये कृष्णपरिधौ पूर्वादिक्रमेण ॥ पूर्वे ॥ ॐ कश्यपाय नमः ॥ १ ॥ ॐ अत्रये नमः ॥ २ ॥ ॐ भरद्वाजाय नमः ॥ ३ ॥ ॐ विश्वामित्राय नमः ॥ ४ ॥ ॐ गौतमाय नमः ॥ ५ ॥ ॐ जमदग्नये नमः ॥ ६ ॥ ॐ वसिष्ठाय नमः ॥ ७ ॥ ॐ अरुन्धत्यै नमः ॥ ८ ॥ ततः ( पूर्वे ) ॐ ऋग्वेदाय नमः ॥ १ ॥ ( दक्षिणे ) ॐ यजुर्वेदाय नमः ॥ २ ॥ ( पश्चिमे ) ॐ सामवेदाय नमः ॥ ३ ॥ ( उत्तरे ) ॐ अथर्ववेदाय नमः ॥ ४ ॥ एवं १०८ देवताः संस्थाप्य षोडशो पचारैः संपूज्य वेदिमध्ये पद्मे ताम्रकलशं संस्थाप्य तदुपरि रुद्रमूर्तिं स्वर्णमयीमग्न्युत्तारणपूर्वकं सन्निधाय षोडशोपचारैः पूजयेत् ॥ इति श्रीलिङ्गतोभद्रपूजनपद्धतिः समाप्ता ॥ इति श्रीरत्नदुर्गनगरनिवासिना श्रीवसिष्ठकुलोद्भवेन श्रीरामकृष्णपौत्रेण श्रीकस्तूरीचन्द्रसूनुना श्री महादेवभक्तेन वाजसनेयिना नानानिबन्धकारेण गौडेन पण्डितश्रीचतुर्थीलालशर्मणा विरचिते सर्वदेवप्रतिष्ठाप्रकाशे ग्रहपूजनसर्वतोभद्रालि ङ्गतोभद्रपूजनादिकथनं नाम चतुर्थः परिच्छेदः ॥ ४ ॥ ॥ ततो गुरुराचम्य द्वारपालाञ्जापकांश्च गन्धादिभिः संपूज्य पठध्वमिति प्रेषयेत् यजध्वमिति होतॄनुत्कृष्टमन्त्रजाप्येन तिष्ठध्वमिति जापकान्स एव प्रेषयेत् ॥ तत आचार्य ऋत्विजश्च स्वेस्वे कुण्डे स्वगृह्योक्तमार्गेणाऽग्निप्रणय

नानन्तरं भावि कर्म्म कुर्युः । तत्र प्रतिकुण्डमिध्माधानानन्तरमाचार्यकुण्डप्रभृतिकुण्डदक्षिणतो यजमान उपाविश्य सकुशयवजलान्यादाय ॥ अद्येत्यादिदेशकालौ संकीर्त्य० अमुकशर्माहममुकदेवप्रतिष्ठायज्ञकर्मणि इदं सम्पादितं समिच्चरुतिलाज्यादि हविर्द्रव्यं सूर्यादिग्रहेभ्य ईश्वराद्यधिदेवताभ्योऽग्न्यादिप्रत्यधिदेवताभ्यो विनायकादिपञ्चलोकपालेभ्य इन्द्रादिदिक्पालेभ्यो ब्रह्मशिवविष्णुगणपत्यम्बिकाभूतग्रामविश्वकर्मवरुणाग्निवायुसूर्यप्रजापतिस्विष्टकृदादिपूर्वोत्तराङ्गदेवेभ्यः सर्वेभ्यो न मम । इति प्रतिकुण्डं द्रव्यत्यागं कुर्यात् । ( ततो जापकैर्द्वारपालैश्च जपे

१ होमादौ द्रव्यत्यागो यजमानेनावश्यं कार्यः "आदौ द्रव्यपरित्यागः पश्चाद्धोमो विधीयते" इति **देवयाज्ञिक**वचनात् यथाकालं प्रत्याहुतित्यागस्य कर्तुमशक्यत्वात्सर्वा देवता मनसा ध्यात्वा इदं सम्पादितं ( यथाशक्त्युपपादितम् ) समिच्चरुतिलाज्यादि हविर्द्रव्यं या या यक्ष्यमाणदेवता तस्यै तस्यै देवतायै मया त्यक्तं तदेतद् यथादैवतमस्तु, न मम, इत्येवंरूपं त्यागवाक्यमुच्चारयेद्यजमान इति **संस्कारभास्करे** लिखितत्वाच्च ॥ द्रव्यत्यागानन्तरमन्वादध्यादिति मूलेऽनुक्तमप्यन्वाधानविधिं लिखामि शिष्टाचारात् । **अथान्वाधानम्**—यद्यपि यजुर्वेदीयानां **गोभिल-हरिहर-गदाधरादिभिर्नोक्तत्वात् स्मार्ते कर्म्मणि** नान्वाधानं तथापि **प्रयोगरत्न-स्मार्तोल्लास--स्मार्तगङ्गाधर्यादिग्रन्थेषु** अन्वाधानोक्तेः, प्रचुरतरशिष्टाचारप्राप्तत्वाच्चात्र तदुच्यते । यजमान आचार्यो वा स्थण्डिलात् पश्चिमतोऽग्निसमीपमुपविश्याचम्य प्राणानायम्य देशकालौ संकीर्त्यामुकगोत्रोऽमुकनामाहं मया क्रियमाणेऽस्मिन् सग्रहमखे अमुकदेवप्रतिष्ठाङ्गीभूतवास्तुशान्त्याख्ये कर्मणि देवतापरिग्रहार्थमन्वाधानं करिष्ये ॥ अस्मिन्नन्वाहितेऽग्नौ पूर्वेण ब्रह्मणो गमनमुत्तरतः पात्रासादनम्, द्वे पवित्रे, कांस्यमयी आज्यस्थाली, तथैव चरुस्थाली, पालाश्यः समिधः, प्राच्यामाघारौ, समिद्धतमे आज्यभागौ, पूर्णपात्रम्, दक्षिणा वा एतान् वैकल्पिकान् पदार्थान् अहं करिष्ये ॥ अथ देवताभिध्यानम्—तत्र प्रजापतिमिन्द्रमग्निं सोममेता आज्येन प्रत्येकमेकैकयाहुत्या । सूर्यादिनवग्रहान् यथालाभमर्कादिसमिच्चरुतिलाज्यद्रव्यैः प्रत्येकं प्रतिद्रव्येण अष्टाष्टसंख्याकाभिराहुतिभिः । अधिदेवताः प्रत्यधिदेवताश्च तैरेव ( ग्रहोक्तैरेव ) द्रव्यैः प्रत्येकं प्रतिद्रव्येण चतुश्चतुःसंख्याकाभिराहुतिभिः । विनायकादिपञ्चदेवताः, क्षेत्रपालं, वास्तोष्पतिमिन्द्रादिदशलोकपालांश्च तैरेव द्रव्यैः प्रतिदैवतं द्वाभ्यां द्वाभ्यामाहुतिभ्यां यक्ष्ये । वास्तुमण्डलमध्यवर्तिनीः शिख्यादिदिक्पालपर्यन्ता देवतास्तत्तन्नाममन्त्रैर्वेदमन्त्रैर्वा प्रत्येकम् औदुम्बरसमिच्चरुतिलाज्यद्रव्यैः प्रतिद्रव्येण अष्टाष्टसंख्याकाभिर्यथाशक्ति न्यूनाधिकाभिर्वाहुतिभिः वास्तोष्पतिम् । औदुम्बरादिद्रव्यैर्विशेषेण घृतमधुमिश्रितपायसेनाष्टोत्तरशतसंख्याकाभिराहुतिभिः । अग्निमग्निं वास्तोष्पतिं चतुर्वारमाज्येनैकैकयाहुत्या, प्रजापतिमिन्द्रमग्नि-

क्रियमाणे होमः कार्यः ) होमस्तु यथा । [ अग्नेर्दक्षिणतः परिस्तरणभूमिं त्यक्त्वा वारणादियज्ञियदारुनिर्मितं ब्रह्मणे आसनं दत्त्वा तदुपरि

—सोममाज्येनैकैकयाहुत्या । अग्निमिन्द्रं बृहस्पतिं विश्वान् देवान् सरस्वतीं वाजीं सर्पदेवजनान् हिमवन्तं सुदर्शनं वसून् रुद्रान् आदित्यान् ईशानं जगदान् पूर्वाह्णमपराह्ण मध्यन्दिन प्रदोषमर्ध रात्रं व्युष्टां देवीं महापथां कर्तारं विकर्तारं विश्वकर्माणमोषधीः धातारं विधातारं निधीनां पतिं ब्रह्माणं प्रजापतिं सर्वान् देवान् उद्दिश्य चरुणा षडाहुत्या होष्ये । वास्तोष्पतिं नाममन्त्रेण "वास्तोष्पति" इत्यादिचतसृभिः, "वास्तोष्पते ध्रुवा स्थूणा" इत्येकया ऋचा च प्रतिमन्त्रमेकैकघृताक्तबिल्वफलयुक्तया एकैकाहुत्या । वास्तोर्मर्मसन्धानायाघोर ( रुद्र ) मन्त्रेण चाष्टोत्तरशत संख्याकाभिराहुतिभिराज्येन यक्ष्ये । ततः पुनः शिख्यादीन् नाममन्त्रेण यथाशक्त्याहुत्याज्येन, चतुष्षष्टियोगिनीः, एकोनपंचाशत्क्षेत्रपालान्, गौर्यादिषोडशमातॄः अष्टवसून् द्वादशादित्यान् एकादश रुद्रान् सप्तमरुद्गणान् मोदादिषड्विनायकान् पितामहादींश्च तथा विष्णुप्रतिष्ठायां सर्वतोभद्रमण्डलस्थान् देवान्, शिवप्रतिष्ठायां लिङ्गतोभद्रमण्डलस्थदेवान्, लक्ष्मीप्राप्त्यर्थं श्रीसूक्तादिना लक्ष्मीं प्रधानदेवांश्च यथाशक्ति अष्टाभिरष्टाविंशतिसंख्याकाभिर्वा आज्येन यक्ष्ये । तत्र प्रधानं देवं यथोक्तचरुणाष्टोत्तरशताहुतिभिर्यक्ष्ये ॥ ( विष्णोर्मासूरश्चरुः । कृसरा वा । शिवस्य यवमयश्चरुर्गोक्षीरे विपक्वो नीवारधान्यचरुर्वा इत्यादि प्रतिदेवं भिन्नं, तत्तद्विशेषा ग्रन्थान्तरेषु ) ततो न्यूनातिरिक्तदोषनिवृत्त्यर्थं घृताक्ततिलैः समस्तव्याहृतिभिरष्टाविंशतिसंख्याकाभिराहुतिभिर्यज्ञं देवं यक्ष्ये ॥ शेषेण स्विष्टकृतम् । अग्निं वायुं सूर्यमग्नीवरुणौ अग्नी वरुणौ अग्निं वरुणं सवितारं विष्णुं विश्वान् देवान् मरुतः स्वर्कान् वरुणमादित्यमदितिं प्रजापतिम् ,एताः अङ्गप्रधानार्था देवता आज्येनास्मिन् देवप्रतिष्ठाकर्मणि यक्ष्ये ॥ इत्यन्वाधानविधानम् ॥

१ ( **अथ वर्तमानाग्निमृत्पात्रविषयको विचारः** ) अथ होमः सोऽयमग्नौ भवति, अतः पूर्वं तद्विषय एव प्रस्तूयते कश्चित् साम्प्रतिको मे हृद्गतो विचारः, यदस्ति सामान्यतो नित्योऽग्निरस्मद्गृहमेधिनां गृहस्थः, स हि **श्रौत-स्मार्त-लौकिकेति** नामभेदेन त्रेधा विभिन्नः, तत्राद्यस्तु, साम्प्रतं नो हतभाग्यभारतीयानां पापप्राचुर्य्याच्चिरं प्रनष्ट एव । व्यतीते हि पुनस्त्रिपूरुषे श्रौताग्निहीने जने, भवति जनो श्रोत्रियत्वेन हीनः । तस्य च न पुनर्भवति वैदिके कर्मणि कथमपि प्रवेशलेशः,ततो जाता वयमधुना वेदविहीना इति किममहत् कष्टम् ? द्वितीयः स्मार्तोऽप्यधुना निराश्रयत्वेन निराशां गतो दुर्दशां दुर्दशामुपभुञ्जानो मुमूर्षुरिव यमयातनामुपास्ते । न लभ्यत इदानीं भारतीयद्विजगणनानुसारं प्रतिलक्षमेकोऽप्याहिताग्निरित्यनुमन्ये । तृतीयो लौकिकश्चाप्यस्माकं दौर्भाग्यात् साम्प्रतं विनष्ट इव प्रदुष्ट आभास्यते,स एवायं लौकिकोऽग्निर्भगवान्,यो नो दैनन्दिनान्नपाकार्थमाश्रयते महानसम् । नायमरणिजो न च कमलिनीकान्तकान्तजो,—

प्रागग्रान्कुशानास्तीर्य । अस्मिन्नमुकदेवप्रतिष्ठाकर्मणि त्वं मे ब्रह्मा भवेत्यभिधाय तत्र वरणाभरणाभ्यां पूर्वसंपादितं कर्मसु कुशलं ब्राह्मणं ( तदभावे पञ्चाशत्कुशानिर्मितं ) ब्रह्माणमग्निप्रदक्षिणक्रमेणाऽऽनीय कल्पितासने उपवेशयेत् । ततोऽग्नेरुत्तरतः प्रागग्रकुशैरासनद्वयं कल्पयित्वा वारणं द्वादशाङ्गुलदीर्घं चतुरङ्गुलविस्तारं चतुरङ्गुलखातं चमसं पुरतः कृत्वा दक्षिणहस्तोद्धृतपात्रस्थोदकेन पूरयित्वा कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्याऽग्नेरुत्तरतः पश्चिमासने निधायाऽऽलभ्य पूर्वासने परिस्तरणं कुर्यात् । बर्हिषश्चतुर्थं भागमादाय चतुर्भिश्चतुर्भिर्दर्भैरुत्तराग्रैराग्नेयादीशानान्तं प्राच्याम् ॥ प्रागग्रैर्नैर्ऋत्यादाग्नेयान्तं दक्षिणस्याम् ॥ उत्तराग्रैर्नैर्ऋत्याद्वायव्यान्तं प्रतीच्याम् ॥ पुनः पूर्वाग्रैर्वायव्यादीशानान्तं चोदीच्यां परिस्तरेत् ॥ एवं परिस्तरणं कृत्वा ॥ ततोऽग्नेरुत्तरतः पश्चिमदिशि

---

–नापि पुनः केनचित् सुपथोत्पाद्यमानः । उत्पाद्यते चायमधुना " **मेचस** " इति नाम्न्या लोकप्रसिद्धया महानिषिद्धया तूलिकया, यत्र "**फास्फोरस**" नामास्थिसत्त्वं सदा सन्तिष्ठते तच्छीर्षसंलग्नमिति, हा, हा, महाकष्टम् ! ! ! एतादृशापवित्रपदार्थोत्पन्नो हि पावकः किं न साधयेन्नः समीहितमिति विभावयन्तु भवन्त एव भावुकाः । धिग् धिगस्मान् पावकोऽयं क्रव्यादो वेति नामोल्लेखेऽपि संशयानान्नोऽतितरां विलज्जमानान् ॥ अपि चैवं कृत्रिमोऽग्निरयं ( क्रव्यादरूपः ) मरुदेशे ( मारवाडप्रान्ते ) अस्माभिर्मृत्तिकाशरावेणानीयतेऽग्न्यायतनमित्यपरोऽपि महाननर्थः । सन्ति चात्र बहूनि शास्त्रेषु पात्रस्यास्य निषेधकानि वचनानि, तत्रैकं **कर्मप्रदीपोक्तं** वचनमिहाप्युपन्यस्यते प्रमाणार्थम् । यद्धि दरीदृश्यते **संस्कारभास्कर–कुशकण्डीभाष्यादिषु**, सुप्रसिद्धतमपुस्तकेषु सर्वत्र । तद्यथा–" आसुरेण तु पात्रेण यस्तु दद्यात्तिलोदकम् । पितरस्तस्य नाश्नन्ति दश वर्षाणि पञ्च च । कुलालचक्रनिष्पन्नमासुरं मृन्मयं भवेत् ॥ " **गोभिलगृह्यभाष्ये**–" कपालं मृन्मयं पात्रं चक्राघटितमुच्यते । आसुरं तद्भवेत् पात्रं दैवे पित्र्ये विवर्जयेत् ॥ " इति । अस्माकं प्रदेशे ( मारवाडप्रान्ते ) तु, एभिरेव सराई-ढिवसियेतिपदवाच्यैः ( शास्त्रतस्त्वासुरसंज्ञकैः ) मृत्तिकापात्रैः सर्वं कार्यजातं ( दैविकं पैतृकं च ) सम्पाद्यतेऽस्माभिरिति महती भ्रान्तिः, तन्निवृत्त्यर्थमभ्यर्थयेऽत्रभवतो विद्वद्वरान् । तत्स्थाने च पलाशपत्रपुटकान्युपयोज्यानीति सप्रश्रयं प्रार्थये, **प्रार्थी श्रीव्रजवल्लभशर्मा वैद्यो विसाऊवास्तव्यः ॥**

पवित्रच्छेदनार्थं कुशत्रयं पवित्रकरणार्थं पवित्रे साग्रे अनन्तर्गर्भे द्वे कुशतरुणे । प्रोक्षणीपात्रं वारणं द्वादशाङ्गुलदीर्घम् ॥ करतल
संमितखातं पद्मपत्राकृति कमलमुकुलाकृतिं वा आज्यस्थाली तैजसी मृन्मयी वा द्वादशाङ्गुलविशाला प्रादेशोच्चा तथैव चरुस्थाली
संमार्गकुशास्त्रयः । उपयमनकुशास्त्रिप्रभृतयः । समिधस्तिस्रः पालाश्यः प्रादेशमात्र्यः । स्रुवः खादिरो हस्तमात्रः । अङ्गुष्ठपर्वमात्रखातपरि
णाहवर्तुलपुष्करः । आज्यं गव्यम् । व्रीहितण्डुलाः । षट्पञ्चाशदधिकमुष्टिशतद्वयपरिमितं तण्डुलाद्यन्नपूर्णपात्रम् । यथाशक्ति हिरण्यादि द्रव्यम् ।
पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयम् । ततस्त्रिभिः कुशैरग्रतः प्रादेशमात्रं विहाय द्वे कुशतरुणे प्रच्छिद्य पवित्रहस्तेन प्रणी
तोदकं त्रिः प्रोक्षणीपात्रे निक्षिप्य ॥ अनामिकाङ्गुष्ठाभ्यामुत्तराग्रे पवित्रे गृहीत्वा त्रिरुत्पवनम् ॥ प्रोक्षणीपात्रस्य सव्यहस्ते करणम् ॥ अना
मिकाङ्गुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुद्दिङ्गनम् ॥ ततः प्रणीतोदकेन प्रोक्षणीप्रोक्षणं प्रोक्षणीजलेनाज्यस्थाल्यादीनि पूर्णपात्रपर्यन्तानि क्रमेणैकै
कशः प्रोक्ष्य ॥ असञ्चरे प्रणीताग्न्योरन्तराले प्रोक्षणीपात्रं निधायासादितमाज्यस्थाल्यां पश्चादग्नेर्निहितायां प्रक्षिप्य ॥ चरुस्थाल्यां प्रणीतो
दकमासिच्यासादितांस्तण्डुलान्प्राक्षिप्य ॥ तत्राज्यं ब्रह्माऽधिश्रयति ॥ तदुत्तरतः स्वयं चरुमेवंगुणयुगपदग्नावारोप्येषच्छृते चरौ ज्वलदुल्मु
कं प्रदक्षिणमाज्यचर्वोः समन्ताद्भ्रामयेत् ॥ ततो दक्षिणपाणिना स्रुवमादाय प्राञ्चमधोमुखमग्नौ तापयित्वा सव्ये पाणौ कृत्वा दक्षिणेन सम्मार्गा
ग्रैर्मूलतोग्रपर्यन्तं मूलैरग्रमारभ्य अधस्तान्मूलपर्यंतं संमृज्य प्रणीतोदकेनाभिषिच्य पुनः पूर्ववत्प्रतप्य दक्षिणतो निदध्यात् ॥ तत आज्यमुत्थाप्य
चरोः पूर्वेण नीत्वाऽग्नेरुत्तरतः स्थापयित्वा चरुमुत्थाप्याज्यस्य पश्चिमतो नीत्वाऽऽज्यस्योत्तरतः स्थापयित्वाज्यमग्नेः पश्चादानीय आज्यस्योत्तरतो
निधाय पूर्ववत्पवित्राभ्यामाज्यमुत्पूयावलोक्य तस्मादपद्रव्यनिरसनं पुनः प्रोक्षण्युत्पवनम् ॥ तत उपयमनान्दक्षिणपाणिना वामहस्ते कृत्वो
त्तिष्ठन्प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः समिधस्तिस्रः प्रक्षिपेत् ॥ तत उपविश्य प्रोक्षण्युदकेन सपवित्रेण दक्षिणचुलकगृहीतेन

अग्निमीशानादि उदगपवर्गं परिषिच्य ससक्थिनीकं दक्षिणं जान्वाच्य कुशाग्रेण ब्रह्मणान्वारब्धः यजमानेनान्वारब्धश्च समिद्धतमेऽग्नौ स्रुवणाज्याहुती र्जुहुयात् । तत्राघारादारभ्य तत्तदाहुत्यनन्तरं स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः । एष परिसमूहनादिपर्युक्षणपर्यन्तो विधिः क्वचिद्यत्र क्वचन लौकिके स्मार्त्ते वाग्नौ होमस्तत्र वेदितव्यः ॥ एवं प्रागादिकुण्डेषु ऋत्विजः स्वस्वकुण्डे स्वगृह्योक्तविधिना अग्निप्रोक्षणपर्य्यन्तं कर्म कुर्य्युः ॥ इति हरिहरभाष्ये प्रथमकण्डिका ॥ ]( पूर्वस्यामुच्चावचं न्यूनाधिकलेखेऽपि "मूलपाठः कदाचिदपि नो परिवर्तनीयः" इति प्रकाशकमहोदयाना माज्ञानुसारं तत्पाठं तथैव परिरक्ष्यात्र पुनर्लिख्यते कण्डिकाऽविकलमिति न पौनरुक्त्यं परिचिन्तनीयं पण्डितैः ) "दक्षिणतो ब्रह्मासनमास्तीर्य"

---

१ अत्र **गदाधरभाष्यम्**–"स्थापितस्याग्नेर्दक्षिणस्यां दिशि ब्रह्मण उपवेशनार्थं दर्भान्निधाय ब्रह्मोपवेशनं कुर्यात् । ननु " दक्षिणतो ब्रह्मयजमानयोरासने " इति परिभाषातो दक्षिणत आसनं प्राप्तं,किमथ पुनर्दक्षिणग्रहणम् ? सत्यम्, पुनर्दक्षिणग्रहणं यजमानस्य तत्रासनं मा भूदित्येतदर्थमित्यदोषः । एवं च यजमानासनं वचनाभावे सर्वत्राग्नेरुत्तरतः स्यात्, "उत्तरत उपचारः" इति परिभाषणात् । तत्र पुनर्वचनं यथा पश्चादग्नेस्तेजनीं कटं वा दक्षिणपादेन प्रवृत्त्योपविशतीति तत्र तत्रैवोपवेशनम् । यद्वा दर्शपूर्णमासविषया परिभाषेयम् । वेदिस्पृगिति सूत्रे तस्माद् दक्षिणं वेद्यन्तमधिस्पृश्येवासीतेति श्रुतौ चोक्तत्वात् । तेनात्राप्राप्तिर्वैद्यभावाद् दक्षिणग्रहणमपूर्वविधानार्थम् । अतोऽपि यजमानासनमुत्तरत एव । अत्र चास्तरणमात्रोपदेशात्, चतुर्थीकर्मणि " दक्षिणतो ब्रह्माणमुपवेश्य " इत्युपवेशनविधानाच्च न ब्रह्मोपवेशनम् । मैवम् । अदृष्टार्थप्रसङ्गात् । नह्यदृष्टार्थं कश्चिदासनप्रकल्पनं कुर्यात्, ब्रह्मासनव्यपदेशानुपपत्तेश्च, तस्माद् ब्रह्मोपवेशनार्थमेवास्तरणम् । यच्चतुर्थीकर्मण्युपवेशनमुक्तं तदुदपात्रस्थापनावसरविधानार्थम् । तस्माद् ब्रह्मोपवेशनं भवत्येव । यदा ब्रह्मा न भवति तदा कौशः कार्यः इति **हरिहरः** । तन्मूलं छन्दोगगृह्येऽस्ति" इति ॥ **विश्वनाथस्त्वेवमाह**–" अग्नेर्दक्षिणतः ब्रह्मणा उपलक्षितमासनं तत्रास्तरणं वस्त्रादि ब्रह्मासनास्तरणं तत्कृत्वेत्यर्थः । यद्वा " पञ्चाशद्भिः कुशैर्ब्रह्मा " इत्युक्तत्वात् पञ्चाशत्संख्याककुशबटुं वा स्थापयित्वेत्यर्थः । न तु साक्षाद् ब्रह्मण उपवेशनम्, दक्षिणतो ब्रह्माणमुपवेश्येति चतुर्थीकर्मणि स्वणात् "। **कारिकाकारोऽपि**–"अचेतने ब्रह्मशब्दः कुशमुष्टौ च वेदवत् । कुशानां सन्निधे ( ? ) युक्तः समास्तीर्येति लिङ्गतः "॥ **कर्काचार्यास्तु**–"सर्वत्र साक्षादेव ब्रह्मण उपवे–

–शनम्, नच दक्षिणतो ब्रह्माणमुपवेश्येत्यनेन पौनरुक्त्यम्, तस्यावसरज्ञापनार्थत्वादित्याहुः । तदपरे दूषयन्ति । स्थालीपाकश्रपणपूर्वकालता ह्यवसरः, स चोत्तरत उदपात्रं प्रतिष्ठाप्य स्थालीपाकं श्रपयित्वेत्यनेनैव लभ्यते, पूर्वकालतायाः समानकर्तृकयोः क्त्वावाच्यत्वात् । क्त्वाप्रत्ययार्थो ह्युत्तरकालता । तथा च उदपात्रं प्रतिष्ठाप्य स्थालीपाकं श्रपयित्वेत्यनेन स्थालीपाकश्रपणस्योदपात्रस्थापनोत्तरकालता बोध्यते । तेन स्थालीपाककरणप्राक्कालतायाः क्त्वाप्रत्ययादेव लाभाद् व्यर्थं तदर्थं " दक्षिणतो ब्रह्माणमुपवेश्य " इत्येतत्सूत्रं स्यादत एवं ज्ञायते–चतुर्थीकर्मादौ यत्र साक्षाद् ब्रह्मोपवेशनमुक्तं तत्रैव प्रत्यक्षब्रह्मोपवेशनम्, नान्यत्रेति" **विश्वनाथीयं भाष्यम्** । तथा चोक्तं **रेणुकारिकायाम्**–अग्नेर्दक्षिणतो ब्रह्मासनं कृत्वा कुशास्तृतम् । ब्रह्माणं वरयेदग्निमुत्तरेण गुणान्वितम् । आसनं ब्रह्मणः कार्यं वारणं वा विकंकतम । चतुरस्रं हस्तमात्रं मूलदण्डसमन्वितम् । द्विषडंगुलसंख्यातो मूलदण्डो विकंकतात् ! करिष्येऽमुककर्माहं ब्रह्मा त्वं तत्र मे भव । ब्रह्मा भवामि चेत्युक्त्वा गच्छेदग्नेस्तु पूर्वतः । अपरेणाथवा कुर्यादासनस्येक्षणं ततः । एकदेशं तृणस्यापि स्वासने चोपवेशयेत् । **अथ ब्रह्मोपवेशने गोभिलगृह्यसूत्रम् " अथ पूर्वाह्ण एव प्रातराहुतिंहुत्वाऽग्रेणाग्निं परिक्रम्य दक्षिणतोऽग्नेः प्रागग्रान् दर्भानास्तीर्य तेषां पुरस्तात् प्रत्यङ्मुखास्तिष्ठन् सव्यस्य पाणेरङ्गुष्ठेनोपकनिष्ठया चाङ्गुल्या ब्रह्मासनात् तृणमभिसङ्गृह्य दक्षिणापरमष्टमं देशं निरस्यति निरस्तः परावसुरिति** प्र० १ ख. ६.सू० १३ । १४ ।" दक्षिणापरम्–दक्षिणस्याः अपरस्याः पश्चिमायाश्च दिशोरन्तरालं नैर्ऋतं कोणम् । 'दिङ्नामान्यन्तराले' इत्यनेन समासः । **" अप उपस्पृश्याथ ब्रह्माऽऽसन उपविशत्यावसोः सदने सीदामीत्यग्निमभिमुखो वाग्यतः प्राञ्जलिरास्त आकर्मणः पर्यवसानाद् भाषेत यज्ञसंसिद्धिं नायज्ञीयां वाचं वदेद् यद्ययज्ञीयां वाचं वदेद् वैष्णवीमृचं यजुर्वा जपेदपि वा नमो विष्णवे इत्येवं ब्रूयात्** १ । ६ । १५ । २० " आकर्मणः पर्यवसानात्=कर्मान्तं यावत् । अग्निमभिमुखः=सुतरामुत्तरास्यः । वाग्यतः=नियमितवाक् यज्ञीयवचनातिरिक्तवाक्शून्यः । प्राञ्जलिः=कृताञ्जलिपुटः सन् । आस्ते=आसीत । स्पष्टमग्रे । **"यद्यु वा उभयं चिकीर्षेद्धौत्रं चैव ब्रह्मत्वं चैवैतेनैव कल्पेन छत्रं वोत्तरासङ्गं वोदकमण्डलुं दर्भबटुं वा ब्रह्मासने निधाय तेनैव प्रत्याव्रज्याथान्यच्चेष्टेत्** १ । ६ । २१ " 'यदि उवै' यदि होत्रं च ब्रह्मत्वं च उभयमेव एकः चिकीर्षेत्=कर्तुमिच्छेत्, तर्हि एतेनैव कल्पेन=पूर्वोक्तेनैव प्रकारेण छत्रं, वा=अथवा=उत्तरासङ्गम्=उत्तरीयकम्, वा उदकमण्डलुं=जलपूर्णं कमण्डलुं वा दर्भबटुम्=कुश–

॥ ६५ ॥

तस्याग्नेर्दक्षिणस्यां दिशि ब्रह्मणे आसनं वारणादियज्ञियदारुनिर्मितं पीठमास्तीर्य कुशैः स्तीर्त्वा, तत्र वरणावरणाभ्यां पूर्वसम्पादितं कर्मसु तत्त्वज्ञं ब्राह्मणं, तदभावे पञ्चाशत्कुशानिर्मितम् अग्नेरुत्तरतः प्राङ्मुखमासीनं स्वयमुदङ्मुख आसीनो ( यजमानो ) ऽनुलेपनपुष्पमाल्यवस्त्रालङ्कारादिभिः सम्पूज्य अमुककर्माहं करिष्ये, तत्र मे त्वममुकगोत्रामुकप्रवरामुकशर्मन् ब्राह्मण त्वं ब्रह्मा भवेति वृत्वा, भवामीत्युक्तवन्तमुपवेश्य ॥ "प्रणीय" अप इति शेषः । तद्यथा-अग्नेरुत्तरतः प्रागग्रं कुशैरासनद्वयं कल्पयित्वा वारणं द्वादशाङ्गुलदीर्घं, चतुरङ्गुलविस्तारं, चतुरङ्गु

---

—निर्मितं ब्रह्माणं ब्रह्मासने तत्रैव निधाय संस्थाप्येत्यादि स्पष्टम् । **दर्भबटुमिति**–ऊर्ध्वकेशो भवेद् ब्रह्मा लम्बकेशस्तु विष्टरः । दक्षिणावर्तको ब्रह्मा वामावर्तस्तु विष्टरः । कतिभिश्च कुशैर्ब्रह्मा ? कतिभिर्विष्टरः स्मृतः । पञ्चाशद्भिर्भवेद् ब्रह्मा तदर्द्धेन च विष्टरः । द्विरावृत्त्याथ मध्ये वै अर्द्धवृत्त्यान्तदेशतः । ग्रन्थिः प्रदक्षिणावर्तः स ब्रह्मग्रन्थिसंज्ञकः । यज्ञवास्तुनि मुष्ट्यां च स्तम्बे दर्भवटौ तथा । दर्भसंख्या न विहिता विष्टरास्तरणेष्वपि । इति भेदाद् विकल्पोऽत्र । **मम मते** त्विदं कौशब्राह्मणोपवेशनं प्रेतपितृश्राद्धवत्, पिष्टमयपशुविधानवद् वाऽनुकल्पमात्रं, श्रौतसूत्रग्रन्थेषु कुत्रचित्तस्यानुपलब्धेः, श्रौतस्मार्तकर्मस्वनुकल्पविधानस्यादर्शनाच्च । वैदिकमार्गानुयायिनामस्माकं त्वेक एव वैदिको विधिर्मुख्यो नित्यश्च, न क्वचिन्मुख्यामुख्यविभेदेन कल्पानुकल्पत्वविकल्पः । दृश्यते स तथा सम्प्रदायान्तरेष्ववार्चीनेषु । कौशे पुनः कृताकृतावेक्षणरूपब्रह्मकर्मणः, ब्रह्मन् प्रविशामि, प्रविशस्व, यथाविहितं कर्म कुरु, यथाज्ञानं करवाणीति प्रैषानुप्रैषवाक्यानां चासम्भवत्वेन मिथ्योपचारात् साक्षाद् ब्राह्मणोपवेशनविधिरेव युक्त इति मन्येऽहं **ब्रजवल्लभः** । १ " प्रणीय " अप इति शेषः । अग्नेरुत्तरतः कौशं पूर्वापरमासनद्वयं प्रकल्प्य, अपरासने उदपूर्णं चतुष्कोणं चमसं निधायालभ्य " ब्रह्मासनमीक्ष्य " पूर्वासने निदध्यादित्यर्थः । अत्र । " ब्रह्मासनमीक्ष्य " इत्येव विशेषो **विश्वनाथकृतगृह्यसूत्रप्रकाशिकायाम्**, सर्वमन्यत्तु समानम् । ईक्ष्येत्यत्र अव्ययपूर्वपदाभावेऽपि विहितो ल्यप् चिन्त्यः । आर्षोऽयमिति कृत्वा वा समाधेयः । एतत्प्रणीताप्रणयनं दृष्टफलं सर्वार्थं चेति **कर्काचार्याः** । दृष्टार्थतायामपि संयवनार्थमिदमिति **केचित्** । उदककृत्यं सर्वं प्रणीताजलेन चेत् क्रियते तदा स्वकाले कर्मानुष्ठानं क्लेशेनैव निर्वाहश्च । उक्तं च–"लभ्यमाने तु दृष्टेऽर्थे नादृष्टस्य प्रकल्पना" इति । तस्मात् सर्वार्थाः प्रणीता इति । प्रणीताभिः संयौतीति श्रवणात् संयवनार्था **इत्यन्ये** । यदि हि सर्वार्थं प्रणीताप्रणयनं—

लखातं चमसं सव्यहस्ते कृत्वा दक्षिणहस्ताद्धृतपात्रस्थोदकेन पूरयित्वा पश्चिमासने निधायालभ्य पूर्वासने स्थापयित्वा ॥ “परिस्तीर्य” अग्निम्, तद्यथा–बर्हिर्मुष्टिमादाय ईशानादि प्रागग्रैर्बर्हिभिरुदक्संस्थमग्नेः परिस्तरणं कृत्वा ॥ “अर्थवदासाद्य”[2] यावद्भिः पदार्थैरर्थप्रयोजनं तावतः पदार्थान् द्वन्द्वं प्राक्संस्थान् उदगग्रानग्नेरुत्तरतः पश्चाद् वा आसाद्य, तद्यथा–पवित्रच्छेदनानि त्रीणि कुशतरुणानि, पवित्रे साग्रे अनन्तगर्भे द्वे कुशतरुणे, प्रोक्षणीपात्रं वारणं द्वादशाङ्गुलदीर्घं करतलसम्मितखातं पद्मपत्राकृति कमलमुकुलाकृति वा, आज्यस्थाली तैजसी

---

–भवेत् तदा प्रणयनसंस्कृतनीरसंसर्गः प्रतीयेत । तस्य च संयवनेनैव प्रतीयमानत्वात् संयवनार्थतैवेति । तदेतत्तुच्छम् । पक्षाद्यादिषु संयवनाभावेऽपि प्रणीतादर्शनात् । अथ नियोगसाधनीभूतद्रव्ये अपः संयवनं तदर्थः लक्षणापत्तेः । अथ प्रणयनादेः संस्कारस्य श्रुतित एव लाभाच्छ्रुतौ च संयवनार्थतैव दृष्टेति चेत् । प्रणीतायाः संयवनार्थत्वे उपसदि संयवनव्यतिरेकात् प्रणीताया अपि व्यतिरेकः प्रसज्येत । तथा च प्रसंजितव्यतिरेकप्रतियोग्युल्लेखं सूत्रकृन्न कुर्यात् कृतवांश्च तदुल्लेखं “प्रणीताद्युपसदिति” **सूत्रकृत्** । किञ्च सविधे पशौ प्रणीताव्यतिरेकेऽपि क्रतुनिर्वाहसन्दर्शनात् संयवनरूपदृष्टार्थताऽदृष्टसाधारणार्थता वेत्येतदविचाररमणीयम् । किं चापः प्रणयतीत्युपक्रम्य ततो देवा एतं वज्रं ददृशुर्यदप इत्याद्यर्थवादपर्यालोचनया विघ्ननिवर्तकत्वं प्रणीतायाः प्रतिपाद्यते इति प्रतीयते । तच्च साक्षान्न संभवति इत्यदृष्टमेव व्यापार इति सिद्धं **शतपथश्रुतित** एव प्रणीताया अदृष्टार्थत्वम् ॥ ( विश्वनाथभाष्ये )॥ १ “प्रागग्रैरुदगग्रैश्च तृणैरग्नेः परिस्तरणं कृत्वेत्यर्थः । प्राच्यां प्रथममुदगग्रैः प्रक्षेपः । दक्षिणतः प्रागग्रैः ततः प्रतीच्यामुदगग्रैः तत उदीच्यां प्रागग्रैः । इति **विश्वनाथः** ॥ “**अथ तृणैः परिस्तृणाति**” इति श्रुतिः । तदेतत्परिस्तरणमग्नेर्नग्नतापरिहारार्थं कर्तव्यम् । तथा च **शतपथश्रुतिः**–“**स हैष यज्ञ उवाच नग्नताया वै बिभेमीति का ते नग्नतेत्यभित एव मा परिस्तृणीयुरिति तस्मादेतदग्निमभितः परिस्तृणन्ति**” इति ॥ अत्र दर्भसंख्या न निश्चिता । २ अग्नेरुत्तरतः पश्चाद् वा द्वन्द्वं प्रयोजनवतां पात्राणामासादनं कार्यं क्रमेण मुख्यक्रमानुग्रहात् । पश्चाच्चेत् प्राक्संस्थानामुदगग्राणां प्रागग्राणां वा आसादनम् । उत्तरत उदक्संस्थानां प्रागग्राणाम्, उदगग्राणां वाऽऽसादनम् । **कारिकायाम्**–पश्चादुत्तरतो वा स्यात् पात्रासादनमग्नितः । उत्तरे चेदुदक्संस्थं प्राक्संस्थं पश्चिमे भवेत् । एतच्च विपुलस्थानसंभवे । असंभवे तु **कात्यायनेनोक्तम्**–“प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं समीपतः” इति **देवयाज्ञिकाः** ।

मृन्मयी वा द्वादशाङ्गुलविशाला प्रादेशोच्चा, तथैव चरुस्थाली, सम्मार्गकुशास्त्रयः, उपयमनकुशास्त्रिप्रभृतयः, समिधस्तिस्रः पालाश्यः प्रादेशमात्र्यः, स्रुवः खादिरो हस्तमात्रः अङ्गुष्ठपर्वमात्रखातपरिणाहवर्तुलपुष्करः, आज्यं गव्यम्, चरुश्चेद् व्रीहितण्डुलाः, षट्पञ्चाशदधिकमुष्टिशतद्वयपरिमितं परार्घ्यं बहुभोक्तृपुरुषाहारपरिमितमपरार्घ्यं तण्डुलाद्यन्नं पूर्णपात्रम्, दक्षिणा वरो वा यथाशक्ति हिरण्यादि द्रव्यम् ॥ " पवित्रे कृत्वा " प्रथमं त्रिभिः कुशतरुणैरग्रतः प्रादेशमात्रं विहाय द्वे कुशतरुणे प्रच्छिद्य ॥ " प्रोक्षणीः संस्कृत्य " प्रोक्षणीपात्रं प्रणीतासन्निधौ निधाय तत्र पात्रान्तरेण हस्तेन वा प्रणीतोदकमासिच्य पवित्राभ्यामुत्पूय पवित्रे प्रोक्षणीषु निधाय दक्षिणेन हस्तेन प्रोक्षणीपात्रमुत्थाप्य सव्ये कृत्वा तदुदकं दक्षिणेनोच्छाद्य प्रणीतोदकेन प्रोक्ष्य ॥ " अर्थवत् प्रोक्ष्य " अर्थवन्ति प्रयोजनवन्ति आज्यस्थाल्यादीनि पूर्णपात्रपर्य

---

१ पवित्रच्छेदनप्रकारस्त्वेवं वेदितव्यः—प्राङ्मुखोपविष्टः कर्ता स्ववामकरे साग्रमनन्तर्गर्भं कुशपत्रद्वयं ( छेद्यम् ) पूर्वाग्रं धृत्वा, तदुपरि दक्षिणहस्तेनानन्तर्गर्भं त्रिपत्रकुशत्रय ( छेदकम् ) मुत्तराग्रं निधाय, द्वयोर्मूलेन ते एव द्वे कुशतरुणे ( तयोरेवाग्रावयवमित्यर्थः ) प्रदक्षिणं परिवेष्ट्य, त्रयाणां ( छेदकानाम् ) मूलाग्रे एकीकृत्य, अनामिकांगुष्ठाभ्यामनखस्पर्शं द्वयोरग्रं प्रादेशमितं छिन्द्यात् । द्वयोर्मूलं त्रीणि चोत्तरतः क्षिपेत् । अवशिष्टं साग्रं कुशपत्रखण्डद्वयमिदं पवित्रसंज्ञमिति । **छन्दोगपरिशिष्टे**—अनन्तर्गर्भकं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥ इति । केचनात्र ग्रन्थिं ददति, वदन्ति च तत्प्रमाणं यथा—कुर्यात्पवित्रं द्विदलं ब्रह्मग्रन्थिसमन्वितम् । मध्ये मूले कुशैश्छित्त्वा शम्भुकोणे कुशांस्त्यजेत् ॥ समे द्वे स्थौल्यदैर्घ्याभ्यां साग्रे प्रादेशसम्मिते । पवित्रे ग्रन्थिते ज्ञेये दैवे कर्मणि चोदिते ॥ इत्यादि॥ २ अर्थः प्रयोजनं तद्वत् । स्मृतिबोधितप्रारब्धक्रियासंपादकं चर्वादि घृतादिकं पात्रादिकं च सर्वं प्रोक्षणीनामधेयाभिरद्भिरभिषिच्येत्यर्थः । तथा च दक्षिणहस्तोपात्तप्रोक्षणीभिः समग्रं पात्रसमुदायं सकृदेव प्रोक्षणीयमित्यर्थः । श्रुतौ शुन्धध्वमिति मन्त्रलिङ्गात् । **अत्राह कर्कः**—प्रोक्षणस्य पात्रोद्देशेन विधानात् पात्राणां च संस्कार्यत्वात् प्रतिसंस्कार्यं संस्कारावृत्तेर्न्याय्यत्वात् प्रतिपात्रं प्रोक्षणमिति । श्रुतावुद्देश्यगतं बहुत्वं न विवक्षितमित्यादि बहुविस्तरेण प्रपञ्चितं विश्वनाथेन गृह्यसूत्रप्रकाशिकायाम्, द्रष्टव्योऽयं शास्त्रार्थस्तत्र, मया त्वत्र ग्रन्थगौरवभयात्समयाल्पत्वाच्च न लिख्यते ॥

न्तानि, प्रोक्षणीभिरद्भिः आसादनक्रमेण एकैकशः प्रोक्ष्य, असञ्चरे प्रणीताग्न्योरन्तराले प्रोक्षणीपात्रं निधाय ॥ " निरूप्याज्यम् " आसादितमाज्यमाज्यस्थाल्यां पश्चादग्नेर्निहितायां प्रक्षिप्य, चरुश्चेत् चरुस्थाल्यां प्रणीतोदकमासिच्य आसादिताँस्तण्डुलान् प्रक्षिप्य ॥ " अधिश्रित्य " तत्राज्यं ब्रह्मा अधिश्रयाति तदुत्तरतः स्वयं चरुम्, एवं युगपदग्नावारोप्य ॥ " पर्यग्नि कुर्यात् " ज्वलदुल्मुकं प्रदक्षिणमाज्यचर्वोः समन्ताद्भ्रामयेत्, अर्द्धशृते चरौ ॥ " स्रुवं[1] प्रतप्य " दक्षिणेन हस्तेन स्रुवमादाय प्राञ्चमधोमुखमग्नौ तापयित्वा " सम्मृज्य " सव्ये पाणौ कृत्वा दक्षिणेन सम्मार्गाग्रैर्मूलतोऽग्रपर्यन्तम् , मूलैरग्रमारभ्य अधस्तान्मूलपर्यन्तम् ॥ " अभ्युक्ष्य " प्रणीतोदकेनाभिषिच्य[2] ॥ " पुनः प्रतप्य निदध्यात् " पुनः पूर्ववत् प्रतप्य दक्षिणतो निदध्यात् ॥ "आज्यमुद्वास्य" आज्यमुत्थाप्य चरोः पूर्वेण नीत्वा अग्नेरुत्तरतः स्थापयित्वा, चरुमुत्थाप्य आज्यस्य पश्चिमतो नीत्वा आज्यस्योत्तरतः स्थापयित्वा आज्यमग्नेः पश्चादानीय चरुं चानीय आज्यस्योत्तरतो निधाय, एवं त्रिचतुरादीनि अन्यान्यपि हवींषि उद्वासयेत् " अधिशृतानां पूर्वेण, उद्वासितानां पश्चिमतो हविष उद्वास्यानयनमिति " याज्ञिकसम्प्रदायात् ॥ " उत्पूय " ऊर्ध्वं पूर्ववत्पवित्राभ्याम् ॥ " अवेक्ष्य " अवलोक्य आज्यम् तस्मादपद्रव्यनिरसनम् ॥ " प्रोक्षणीश्च पूर्ववत्[3] " पवित्राभ्यामुत्पूय पूर्ववत् उपयमनान् कुशानादय दक्षिणपाणिना गृहीत्वा सव्ये निधाय ॥ समिधोऽभ्याधाय तिष्ठन् समिधः प्राक्षिप्य ॥ " पर्युक्ष्य जुहुयात् " प्रोक्षण्युदकेन,

---

१ स्रुवस्यायं संस्कारो होमार्थः। एवं च दृष्टार्थता तत्संस्कारस्य। अतः संस्कारविस्मरणे प्रायश्चित्तपूर्वकं प्रागन्त्यहोमात् कार्यः । ऊर्ध्वं तु प्रायश्चित्तमात्रम् । इति **गदाधरः**। २ प्रोक्षण्युदकेनाभ्युक्षणमिति **गर्गः** । इममेवार्थं सम्मनुते **विश्वनाथोऽपि** । ३ पूर्ववदिति—पवित्राभ्यां प्रोक्षणीरुत्पूय तास्वेव पवित्रनिधानम् । चशब्दादाज्यमपि पूर्ववदेव।अतः पवित्राभ्यां स्यात् । प्रोक्षणीसंस्कारोऽयं पर्युक्षणार्थ इति **गदाधरः**। आज्यसंस्कारस्तु घृतस्याज्यत्वापादनार्थम्। वैधसंस्कारसंस्कृतमेव घृतमाज्येति नाम हविरन्यथा तु घृतं स्नेहापरपर्यायकम् । तत् यथा——अग्निना चैव मन्त्रेण पवित्रेण च चक्षुषा ॥ चतुर्भिरेव यत् पूतं तदाज्यमितरत् घृतम् ॥ यथा सीमन्तिका नारी पूर्वगर्भेण संस्कृता । एवमाज्यस्य संस्कारः संस्कारे विधिचोदिते—

सर्वेण सपवित्रेण दक्षिणचुलुकेन गृहीतेन, अग्निमीशानादि उदगपवर्गं परिषिच्य, जुहुयादाघारादीन् । संस्रवधारणार्थं पात्रं प्रणीताग्न्योर्मध्ये निदध्यात् ॥ "एष एव विधिर्यत्र क्वचिद्धोमः" एष परिसमूहनादि पर्युक्षणपर्यन्तो विधिरेव न मन्त्राः, क्वचित् यत्र क्वचन लौकिके स्मार्ते वाऽग्नौ होममात्रं तत्र वेदितव्यः॥१॥इति हरिहरभाष्ये प्रथमा कण्डिका ॥ अथ होमः ॥ तत्राद्याहुतिचतुष्टये यजमानः ससक्थिकं दक्षिणं जान्वाच्य कुशेन ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौ स्रुवेणाज्याहुतीर्जुहुयात् । तत्तदाहुत्यनन्तरं स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः ॥

---

–इत्यादि बहुविस्तराद् विरम्यते। १ प्रोक्षणीपात्रं च संस्रवधारणार्थं प्रणीताग्न्योरन्तरा स्थाप्यम् इति **विश्वनाथः**। विशेषस्तु मत्कृतेऽभिनवे "**स्मार्तवल्लभे**" द्रष्टव्यः ॥ २ सर्वोऽप्ययं होमः समिद्धतमेऽग्नौ करणीयस्तद्विपरीते दोषश्रवणात्। तत्प्रवृत्तिनिवृत्त्यर्थं स्तुतिनिन्दात्मकानि कतिचित् शास्त्रीयवाक्यान्यर्थवादस्वरूपेणात्र लिख्यन्ते, यानि होमकर्मसूपयुक्तानि भवन्ति तानि यथा–**कात्यायनः(छन्दोगपरिशिष्टे)**"योऽनार्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः।मन्दाग्निरामयावी च दरिद्रश्चैव जायते॥ तस्मात् समिद्धे होतव्यं नासमिद्धे कथंचन।आरोग्यमिच्छताऽऽयुश्च श्रियमात्यन्तिकीं पराम्"॥**कापिले**–अप्रदीप्ते न होतव्यं मध्यमे वा सधूमके।प्रदीप्ते लेलिहे वाग्नौ होतव्यं कर्मसिद्धये॥ **धमनप्रकारश्च** यथा-न वस्त्रवायुना कुर्यात् पाणिशूर्पस्रुवादिभिः। न कुर्यादग्निधमनं न कुर्याद् व्यजनादिना ॥ मुखेन वा धमेदग्निं मुखदेशाद् व्यजायत। अन्धो बुधः सधूमे तु जुहुयाद् यो हुताशने॥यजमानो भवेदन्धः सपुत्र इति च श्रुतिः॥ **देवलः**॥ जुह्वतश्चाथ पर्णेन पाणिशूर्पपटादिना। न कुर्यादग्निधमनं तथा च व्यजनादिना॥ पर्णेन तु भवेद् व्याधिः शूर्पेण धननाशनम्। पाणिना मृत्युमाप्नोति पटेन विफलं भवेत् ॥ व्यजनेनातिदुःखाय ह्यायुर्वृद्धिर्मुखाधमात्। मुखेन धमयेदग्निं मुखादग्निरजायत । अग्निं मुखेनेति तु यल्लौकिके योजयेच्च तत् ॥ अन्यत्र च। वेणोरग्निप्रसूतित्वात्, वेणुरग्नेश्च तापनः। तस्माद्वेणुधमन्यैव धमेदग्निं विचक्षणः॥ अग्नेर्मुखादिकं ज्ञात्वा होमो विधेयः, तच्च यथा––आस्यान्तर्जुहुयादग्नेर्विपश्चित् सर्वकर्मसु। कर्णहोमे भवेद् व्याधिर्नेत्रेऽन्धत्वमुदाहृतम् । नासिकायां मनःपीडा मस्तके च धनक्षयः॥ एषां लक्षणम्--सधूमोऽग्निः शिरो ज्ञेयं निर्धूमश्चक्षुरेव च। ज्वलत्कृशानुः स्यात् कर्णः काष्ठलग्नस्तु नासिका। अग्निर्ज्वालायते यत्र शुद्धस्फटिकसन्निभः। तन्मुखं तस्य विज्ञेयं चतुरंगुलमानतः। इति ॥ **अथान्तरागमने प्रायश्चित्तम्**--द्वौ विप्रौ, ब्राह्मणाग्नी च, दम्पती, गोद्विजोत्तमौ ॥ अन्तरेण यदा गच्छेद्द्विजश्चान्द्रायणं चरेत् ॥ होमकाले तु विशेषः। होमकाले तथा दाहे स्वाध्याये दारसंग्रहे। अन्तरेण यदा गच्छेद् द्विजश्चान्द्रायणं चरेत् ॥ ३ **कारिकायाम्**–अग्ने धृत्वार्थनाशाय मध्ये चैव मृतप्रजः। मूले च म्रियते

( अग्नेरुत्तरभागे ) ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम । ( अग्नेर्दक्षिणभागे ) ॐ इन्द्राय स्वाहा इदमिन्द्राय न मम । इत्याघारौ ॥ ( मध्ये समिद्धतमे ) ॐ अग्नये स्वाहा इदमग्नये न मम । ॐ सोमाय स्वाहा इदं सोमाय न मम । इत्याज्यभागौ ॥ इत्याघारावाज्यभागौ

---

–होता स्रुवस्थानं कथं भवेत् । अग्रमध्याच्च यन्मध्यं मूलमध्याच्च मध्यतः । स्रुवं धारयते विद्वान् ज्ञातव्यं च सदा बुधैः ॥ तर्जनीं च बहिः कृत्वा कनिष्ठां च बहिस्तथा । मध्यमानामिकांगुष्ठैः स्रुवं धारयते द्विजः ॥ स्रुवहोमे सदा त्यागः प्रोक्षणीपात्रमध्यतः । पाणिहोमे त्यागो न भवति । इयमेव मृगी मुद्रा । १ एतदाघारादि स्विष्टकृदन्तं चतुर्दशाहुतिकं सर्वकर्मसु नित्यं भवति यत्र यत्र होमोऽस्ति । अत्र सूत्राणि ❀ **पारस्करगृह्ये** ❀ **अन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यꣳ स्विष्टकृच्च । १ । ५ । ३ । एतन्नित्यꣳ सर्वत्र १ । ५ । ४ प्राङ् महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविः १ । ५ । ५ ।**" यजमानो ब्रह्मणा अन्वारब्धः आघारादि स्विष्टकृदवसानं कर्म करोति अन्वारम्भश्च कुशेनेति निगमपरिशिष्टात् ( **गदाधरः** ) । " ब्रह्मणा दक्षिणबाहौ दक्षिणहस्तेन अन्वारब्धे कर्तरि" इति **हरिहरः** । अन्वारब्ध आचार्य इति **विश्वनाथः**। वरः अन्वारब्धो ब्रह्मणा संस्पृष्ट इति **जयरामः**।आघारौ=पूर्वोत्तरौ उत्तराघारे प्रतिनिगद्य होमत्वं न ह्यत्र मन्त्रोऽस्ति । एवमाज्यभागयोरपि । इति **गदाधरः** । आज्यभागौ आग्नेयसौम्यौ इति **कर्क–जयराम–विश्वनाथाः**। महाव्याहृतयस्तिस्रो भूर्भुवः स्वरिति सर्वत्र प्रसिद्धाः।"त्वन्नो अग्न" इत्यादिमन्त्रपञ्चकं सर्वप्रायश्चित्तसंज्ञम् । प्राजापत्यं प्रजापतिदेवताको होमः। स्विष्टकृत्=अग्नये स्विष्टकृते स्वाहेत्युपरिष्टाद्वक्ष्यमाणम् । एतच्चतुर्दशाहुतिकं यत्र यत्र होमो भवति तत्र तत्र सर्वत्रावश्यं भवति । चेद्यदि आज्यद्रव्यादन्यत् द्रव्यं चर्वादिकमपि भवति, तदा महाव्याहृतिहोमात् प्राक्=पूर्वं स्विष्टकृद्धोमो भवति चर्वादिद्रव्यशेषादेव। केवलाज्यहोमे तु सर्वहोमान्ते आज्येनैव स्विष्टकृदिति **गदाधरः** । आघारादिहोमे दक्षिणजानु निपात्योपयमनकुशसहितं सव्यहस्तं प्रसारिताङ्गुलिं हृदि निधाय सर्वत्र ( चतुर्दशाहुतिषु ) ब्रह्मणा कुशैरन्वारब्धो यजमानः स्रुवेण जुहुयादिति **कुशकण्डिकाभाष्ये–कारिकायां** च "भूरादिनवसु स्विष्टकृते चाद्यचतुष्टये। अन्वारब्धो भवेत्तेषु सोऽन्वारम्भः कुशेन वै इति ॥ प्रथमाहुतिचतुष्टयदानविधौ विशेषोऽपि **संस्कारभास्करे**–स यथा,–स्रुवेणाज्यं गृहीत्वाग्नेः प्रत्यगुत्तरदेशतः।आरभ्य दिशमाग्नेयीमाज्यधारामृजुं हरेत्।मनसा संस्मरेत् स्वाहायुक्तं चैव प्रजापतिम् । नैर्ऋतीं दिशमारभ्य ऐशा-

हुत्वा । अग्नेः[1] पूजनम् । ॐ पावकनाम्ने वैश्वानराय यथानामप्रतिष्ठितदेवाय नमः इदमुदकं चन्दनं पुष्पं धूपादीनि च समर्पयामि इत्यग्निं संपूज्य

---

–नीं पूर्ववत् क्षिपेत् । इन्द्रायेति पदं स्वाहायुक्तं चोपांशुकं भवेत् । स्वाहेत्याघारयेदेतावाघाराविति भाषितौ । प्राच्यौ वा जुहुयादेतावृजू सन्ततमेव वा । जुहुयादग्नये स्वाहा सोमायेति तथा पराम् । प्रथमेशानकोणाग्रे द्वितीयाग्नेयकोणगा । सुसमिद्धेऽथवा वह्नौ होतव्ये चोत्तराहुती ॥ आघारौ नासिके ज्ञेये आज्यभागौ च चक्षुषी । वक्त्रोदरे कटिश्चैव तिस्रो व्याहृतयः क्रमात् । ततो हस्तौ च पादौ च वह्नेः स्यात् पञ्चवारुणम् ॥ ननु "**उत्तरत उपचारो हि यज्ञ**" इति–शास्त्रम्, तर्हि कथमेते आहुती दक्षिणसंस्थं हूयेते इति चेत्, सत्यम्, आत्माभिमुखस्याग्नेर्दक्षिणवामाभिप्रायेणेत्यदोषः ॥ प्राजापत्याहुतौ, उपांशुत्वकारणं हविर्यज्ञकाण्डे द्रष्टव्यम् ॥ उपांशुलक्षणं **हौत्रसूत्रे "यस्मिन् मन्त्रादयो न विज्ञायन्ते, न व्यञ्जनं, केवलमेवौष्ठचालनं, श्वासो वा तदुपांशुरिति"** ॥ शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयन् । किञ्चिच्छब्दं स्वयं विद्यादुपांशुः स जपः स्मृतः ॥

१ अग्निपूजा बहिरेव सम्प्रदायानुरोधात् । केचित्तु मध्येऽपि कारयन्ति तत्प्रमाणं यथा **विष्णुधर्मोत्तरे**–मध्येऽपि गन्धपुष्पादीन्दद्यादग्नेर्न संशयः।बहिर्नैवेद्यमात्रं तु दातव्यमितिनिश्चितम् । बाह्येऽपि वायव्यकोण एव नान्यत्रेति।केचनाग्नेराचमनं घृतेन कारयन्तीति तन्मूलं चिन्त्यम्।अत्र पावकनामाग्निर्लौकिको वेदितव्यः कर्मभेदेनाग्नेर्नामबहुत्वात्।नामानि यथा–लौकिकःपावकोह्यग्निः प्रथमः परिकीर्तितः । अग्निस्तु मारुतो नाम गर्भाधाने विधीयते । पुंसवने चान्द्रमसः शुङ्गाकर्मणि शोभनः । सीमन्ते मङ्गलो नाम प्रगल्भो जातकर्मणि । नाम्नि स्यात् पार्थिवो ह्यग्निः प्राशने च शुचिस्तथा । सभ्यनामाथ चूडायां व्रतादेशे समुद्भवः । गोदाने सूर्यनामा तु केशान्ते ह्यग्निरुच्यते । वैश्वानरो विसर्गे तु विवाहे योजकः स्मृतः । चतुर्थ्यां तु शिखी नाम धृतिरग्निस्तथापरे । आवसथ्ये भवो ज्ञेयो वैश्वदेवे तु पावकः ( पाचक इत्यपि ) । ब्रह्मा वै गार्हपत्ये स्यादीश्वरो दक्षिणे तथा । विष्णुराहवनीये तु अग्निहोत्रे त्रयोऽग्नयः । लक्षहोमे तु वह्निः स्यात् कोटिहोमे हुताशनः । प्रायश्चित्ते विधिश्चैव पाकयज्ञे तु साहसः । देवानां हव्यवाहस्तु पितॄणां कव्यवाहनः । पूर्णाहुत्यां मृडो नाम शान्तिके वरदस्तथा । पौष्टिके बलदश्चैव क्रोधोऽग्निश्चाभिचारके । वश्यार्थे कामदो नाम वनदाहे तु दूतकः । कोष्ठे तु जठरो नाम क्रव्यादो मृतभक्षणे । समुद्रे बाडवो ज्ञेयः क्षये संवर्त्तको भवेत् । एतेऽग्नयः समाख्याताः श्रावयेद् ब्राह्मणः सदा । सप्तत्रिंशतिसंख्याका ज्ञातव्याश्च द्विजेन वै ॥ इति **कुशकण्डीभाष्ये** ॥ अग्निनामाज्ञाने कर्मणो वैफल्यमाह **व्यासः**–"अविदित्वा तु यो ह्यग्निं होमयेदविचक्षणः। न हुतं न च संस्कारो न तु यज्ञफलं–

वैष्णवाचरणं कुर्यात् । ( ॐ नमो भगवते वासुदेवाय स्वाहा । अनेन मन्त्रेण गर्भाधानादिदशसंस्कारार्थमाहुत्यष्टाविंशत्यधिकशतमाज्येन जुहुयादिति वैष्णवाचरणम् ) ॥ अथ ग्रहादिहोमः ( अयमनन्वारब्धकर्तृकः ) तत्र तावद्गणपतये । ॐ गुणानान्त्वा गुणपतिꣳहवामहे प्रियाणां त्वाप्रियपतिꣳहवामहेनिधीनान्त्वानिधिपतिꣳहवामहेवसोमम ॥ आहमजानिगर्भधमात्वमजासिगर्भधंस्वाहा ॥ इदं गणपतये० ॥ २८ ॥ ८ ॥ अथ नवग्रहाणां समिधः । अर्कः पलाशः खदिरो ह्यपामार्गोऽथ पिप्पलः ॥ औदुम्बरः शमी दूर्वाः कुशाश्च समिधः क्रमात् ॥ तिलाज्ये चरुपक्वं

---

–ततः ॥ ततः तस्माद्धोमात् ॥ तस्य होतुर्वा, सार्वविभक्तिकस्तसिल् ॥ १ अथ वैष्णवाचरणमाह--**गरुडः**, पञ्च पञ्चाहुतीर्हुत्वा आज्येन तदनन्तरम् । गर्भाधानादितस्तावद्यावद् गोदानिकं भवेत् इति । **प्राचीनपद्धतावपि**--वैष्णवाचरणं कुर्याद् गर्भाधानादिना नरः । गर्भाधानम् । पुंसवनम् । सीमन्तोन्नयनम् । जनिः । नामकरणम् । अन्नप्राशनम् । चूडाकरणम् । व्रतबन्धः । गोदानम् ( केशान्तकर्म ) । विवाहः । आज्याहुत्यष्टकैः कुर्याद् गर्भाधानादिकाः क्रियाः। एते षोडशसंस्काराः पावकस्य महात्मनः। २ हेमाद्रौ–गणाधिपतये देया प्रथमा तु वराहुतिः। अन्यथा विफलं कर्म भवतीह न संशयः ॥ ३ अत्र क्रमभेदमप्याह **गदाधरः स्वीये गृह्यसूत्रभाष्ये, स्मृत्यर्थसारवचसा**–तद्यथा–"पलाशखदिराश्वत्थशम्युदुम्बरजा समित् । अपामार्गार्कदूर्वाश्च कुशाश्चेत्यपरे विदुः"प्राशस्त्यं चाह आसां स एव–सत्वचः समिधः कार्या ऋजुश्लक्ष्णाः समास्तथा। शस्ता दशाङ्गुलास्तास्तु द्वादशाङ्गुलिकास्तु वा ।आर्द्राः पक्वाः समच्छेदास्तर्जन्यङ्गुलिवर्तुलाः ।अपाटिताश्चाद्विशाखाः कृमिदोषविवर्जिताः।ईदृशा होमयेत् प्राज्ञः प्राप्नोति विपुलां श्रियम्॥प्रमाणं चापि तत्रैव–"समित् पवित्रं वेदिश्च त्रयः प्रादेशसम्मिताः। इध्मस्तु द्विगुणः प्रोक्तः परिधिस्त्रिगुणः स्मृतः ॥ (वेदिः परिष्कृता भूमिः, इध्मपरिधी अपि यज्ञीयकाष्ठविशेषौ ) **ब्राह्मे**–शमीपलाशन्यग्रोधप्लक्षवैकङ्कतोद्भवाः । अश्वत्थोदुम्बरौ बिल्वश्चन्दनः सरलस्तथा । शालश्चदेवदारुश्च खादिरश्चेति याज्ञिकाः ॥ **कर्मप्रदीपे**–नाङ्गुष्ठादधिका कार्या समित् स्थूलतरा क्वचित् । न वियुक्ता त्वचा चैव नसकीटा न स्फाटिता । प्रादेशमात्रान्नाधिका न तथा स्याद्द्विशाखिका ॥ न सपर्णा समित् कार्या होमकर्मसु जानता ॥ प्रागग्रा समिधो ग्राह्या अखर्वा न विपाटिताः । काम्येषु वश्यकर्मादौ विपरीता जिघांसतः । विशीर्णा विफला ह्रस्वा वक्रा बहुशिखाः कृशाः । दीर्घाः स्थूला घुणैर्जुष्टाः कर्मसिद्धिविनाशिकाः ॥ समिधो मूलतो द्व्यङ्गुलं विहाय मध्यमानामिकाङ्गुष्ठैर्जुहुयादिति संस्कारभास्करे ॥

च हविर्मुख्यं प्रकीर्तितम् ॥ ततो दधि[1]क्षीरघृताक्ताश्चरुशाकल्यसहिताः समिधः सूर्यादिभ्यस्तत्तन्मन्त्रांते प्रत्येकमष्टोत्तर[2]शतमष्टाविंशतिरष्टौ वा जुहुयात् ॥ तत्र क्रमः ॥ ॐ आकृष्णेनेति मन्त्रस्य हिरण्यस्तूपऋषिस्त्रिष्टुप् छन्दः सविता देवता आदित्यप्रीतये [3]कपिलनामाग्नौ घृताक्तयवतिलार्कसमिद्धोमे विनियोगः । ॐ आकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतंमर्त्यञ्च ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन्स्वाहा ॥ इदं सूर्य्याय० ॥ १ ॥ ॐ इमं देवा इति मन्त्रस्य वरुण ऋषिः यजुश्छन्दः सोमो देवता पिङ्गलनामाग्नौ सोमप्रीतये घृताक्तयवतिलपलाशसमिद्धोमे विनि[4]योगः । ॐ इमंदेवाऽअसपत्नꣳसुवध्वंमहतेक्षत्रायमहतेज्यैष्ठ्यायमहतेजानराज्ज्यायेंद्रस्येंद्रियाय ॥ इममुमुष्य्पुत्रममुष्यैपुत्रमस्यैविशऽएषवोमीराजासोमोस्माकंब्राह्मणानाꣳराजास्वाहा ॥ इदं चन्द्रमसे० ॥ २ ॥ ॐ अग्निर्मूर्द्धेति मन्त्रस्य विरूपाक्ष ऋषिर्गायत्री छन्दो भौमो देवता धूमकेतुनामाग्नौ मङ्गलप्रीतये घृताक्तयवतिलखदिरसमिद्धोमे विनियोगः । ॐ अग्निर्मूर्द्धादिवꣳककुत्पतिꣳ पृथिव्याऽअयम् ॥

---

एताः शूद्रसेवकैर्नानाय्याः । तथात्वे दोषमाह **शंखः**–समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् । शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन् व्रजत्यधः । अत्र ब्राह्मणशब्द उपलक्षणार्थः तेन सर्वे द्विजाः ॥ १ 'होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण संयुतः' इति **संस्कारभास्करे** । २ **मात्स्ये**--होमादिग्रहपूजायां शतमष्टोत्तरं भवेत् । अष्टाविंशतिरष्टौ वा यथाशक्ति विधीयते ॥ अत्र मूले "आहुती" इति पदेन वाक्यपूर्तिः सङ्गच्छते ॥ ३ ग्रहभेदेनाग्नेर्नामभेदोपि **कुशकण्डिकाभाष्ये**--आदित्ये "कपिलो" नाम "पिङ्गलः" सोम उच्यते । "धूम्रकेतु" स्तथा भौमे "जाठराग्नि" र्बुधे स्मृतः । गुरौ चैव "शिखी" नाम शुक्रे भवति "हाटकः" । शनैश्चरे "महातेजा" राहोश्चैव "हुताशनः" । केतूनां तु "महारौद्रो" वह्निःस्याद् ग्रहभेदतः इति । ४ **याज्ञवल्क्यः**--आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च । वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः। अविदित्वा तु यः कुर्याद् याजनाध्ययनं जपम् । होममंत्रजलादीनि तस्य चाल्पफलं भवेत् ॥ अस्यापवादः **कृष्णभट्टीये**–न च स्मरेदृषिं छन्दः श्राद्धे वैतानिके मखे । **अन्यत्रापि**–( **संस्कारभास्करे** ) अग्निहोत्रे वैश्वदेवे विवाहादिविधौ तथा । होमकाले न दृश्यन्ते प्रायश्छन्दर्षिदेवताः ॥ शान्तिकादिषु कार्येषु मन्त्रपाठजपादिषु । होमे नैव प्रकर्तव्याः कदाचिदृषिदेवताः ॥ इति वचनादत्र कर्मणि विकल्पः ॥

अपाꣳरेताꣳसिजिन्वतिस्वाहा ॥ इदं भौमाय० ॥ ३ ॥ ॐ उद्बुध्यस्वेति नारायण ऋषिस्त्रिष्टुप् छन्दो बुधो देवता जाठरनामाग्नौ बुधप्रीतये घृताक्तयवतिलापामार्गसमिद्धोमे विनियोगः । ॐ ऊद्बुध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्त्तेसꣳसृजेथामयंच ॥ अस्मिन्त्सधस्थेअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदतस्वाहा ॥ इदं बुधाय० ॥ ३ ॥ ॐ बृहस्पते इति गौतम ऋषिर्बृहस्पतिर्देवता त्रिष्टुप् छन्दः शिखिनामाग्नौ बृहस्पतिप्रीतये घृताक्तयवतिलपिप्पलसमिद्धोमे विनियोगः । ॐ बृहस्पतेअतियदर्य्योअर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऋतप्रजाततदस्मासुद्रविणंधेहिचित्रꣳस्वाहा । इदं बृहस्पतये० ॥ ५ ॥ अन्नात्परिस्रुतो इति प्रजापत्यश्विसरस्वतीन्द्रा ऋषयः शुक्रो देवता जगती छन्दो हाटकनामाग्नौ शुक्रप्रीतये घृताक्तयवतिलौदुम्बरसमिद्धोमे विनियोगः । ॐ अन्नात्परिस्रुतोरसंब्रह्मणाव्यपिबत्क्षत्रंपयःसोमंप्रजापतिः ॥ ऋतेनसत्यमिन्द्रियंविपानꣳशुक्रमन्धसइन्द्रस्येन्द्रियमिदम्पयोमृतंमधुस्वाहा ॥ इदं शुक्राय० ॥ ६ ॥ ॐ शन्नोदेवीति दध्यङ्ङाथर्वण ऋषिर्गायत्री छन्दः शनैश्चरो देवता महातेजोनामाग्नौ शनिप्रीतये घृताक्तयवतिलशमीसमिद्धोमे विनियोगः । ॐ शन्नोदेवीरभिष्टयऽआपो भवन्तुपीतये ॥ शंय्योरभिस्रवंतुनःस्वाहा ॥ इदं शनैश्चराय० ॥ ७ ॥ ॐ कयानश्चित्रेति गृत्समद ऋषिर्गायत्री छन्दो राहुर्देवता शुचिनामाग्नौ राहुप्रीतये घृताक्तयवतिलदूर्वासमिद्धोमे विनियोगः । ॐ कयानश्चित्रऽआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृतास्वाहा ॥ इदं राहवे० ॥ ८ ॥ केतुंकृण्वन्निति मधुच्छन्दाः ऋषिर्गायत्रीछन्दः केतुर्देवता रोहितनामाग्नौ केतुप्रीतये घृताक्तयवतिलकुशसमिद्धोमे विनियोगः । ॐ केतुंकृण्वन्नकेतवे पेशोमर्य्याअपेशसे ॥ समुषद्भिरजायथाःस्वाहा ॥ इदं केतवे० ॥ ९ ॥ इति नवग्रहाणां होमः । ततो हस्ते जलमादाय अनेन समिदादिकृतेन होमेन सूर्यादयो ग्रहाः प्रीयन्तां न ममेति जलमुत्सृजेत् ॥ यथा बाणप्रहाराणां कवचं भवति वारणम् ॥ तद्वद्देवोपघातानां शांतिर्भवति वारणम् ॥ इत्यभिषेकः । अथ नवग्रहाऽधिदेवानां होमः । ईश्वराद्यधिदेवताभ्यः प्रत्यधिदेवताभ्यश्च पालाश्यः समिधः साज्याः प्रादेशमात्राः

प्रत्येकमष्टौ चतस्रश्चतस्रो वा सचरुघृताः सयवाः सतिलाश्च होतव्याः ॥ ॐ त्र्यम्बकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्व्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात्स्वाहा ॥ इदमीश्वराय ॥ १ ॥ ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मऽइषाणस्वाहा ॥ इदमु० ॥ २ ॥ ॐ यदक्रन्दऽप्रथमंजायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूऽउपस्तुत्यंमहिजातंतेऽअर्व्वन्स्वाहा ॥ इदं स्कन्दाय० ॥ ३ ॥ ॐ विष्णोरराटमसिविष्णोःश्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्वास्वाहा ॥ इदं विष्णवे० ॥ ४ ॥ ॐ ब्रह्मयज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽ उपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः स्वाहा ॥ इदं ब्रह्मणे० ॥ ५ ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवे सुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रंपुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः स्वाहा ॥ इदमिन्द्राय० ॥ ६ ॥ ॐ यमायत्वा मखायत्वा सूर्य्यस्य त्वा तपसे ॥ देवस्त्वासवितामध्वानक्तुपृथिव्याःसꣳस्पृशस्पाहि ॥ अर्चिरसि शोचिरसि तपोसि स्वाहा ॥ इदं यमाय० ॥ ७ ॥ ॐ कार्षिरसि समुद्रस्य त्वा क्षित्याऽउन्नयामि ॥ समापोऽअद्भिरग्मत समोषधीभिरोषधीः स्वाहा ॥ इदं कालाय न मम ॥ ८ ॥ ॐ चित्रावसो स्वस्ति ते पारमशीय स्वाहा ॥ इदं चित्रगुप्ताय० ॥ ९ ॥ अनेन सघृततिलयवसमिद्धोमेन ईश्वराद्यधिदेवताः प्रीयन्तां न ममेति जलमुत्सृजेत् । यथा बाणप्रहाराणामिति० ॥ अथ प्रत्यधिदेवताहोमः ॥ ॐ अग्निंदूतम्पुरोदधेहव्यवाहमुपब्रुवे ॥ देवाꣳआसादयादिहस्वाहा ॥ इदमग्नये० ॥ १० ॥ ॐ अप्स्वग्नेसधिष्टवसौषधीरनुरुध्यसे ॥ गर्भेसञ्जायसेपुनः स्वाहा ॥ इदमद्भ्यः० ॥ २ ॥ ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाःस्वाहा ॥ इदं पृथिव्यै० ॥ ३ ॥ ॐ विष्णोरराटमसिविष्णोःश्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसि विष्णवेत्वास्वाहा ॥ इदं विष्णवे० ॥ ४ ॥ ॐ सजोषाऽइन्द्रसगणोमरुद्भिःसोमंपिबवृत्रहाशूरविद्वान् ॥ जहिशत्रूꣳरपमृधोनुदस्वाथाभयंकृणुहिविश्वतोनःस्वाहा ॥ इदमिन्द्राय०

॥ ५ ॥ ॐ अदित्यैरास्नासीन्द्राण्याऽउष्णीषः ॥ पूषासिघर्मायदीष्वस्वाहा ॥ इदमिन्द्राण्यै० ॥ ६ ॥ ॐ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः स्वाहा ॥ इदं ब्रह्मणे० ॥ ७ ॥ ॐ नमोस्तुसर्पेभ्योयेकेचपृथिवी मनु ॥ येऽअन्तरिक्षेयेदिवितेभ्यः सर्पेभ्योनमःस्वाहा ॥ इदं सर्पेभ्यः० ॥ ८ ॥ ॐ प्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तुवयमुष्यपितासावस्यपितावयꣳस्यामपतयोरयीणाꣳस्वाहा ॥ इदं प्रजापतये० ॥ ९ ॥ अनेन होमेनाग्न्यादिप्रत्यधि देवताः प्रीयन्तां न ममेति ॥ अथ पञ्चलोकपालहोमः ॥ विनायकादिलोकपालहोमः ॥ विनायकादिलोकपालेभ्य इन्द्रादिदिक्पालेभ्यश्च पालाश्यः समिधो घृताक्ताः प्रादेशमात्राः सतिला द्विद्विसंख्याका होतव्याः ॥ ॐ गणानान्त्वागणपतिꣳहवामहेप्रियाणान्त्वाप्रियपतिꣳ हवामहेनिधीनान्त्वानिधिपतिꣳहवामहेवसोमम ॥ आहमजानिगर्भधमात्वमजासिगर्भधꣳस्वाहा ॥ इदं गणपतये० ॥ १ ॥ ॐ अंबेऽअंबिके ऽम्बालिकेनमानयतिकश्चन ॥ ससस्त्यश्वकःसुभद्रिकांकाम्पीलवासिनीꣳस्वाहा ॥ २ ॥ इदमम्बिकायै ॥ ॐ वातोवामनोवागन्धर्वाःसप्त विꣳशतिः ॥ तेऽअग्रेश्वमयुञ्जँस्तेऽअस्मिञ्जवमादधुःस्वाहा ॥ इदं वायवे० ॥ ३ ॥ ॐ घृतंघृतपावानःपिबतवसांवसापावानःपिबता न्तरिक्षस्यहविरसिस्वाहा ॥ दिशःप्रदिशआदिशोविदिशऽउद्दिशोदिग्भ्यःस्वाहा ॥ इदमाकाशाय० ॥ ४ ॥ ॐ यावाङ्कशामधुमत्यश्वि नासूनृतावती ॥ तयायज्ञम्मिमिक्षितम् स्वाहा ॥ इदमश्विभ्यां० ॥ ५ ॥ यथा बाणप्रहाराणामिति मूर्द्धाभिषेकः । अनेन होमेन पञ्चलोक पालाः प्रीयन्तामिति ॥ अथ दशदिक्पालहोमः ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्र ꣳस्वस्तिनोमघवाधात्विन्द्रः स्वाहा ॥ इदमिन्द्राय० ॥ १ ॥ ॐ अग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२ऽआसादयादिहस्वाहा ॥ इदमग्नये ॥ २ ॥ ॐ यमायत्वामखायत्वासूर्यस्यत्वातपसे ॥ देवस्त्वासवितामध्वानक्तुपृथिव्याःसꣳस्पृशस्पाहि ॥ अर्चिरसिशोचिरसितपोसिस्वाहा ॥

इदं यमाय० ॥ ३ ॥ ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसातइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु स्वाहा ॥ इदं निर्ऋतये० ॥ ४ ॥ ॐ वरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनीस्थोवरुणस्यऽऋतसदन्न्यसिवरुणस्यऽऋतसदनमसिवरुणस्य ऽऋतसदनमासीदस्वाहा ॥ इदं वरुणाय० ॥ ५ ॥ ॐ वायोयेतेसहस्रिणोरथासस्तेभिरागहि ॥ नियुत्वान्त्सोमपीतयेस्वाहा ॥ इदं वायवे० ॥ ६ ॥ ॐ कुविदङ्गयवमन्तोयवंचिद्यथादान्त्यनुपूर्वंवियूय ॥ इहेहैषांकृणुहिभोजनानियेबर्हिषोनमउक्तिंयजन्तिस्वाहा । इदं कुबेराय० ॥ ७ ॥ ॐ तमीशानंजगतस्तस्थुषस्पतिंधियञ्जिन्वमवसेहूमहेवयम् ॥ पूषानोयथा वेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तयेस्वाहा ॥ इदमीशानाय० ॥ ॥८॥ ॐ अस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥ यः शंसतेस्तुवतेधायिपज्रऽइन्द्रज्येष्ठाऽअस्माँ२अवंतुदेवाःस्वाहा ॥ इदं ब्रह्मणे० ॥९॥ ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाःस्वाहा । इदमनन्ताय० ॥ १० ॥ अनेन होमेन इन्द्रादयो देवाः प्रीयन्तां न ममेति जलमुत्सृजेत् । इति दिक्पालहोमः ॥ अथ वास्तुदेवानां होमः ॥ तत्रादौ शिख्यादिभ्यः प्रणवादिस्वाहान्तैस्तन्नामभिर्वा वैदिकमंत्रैर्वा प्रत्येकमष्टोत्तरशतमष्टाविंशतिरष्टौ वाहुतीः समित्तिलपायसाज्यैर्जुहुयात् । अत्र समिध उदुंबरस्य मुख्यास्तदभावेऽश्वत्थादीनामपि । सर्वाः समिधो मधुघृतक्षीरैरक्ता होतव्यास्तिलाः कृष्णा एव पयो गोरेव । ॐ शिखिने स्वाहा इदं शिखिने० ॥ १ ॥ ॐ पर्ज्जन्याय स्वाहा इदं पर्ज्जन्याय० ॥ २ ॥ ॐ जयन्ताय स्वाहा इदं जयन्ताय ॥ ३ ॥ ॐ इन्द्राय स्वाहा इदमिन्द्राय ॥ ४ ॥ ॐ सूर्य्याय स्वाहा इदं० ॥ ५ ॥ ॐ सत्याय स्वाहा इदं० ॥ ६ ॥ ॐ भृशाय स्वाहा इदं० ॥ ७ ॥ ॐ आकाशाय स्वाहा इदं० ॥ ८ ॥ ॐ वायवे स्वाहा इदं० ॥ ९ ॥ ॐ पूष्णे स्वाहा इदं० ॥ १० ॥ ॐ वितथाय स्वाहा इदं० ॥ ११ ॥ गृहक्षताय स्वाहा इदं० ॥ १२ ॥ ॐ यमाय स्वाहा इदं० ॥ १३ ॥ ॐ गन्धर्वाय स्वाहा इदं० ॥ १४ ॥ ॐ भृङ्गराजाय स्वाहा इदं० ॥ १५ ॐ मृगाय स्वाहा इदं० ॥ १६ ॥ ॐ पितृभ्यः स्वाहा इदं०

॥ १७ ॥ ॐ दौवारिकाय स्वाहा इदं० ॥ १८ ॥ ॐ सुग्रीवाय स्वाहा इदं० ॥ १९ ॥ ॐ पुष्पदन्ताय स्वाहा इदं० ॥ २० ॥ ॐ वरुणाय स्वाहा इदं० ॥ २१ ॥ ॐ असुराय स्वाहा इदं० ॥ २२ ॥ ॐ शेषाय स्वाहा इदं० ॥ २३ ॥ ॐ पापाय स्वाहा इदं० ॥ २४ ॥ ॐ रोगाय स्वाहा इदं० ॥ २५ ॥ ॐ सर्पाय स्वाहा इदं० ॥ २६ ॥ ॐ मुख्याय स्वाहा इदं० ॥ २७ ॥ ॐ भल्लाटाय स्वाहा इदं० ॥ २८ ॥ ॐ सोमाय स्वाहा इदं० ॥ ॥ २९ ॥ ॐ सर्पाय स्वाहा इदं० ॥ ३० ॥ ॐ अदितये स्वाहा इदं० ॥ ३१ ॥ ॐ दितये स्वाहा इदं० ॥ ३२ ॥ ॐ अद्भ्यः स्वाहा इदमद्भ्यः ॥ ३३ ॥ ॐ सावित्राय स्वा० इदं० ॥३४॥ ॐ जयाय स्वाहा इदं०॥ ३५ ॥ ॐ रुद्राय स्वाहा इदं० ॥ ३६ ॥ ॐ अर्यम्णे स्वाहा इदं० ॥ ३७ ॥ ॐ सवित्रे स्वाहा इदं० ॥ ३८ ॥ ॐ विवस्वते स्वाहा इदं० ॥ ३९ ॥ ॐ विबुधाधिपाय स्वाहा इदं० ॥ ४० ॥ ॐ मित्राय स्वाहा इदं० ॥ ४१ ॥ ॐ राजयक्ष्मणे स्वाहा इदं० ॥ ४२ ॥ ॐ पृथ्वीधराय स्वाहा इदं० ॥ ४३ ॥ ॐ आपवत्साय स्वाहा इदं० ॥ ४४ ॥ ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे ॥ ४५ ॥ ॐ चरक्यै स्वाहा इदं चरक्यै ॥ १ ॥ ॐ विदार्यै स्वाहा इदं ॥ २ ॥ ॐ पूतनायै स्वाहा इदं० ॥ ३ ॥ ॐ पापराक्षस्यै० इदं० ॥ ४ ॥ ॐ स्कन्दाय स्वाहा इदं स्कन्दाय० ॥ १ ॥ ॐ अर्यम्णे स्वाहा इदं० ॥ २ ॥ ॐ जृम्भकाय स्वाहा इदं० ॥ ३ ॥ ॐ पिलिपिच्छाय स्वाहा इदं पिलिपिच्छाय ॥ ४ ॥ ॐ इन्द्राय स्वाहा इदमिन्द्राय ॥ १ ॥ ॐ अग्नये स्वाहा इदमग्नये ॥ २ ॥ ॐ यमाय स्वाहा इदं० ॥ ३ ॥ ॐ निर्ऋतये स्वाहा इदं० ॥ ४ ॥ ॐ वरुणाय स्वाहा इदं० ॥ ५ ॥ ॐ वायवे स्वाहा इदं० ॥ ६ ॥ ॐ कुबेराय स्वाहा इदं० ॥ ७ ॥ ॐ ईशानाय स्वाहा इदमीशानाय ॥ ८ ॥ ॐ ब्रह्मणे स्वाहा इदं० ॥ ९ ॥ ॐ अनन्ताय स्वाहा इदमनन्ताय० ॥ १० ॥ ॐ उग्रसेनाय स्वाहा इदं० ॥ १ ॥ ॐ डामराय० इदं० ॥ २ ॥ ॐ महाकालाय० इदं० ॥ ३ ॥ ॐ अश्विभ्यां स्वाहा इदं० ॥ ४ ॥ ॐ दुर्गायै स्वाहा इदं दुर्गायै ॥ ५ ॥ ॐ अद्य कृतेनानेन समित्तिलपायसाज्यहोमेन शिख्यादय इन्द्रादयश्च देवाः प्रीयन्तामिति जलमुत्सृजेत् । अथ प्रधानवास्तुदेवहोमः । ॐ इहरतिरिहरमध्वमिह

धृतिरिहस्वधृतिस्स्वाहा ॥ १ ॥ इदमग्नये न मम ॥ १ ॥ ॐ ध्रुवस्थ्ूणंध्रुवंमाग्रेधुरुणोमातरुंधयन् ॥ रायस्पोषंमुस्मासुदीधरुत्स्वाहा ॥ इदमग्नये न मम ॥ २ ॥ इत्याज्याहुतिद्वयं हुत्वा ॥ ततो वास्तोष्पतये तैरेव समित्तिलपायसाज्यैरष्टोत्तरशतमाहुतीर्जुहुयाच्चतुर्भिर्मन्त्रैस्तत्रैकैकेन च मन्त्रेण सप्तविंशतिराहुतयः, इत्यष्टोत्तरशतम् । तद्यथा ॐ वास्तोष्पते इति चतुर्णां वसिष्ठ ऋषिर्वास्तोष्पतिर्देवता त्रयाणां त्रिष्टुप् छन्दोऽन्त्यस्य गायत्री च्छन्दो होमे विनियोगः । ॐ वास्तोष्पते प्रतिजानीह्यस्मान्त्स्वावेशोऽअनमीवोभवानः ॥ यत्वेमहेप्प्रतितन्नोजुषस्व शन्नोभवद्विपदेशञ्चतुष्पदे स्वाहा ॥ १ ॥ इदं वास्तोष्पतये० ॥ २७ ॥ ॐ वास्तोष्पतेप्रतरणोनऽएधिगयस्फानोगोभिरश्वेभिरिन्दो ॥ अजरासस्तेसख्येस्यामपितेवपुत्रान्प्रतितन्नोजुषस्वशन्नोभवद्विपदेशञ्चतुष्पदेस्वाहा ॥ २ ॥ इदं वास्तोष्पतये ॥ २७ ॥ ॐ वास्तोष्पतेशग्मयासुछस्सदातेसक्षीमहिरण्वयागातुमत्या ॥ पाहिक्षेमऽउतयोगेवरन्नोयूयंपातस्वस्तिभिःसदानःस्वाहा ॥ ३ ॥ इदं वास्तोष्पतये० ॥ २७ ॥ ॐ अमीवहावास्तोष्पतेविश्वारूपाण्याविशन् ॥ सखासुशेवऽएधिनःस्वाहा ॥ ४ ॥ इदं वास्तोष्पतये० ॥ २७ ॥ १०८ ॥ ततः स्थालीपाकेन षडाहुतयः । ॐ अग्निमिन्द्रं बृहस्पतिं विश्वान्देवानुपह्वये । सरस्वतीं च वाजिनं वास्तु मे दत्त वाजिनः स्वाहा । इदमग्नये इन्द्राय बृहस्पतये विश्वेभ्यो देवेभ्यः सरस्वत्यै वाजिने च न मम ॥ १ ॥ ॐ सर्प्पदेवजनान्त्सर्वान्हिमवन्तं सुदर्शनम् । वसूंश्च रुद्रानादित्यानीशानं जगदैः सह । एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा । इदं सर्प्पदेवजनेभ्यो हिमवते सुदर्शनाय वसुभ्यो रुद्रेभ्य आदित्येभ्य ईशानाय जगदेभ्यश्च न मम ॥ २ ॥ ॐ पूर्वाह्णमपराह्णञ्च उभौ मध्यन्दिना सह । प्रदोषमर्द्धरात्रञ्च व्युष्टां देवीम्महापथाम् । एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा । इदं पूर्वाह्णायापराह्णाय प्रदोषाय अर्धरात्राय व्युष्टयै देव्यै महापथायै न मम ॥ ३ ॥ ॐ कर्त्तारं च विकर्तारं विश्वकर्माणमोषधीः ( वनस्पतीन् ) ॥ एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा । इदं कर्त्रे विकर्त्रे विश्वकर्मणे ओषधीभ्यो

वनस्पतिभ्यश्च न मम ॥ ४ ॥ ॐ धातारं च विधातारं निधीनां च पतिं सह । एतान्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा । इदं धात्रे विधात्रे निधीनां पतये च न मम ॥ ५ ॥ ॐ स्योनꣳशिवमिदं वास्तुदत्त ब्रह्मप्रजापतीन् सर्वांश्च देवताः स्वाहा । इदं ब्रह्मणे प्रजापतये सर्वाभ्यो देवताभ्यश्च न मम ॥ ६ ॥ ततो वास्तोष्पते इत्युक्तैश्चतुर्भिर्मन्त्रैरेकेन वक्ष्यमाणेन च प्रतिमन्त्रमेकैकं घृताक्तं बिल्वं तद्बीजं वा जुहुयात ॥ ४ ॥ अथ पञ्चमं घृताक्तबिल्वं गृहीत्वा ॐ वास्तोष्पते ध्रुवास्थूणामिति मन्त्रस्य वसिष्ठ ऋषिर्वास्तोष्पतिर्देवता बृहती छन्दो होमे विनियोगः । ॐ वास्तोष्पते ध्रुवास्थूणांꣳसत्रꣳसोम्यानाद्रप्सभेत्तापुरांशश्वतीनामिन्द्रोमुनीनांसखाशन्नोभवाद्विपदेशंचतुष्पदेस्वाहा ॥ इदं वास्तोष्पतये० ॥ ५ ॥ इति हस्तेन जुहुयात ॥ ततः ॥ ॐ अघोरेभ्योऽथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यः सर्वशर्वेभ्यो नमस्तेऽअस्तु रुद्ररूपेभ्यः ॥ १ ॥ इत्यघोरमन्त्रेण तिलाज्येनाष्टोत्तरसहस्रमष्टोत्तरशतं वा वास्तुमर्मसन्धानाय जुहुयुः । ततः शिख्यादिभ्यः पुनस्तत्तन्नाममन्त्रेण प्रणवादिस्वाहान्तेन यथाशक्त्याज्याहुतीः प्रत्येकं हुत्वा शिख्यादीन्पञ्चोपचारैः संपूज्य ततो रक्षोघ्नपावमानसूक्ताभ्यां रक्तत्रिसूत्र्या प्रासादं वेष्ट्य[1] परितो जलदुग्धयोः पृथगविच्छिन्ने धारे दद्यात ॥ ततः पीठे पूजितां हैमीं वास्तुप्रतिमां दधिदूर्वासप्तधान्यशैवालगन्धाक्षतपुष्पयुतेऽपक्वमृद्भाण्डे

---

१ अत्र "परिवेष्ट्य"इति शुद्धम् । अव्ययपूर्वपदाभावे ल्यप् चिन्त्यः। २अत्र मूलग्रन्थकारैः पण्डितप्रवरैः प्रासादं परितो रक्तसूत्रवेष्टनस्य,धारादानस्य,गर्ते वास्तुप्रतिमास्थापनस्य,मन्दिरनिर्माणविधौ जातस्य जीवहिंसादिरूपपापस्य प्रायश्चित्तार्थं क्षमापनस्य च कश्चिद् विशेषो विधिर्नालेखि। प्रधानश्च सोऽत्र प्रतिष्ठायां, ततोऽत्र टिप्पण्यां लिख्यते तद्विधानं ससमाचारम् । तद् यथा--सपत्नीको यजमानः प्रासादम् (देवमन्दिरम्)प्रागादितस्त्रिसूत्र्या कुंकुमाक्तया पावमानरक्षोघ्नसूक्ताभ्या (सूक्तसंग्रहे वक्ष्यमाणाभ्याम्) मीशानकोणादारभ्य त्रिः शनैर्वेष्टयेत्। छिन्ने सूत्रे अशुभम् । ततो दुग्धपूर्णया जलपूर्णया च सस्तनकुम्भ्या (गङ्गासागरनाम्न्या) यद्वा कुंकुम-गन्धा-क्षत-पुष्प-फल-कुश-दूर्वा-पञ्चपल्लव-सर्वौषधि-पञ्चरत्नादियुक्तेन पृथग् जल-दुग्धपूरितेन तलस्थसच्छिद्रेण कृतस्वस्तिकेन कलशेन सूक्तद्वयं(पूर्वोक्तम्) पठन् धाराद्वयमविच्छिन्नं युगपत् पृथक् पृथग् वा, ईशानकोणादारभ्य प्रदक्षिणक्रमेण दद्यात्॥ अत्र ध्वजपताकोच्छ्रयणे च केचिदाहुस्तत्प्रमाणं--

-तु "**कुण्डसिद्धयादिग्रन्थेषूक्तम्**" द्रष्टव्यमत्र विशेषानुक्तेः। एषु इन्द्रादीन् सम्पूजयेदित्याचारः। ततो यजमानो नवधा नवधा, चतुष्षष्टिधा वा विभक्तस्य प्रासादस्य प्राग्भित्तेराग्नेयकोणे आकाशपदे (देवपदगणनया अष्टमे अग्निकोणस्थितपदपूर्वार्द्धे, एतत् सदैवे वास्तुमण्डलचक्रे द्रष्टव्यं, कोणोत्तरार्द्धस्थिताद् धूम्रवर्णाद् वायुपदात् पूर्वे कृष्णवर्णे, आकाशदेवताके पदे) जानुदघ्नमवटं खात्वा (जानुप्रमाणं गम्भीरं गर्तं कृत्वेत्यर्थः) तं गोमयेनोपलिप्य शुक्लचन्दन-पुष्पाक्षतादिभिरलंकृत्य सप्तधान्यं, दधि, ओदनं, दर्वां च तत्र प्रक्षिप्य, नूतनकुम्भं जलपूर्णं कृतस्वस्तिकं गन्धपुष्पमालादिभिरर्चितं हस्तद्वयेनादाय जानुभ्यामवनीं गत्वा "**ॐ नमो वरुणाय**" इति मन्त्रेण तत्कलशजलेन अन्येन च पूर्वतः प्रस्तुतेन पार्श्वे निहितेन प्रचुरजलेनैकवारमेव त्वरया गर्तं पूरयेत्। **न्यूने जले अशुभम्। तत्र जलस्य दक्षिणावर्तेन भ्रमणं पुष्पाणां चोर्ध्वमुखत्वं सकृदेव जलनिक्षेपेण गर्तपूरणं शुभम्। वैपरीत्ये अशुभमिति सम्प्रदायः॥** ततो मृन्निर्मितपेटिकां (करी-कुलडीति मरुदेशे प्रसिद्धाम्) अपक्वामर्थप्रमाणां कृत्वा (हस्तेनैव, नतु कुलालचक्रेण निष्पादितां तस्या आसुरसंज्ञत्वात्, तथा चोक्तं **कर्मप्रदीपे**- "कुलालचक्रघटितं मृन्मयं पात्रमासुरम्" इति) तस्यां सप्तधान्य-दध्योदन-शैवाल-फल-पुष्प-हिरण्यानि प्रक्षिप्य, वास्तुपीठस्थमध्यकलशे तन्मण्डलादुत्तरतः स्थापिते कलशे वा प्रपूजितां वास्तुप्रतिमां मङ्गलतूर्यवाद्यघोषेण आनीय, तस्यां संस्थाप्य, सम्पूज्य गन्धादिभिः, पुष्पाञ्जलिं दत्त्वा प्रार्थयेत्॥ "पूजितोऽसि मया वास्तो होमाद्यैरर्चनैः शुभैः। प्रसीद पाहि विश्वेश देहि प्रासादजं फलम्। नमस्ते वास्तुपुरुष भूशय्याभिरत प्रभो। प्रासादं भुक्तिमुक्त्यादिसमृद्धं कुरु सर्वथा। यावच्चन्द्रो नगाः सूर्यस्तिष्ठन्ति प्रतिपादिताः। तावत्त्वयाऽत्र देवेश स्थेयं भक्तानुकम्पया। प्रार्थयामीत्यहं देव प्रासादस्याधिपस्तु यः। प्रायश्चित्तप्रसङ्गेन शालार्थे यन्मया कृतम्। मूलच्छेदं तृणच्छेदं कृमिकीटनिपातनम्। हननं जलजीवानां भूमौ शस्त्रेण घातनम्। अनृतं भाषितं यच्च किंचिद् वृक्षस्य पातनम्। एतत्सर्वं क्षमस्वेदं यन्मया दुष्कृतं कृतम्। शालार्थे यत्कृतं पापमज्ञानेनाथ चेतसा। तत्सर्वं क्षम्यतां देव प्रासादं हि शुभं कुरु॥" ततः पेटिकामाच्छाद्य हस्तद्वयेनादाय तस्मिन् गर्ते तां पेटिकां शनैर्निक्षिपेत्। तत्र मन्त्रः "ॐ सशैलसागरां पृथ्वीं यथा वहसि मूर्धनि। तथा मां वह कल्याण सम्पत्सन्ततिभिः सह" ततः तथैव मृदा गर्तं पूरयेत् "मृदाधिक्ये शुभं प्रोक्तं, साम्ये मध्यं प्रकीर्तितम्। न्यूनत्वे त्वशुभं ज्ञेयं गर्ते पूर्णे तया मृदा"॥ ततो गर्तोपरि भूमिं समां कृत्वा गोमयेनोपलिप्य नाममन्त्रेण सम्पूज्य तत्र जलपूर्णं कृतस्वस्तिकं पंचपल्लवपुष्पमालादिभिरलंकृतं कलशमेकं धान्यराशौ संस्थाप्य तदुपरि घृतेन दीपं प्रज्वाल्य स्थापयेदित्याचारः। अत्र कर्मणि आदावन्ते च स्वस्तिपुण्याहवाचनं कार्यम्। शिल्पिनश्च वस्त्रादिभिः सन्तोष

संस्थाप्य तत्काष्ठपेटिकायां पिधाय चतुःषष्टिधा भाजितप्रासादाग्नेयकोणे कोणपदादुत्तरे आकाशपदे जानुमात्रं गर्तं कृत्वा ॐ नमो वरुणाय इति जलेनापूर्य सप्तधान्यगन्धपुष्पाणि प्रक्षिप्य पेटिकां तत्र निधाय ॥ यावच्चन्द्रो नगाः सूर्यस्तिष्ठन्ति प्रतिपादिताः ॥ तावत्त्वयात्र देवेश स्थेयं भक्तानुकम्पया ॥ १ ॥ इति प्रार्थ्य गर्तं तयैव मृदा पूरयेत् ॥ मृदाधिक्ये शुभम् ॥ इति वास्तुदेवानां होमः ॥ इति वास्तुदेवताभ्यो हुत्वा योगिनीभ्यो जुहोत्याचार्यः । ॐ दिव्ययोगिन्यै स्वाहा इदं० १ । ॐ महायोगिन्यै स्वाहा० २ । ॐ सिद्धयोगिन्यै स्वाहा० ३ । ॐ गणेश्वर्यै० ४ । ॐ प्रेताक्ष्यै० ५ । ॐ डाकिन्यै० ६ । ॐ काल्यै० ७ । ॐ कालरात्र्यै० ८ । ॐ निशाचर्यै० ९ । ॐ कंकार्य्यै० १० । ॐ रौद्रवेताल्यै० ११ । ॐ भूतल्यै० १२ । ॐ भूतडामर्य्यै० १३ । ॐ ऊर्द्धकेश्यै० १४ । ॐ विरूपाक्ष्यै० १५ । ॐ शुष्काङ्ग्यै० १६ । ॐ नरभोजिन्यै० १७ । ॐ भट्टार्य्यै० १८ । ॐ वीरभद्रायै० १९ । ॐ धूम्राक्ष्यै० २० । ॐ कलिप्रियायै० २१ । ॐ राक्षस्यै० २२ । ॐ घोररक्ताक्ष्यै० २३ । ॐ विरूपाक्ष्यै० २४ । ॐ भयङ्कर्यै० २५ । ॐ चाण्डिकायै० २६ । ॐ वीरकौमार्य्यै० २७ । ॐ वाराह्यै० २८ । ॐ मुण्डधारिण्यै० २९ । ॐ साम्रुर्य्यै ३० । ॐ रौद्रझङ्कारभाषिण्यै० ३१ । ॐ त्रिपुरान्तकायै० ३२ । ॐ भैरवध्वंसिन्यै० ३३ । ॐ क्रोधदुर्मुख्यै० ३४ । ॐ प्रेतवाहिन्यै० ३५ । ॐ खट्वाङ्ग्यै० ३६ । ॐ दीर्घलम्बोष्ठ्यै० ३७ । ॐ मालिन्यै० ३८ । ॐ मन्त्रयोगिन्यै० ३९ । ॐ कालाग्निग्रहण्यै० ४० । ॐ चक्र्यै० ४१ । ॐ कङ्काल्यै० ४२ । ॐ भुवनेश्वर्य्यै० ४३ । ॐ कटक्यै० ४४ । ॐ कटिन्यै० ४५ । ॐ रौद्र्यै० ४६ । ॐ यमदूत्यै० ४७ । ॐ करालिन्यै०

—येदिति **लौकिकव्यवहारः** ।आचार्याय गामन्येभ्योऽपि विप्रेभ्यो दक्षिणा देया। यजमानं सपरिवारमभिषिच्य नीराजनं कारयेत्तस्य सुवासिन्या । विधानं त्विदं मयाऽतिसंक्षेपेण दिङ्मात्रमिह दर्शितं समयाल्पत्वात्, परकीयपुस्तके प्रपञ्चप्राचुर्यस्यानावश्यकत्वाच्च । विस्तरतस्तु वैशद्यं चास्य मया स्वीये स्मार्तवल्लभान्तर्गते **"वैदिकवास्तुशान्तिप्रयोगे"** सुस्पष्टमुपपादितमिति तत् तत्रावलोकनाय सम्प्रार्थ्यन्ते सुधियः सहृदयाः प्रणतिप्रवणेन मया **वैद्येन व्रजवल्लभशर्मणा विसाऊवास्तव्येनेति शम्** ॥

४८। ॐ घोराक्ष्यै० ४९। ॐ कार्मुक्यै० ५०। ॐ काकदृष्ट्यै० ५१। ॐ अधोमुख्यै० ५२। ॐ मुण्डाग्रधारिण्यै० ५३। ॐ व्याघ्र्यै० ५४। ॐ किङ्किण्यै० ५५। ॐ प्रेतभक्षिण्यै० ५६। ॐ कालरूपायै० ५७। ॐ कामाख्यायै० ५८। ॐ डङ्ग्रिण्यै० ५९। ॐ योगपीठायै० ६०। ॐ महालक्ष्म्यै० ६१। ॐ एकवीरायै० ६२। ॐ कालरात्र्यै० ६३। ॐ पीठिकायै स्वाहा इदं० ६४। अनेन होमेन चतुःषष्टियोगिन्यः प्रीयन्ताम् ॥ ६४॥ अथ क्षेत्रपाल होमः ॥ ॐ अजराय स्वाहा इदमजराय १। ॐ आपकुम्भाय० २। ॐ इन्द्रस्तुतये० ३। ॐ ईडाचाराय० ४। ॐ उक्तसंज्ञाय० ५। ॐ ऊष्मादाय० ६। ॐ ऋषिसूदनाय० ७। ॐ ॠमुक्ताय० ८। ॐ क्लृप्तकेशाय० ९। ॐ क्लृप्तकाय० १०। ॐ एकदंष्ट्रकाय० ११। ॐ ऐराव ताय० १२। ॐ ओघबन्धवे १३। ॐ ओषधीशाय० १४। ॐ अञ्जनाय० १५। ॐ अस्त्रवाराय० १६। ॐ कवलाय० १७। ॐ खरुखानलाय० १८। ॐ गामुख्याय० १९। ॐ घण्टादाय० २०। ॐ ङमनसे० २१। ॐ चण्डवारणाय० २२। ॐ घटाटोपाय० २३। ॐ जटिलाय० २४॥ ॐ झञ्झी वाय० २५। ॐ ञडश्वराय० २६। ॐ टङ्कपाणये० २७। ॐ ठानबन्धवे० २८। ॐ डामराय० २९। ॐ ढक्कारवाय० ३०। ॐ णवार्णवाय० ३१। ॐ त डिद्देहाय० ३२। ॐ थिराय० ३३। ॐ दन्तुराय० ३४। ॐ धनदाय० ३५। ॐ नतिक्तान्ताय० ३६। ॐ प्रचण्डकाय० ३७। ॐ फट्काराय० ३८। ॐ वीरसङ्घाय० ३९। ॐ मृगाय० ४०। ॐ मेघभासुराय० ४१। ॐ युगान्ताय० ४२। ॐ रौद्रवाय० ४३। ॐ लम्बोष्ठाय० ४४। ॐ वस वाय० ४५। ॐ शूकनन्दाय० ४६। ॐ षडालाय० ४७। ॐ सुनाम्ने स्वाहा० ४८। ॐ हुंबुकाय स्वाहा इदं० ४९ ॥ ( एतानि एकोनपञ्चाशत्क्षे त्रपालनामानि ) अनेन होमेन क्षेत्रपालाः प्रीयन्ताम् ॥ अथ मातृकाहोमः ॥ ॐ गौर्यै स्वाहा १। पद्मायै० २। शच्यै० ३। मेधायै० ४। सावित्र्यै० ५। विजयायै० ६। जयायै० ७। देवसेनायै० ८। स्वधायै० ९। स्वाहायै० १०। मातृभ्यः स्वाहा ११। लोकमातृभ्यः० १२। धृत्यै० १३। पुष्ट्यै० १४। तुष्ट्यै स्वाहा १५। कुलदेवतायै स्वाहा १६॥ इति मातृणां होमः ॥ अथाष्टवसुहोमः ॥ ॐ ध्रुवाय स्वाहा १। ॐ धराय०

१ " वसुर्गणदेवताविशेषः " इत्यमरः। स चाष्टसंख्यातो यथाक्रमश्चोक्तः शब्दकल्पद्रुमे—धरो ध्रुवश्च सोमश्च विष्णुश्चैवानिलोऽनलः। प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ क्रमात्स्मृताः॥

२ । ॐ सोमाय० ३ । ॐ आपाय० ४। ॐ अनिलाय० ५ । ॐ नलाय० ६ । ॐ प्रत्यूषाय० ७ । ॐ प्रभासाय स्वाहा ८ ॥ इत्यष्टवसुहोमः ॥ ॐ धात्रे स्वाहा० १। ॐ अर्यम्णे० २। ॐ मित्राय० ३ । ॐ रुद्राय० ४। ॐ वरुणाय० ५। ॐ सूर्याय० ६। ॐ भगाय० ७। ॐ विवस्वते० ८। ॐ पूष्णे० ९। ॐ सवित्रे० १०। ॐ त्वष्ट्रे० ११। ॐ विष्णवे स्वाहा १२ ॥ एते द्वादशादित्याः ॥ ॐ वीरभद्राय स्वाहा १ । ॐ शम्भवे० २। ॐ गिरिशाय० ३। ॐ अजैकपदे० ४। ॐ अहिर्बुध्न्याय० ५ ।ॐ पिनाकिने० ६।ॐ अपराजिताय० ७। ॐ भुवनाधीश्वराय० ८ । ॐ कपालिने० ९।ॐ स्थाणवे० १० । ॐ भगाय स्वाहा ११ । इत्येकादश रुद्राः ॥ ॐ आवहाय० १ । ॐ प्रवहाय० २ । ॐ उद्वहाय० ३ । ॐ वहाय ४ । ॐ विवहाय० ५ । ॐ परावहाय ६ । ॐ परिवहाय० ७ ॥ इति सप्तमरुद्गणानां होमः ॥ ॐ ब्राह्म्यै स्वाहा० १ । ॐ माहेश्वर्य्यै० २। ॐ कौमार्य्यै० ३ । ॐ वैष्णव्यै० ४ । ॐ वाराह्यै० ५ । ॐ इन्द्राण्यै स्वाहा ६। ॐ चामुण्डायै० ७ ॥ एताः सप्त मातरः ॥ ॐ मोदाय स्वाहा १ । ॐ प्रमोदाय० २ । ॐ सुमुखाय० ३ । ॐ दुर्मुखाय० ४ । ॐ अविघ्नाय० ५ । ॐ विघ्नकर्त्रे० ६ । एते षड्विनायकाः ॥ अथ पितामहादीनां होमः ॥ ॐ ब्रह्मणे स्वाहा इदं० ८ । ॐ विष्णवे स्वाहा इदं० ८। ॐ रुद्राय स्वहा इदं० ८ । ॐ गणपतये० इदं० ८ । ॐ लक्ष्म्यै स्वाहा इदं० ८। ॐ सरस्वत्यै० ८ । ॐ क्षेत्रपालाय० ८ । ॐ वास्तुपुरुषाय० ८ । ॐ जातवेदसे० इदं० ८ । ॐ विश्वकर्मणे० इदं० ८ । ॐ भूतग्रामाय स्वाहा इदं० ८ इति हुत्वा । सर्वतोभद्रमण्डलदेवताभ्यः शिवप्रतिष्ठायां लिङ्गतोभद्रमण्डलदेवताभ्यश्च होमं कुर्यात् । ततो जपस्य दशांशहोमो गायत्र्या अयुतहोमश्च कार्यः ॥ ततः समिदाज्यचरुयवतिलैः दुग्धशर्करादिसंमिश्रैः श्रीसूक्तादिना लक्ष्मीहोमः प्रधानदेवहोमश्च कार्यः ॥ ( एककुण्डे तु अनेन प्रकारेण होमः कार्यः । पञ्चकुण्डीपक्षे तु प्रधानदेवताहोमश्चतुष्कुण्डेषु कार्यः । नवग्रहादिहोमस्तु आचार्यकुण्डे एव, अन्यकुण्डेषु नैव कर्तव्यः । अन्येषु कुण्डेषु

१ अत्र " आप " इत्यकारान्तशब्दप्रयोगस्तु नितरामशुद्ध इव प्रतिभाति । आद्ययोश्च क्रमभेदः । २ अनलस्थाने नलशब्दपाठश्च प्रामादिक इत्येतत्सर्वं सुधीभिर्विचारणीयम् ।

च अग्निस्थापनादेकतण्डुलमयचरुश्रपणान्तं कर्म कृत्वा प्रधानदेवहोमः कार्यः ) अथ प्रधानदेवहोमः । तत्रादौ विष्णोर्मासूरमयश्चरुः । शिवस्य यवमयचरुर्वा गोक्षीरनीवारचरुं च कृत्वा विष्णवे कृसरं वा श्रपयित्वा ॐ इदं विष्णुरिति मन्त्रेण वा नमो भगवते वासुदेवाय स्वाहा ॥ इति मन्त्रेणाष्टोत्तरसहस्रं वाष्टोत्तरशतं चरुं हुत्वा पुरुषसूक्तेन प्रत्यृचमाज्याहुतिं दश दशैकैकां वा दद्यात् । ततो यवतिलसमिद्भिः पुनर्होमं मूलमन्त्रेण कृत्वा व्याहृतिहोमः कार्यः । मूलमन्त्रस्तु यथा । ॐ नमो भगवते वासुदेवाय स्वाहा ॥ १०८ ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधे पदम् । समूढमस्यपाꣳसुरेस्वाहा ॥ इदं विष्णवे० १००० । १०८ ॥ शिवप्रतिष्ठायां तु प्रधानतया ॐ त्र्यम्बकमिति मन्त्रेण अथवा ॐ शिवाय स्वाहा इदं शिवाय० ॥ ॐ नमः शंभवायचमयोभवायचनमः शङ्करायचमयस्करायचनमः शिवाय च शिवतराय च स्वाहा ॥ इदं शिवाय० ॥ १०८ ॥ इत्यादिभिर्वा ॥ सूर्यस्य गायत्रीमन्त्रेण होमः ॥ दुर्गायाः ॥ ॐ जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः ॥ सनः पर्षद तिदुर्गाणिविश्वानावेवसिन्धुंदुरितात्यग्निः ॥ १ ॥ इति मन्त्रेण होमः ॥ गणपतेः ॥ ॐ गणानान्त्वेति मन्त्रेण होमः । अथवा नाममन्त्रेण होमः कर्त्तव्यः॥ इति प्रधानदेवहोमः ॥ ततो ग्रहादिविश्वकर्मान्तदेवेभ्यः पुनर्होमः कर्त्तव्यः । अयं च सर्वोऽपि ग्रहादिविश्वकर्मान्तपश्चाशद्देवहोमो दिनचतुष्टयं प्रत्यहमावर्त्तनीयः । तदन्ते अग्निपूजनम् । स्थापितदेवतानामुत्तरपूजनं च ॥ ॐ अद्येत्यादि० कृतस्य कर्मणः साङ्गतासिद्ध्यर्थं स्थापितदेवतानां मृडाग्नेश्चोत्तरपूजनं करिष्ये इति संकल्प्य ॥ ॐ अग्नेनयसुपथाराये अस्मान्विश्वानिदेववयुनानिविद्वान् । युयोध्यस्मज्जुहुराणमेनोभूयिष्ठान्तेनमऽउक्तिंविधेम ॥ १ ॥ ॐ मृडाग्नये नमः इति गन्धादिपश्चोपचारैः संपूज्य स्थापितदेवानामुत्तरपूजनम् ॥ ॐ सूर्यादिस्थापित देवताभ्यो नमः गन्धादिपश्चोपचारैः संपूज्य । अनया पूजया मृडाग्निः स्थापितदेवताश्च प्रीयन्ताम् । ततो हुतशेषहविर्द्रव्यं गृहीत्वा ब्रह्मणान्वारब्धः स्विष्टकृद्धोमं कुर्यात् ॥ ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम ॥ ततो घृतेन व्याहृतिहोमः । ॐ भूर्भुवः

स्वरिति क्रमेण प्रजापतिर्ऋषिर्गायत्री छन्दोऽग्निर्देवता प्रजापतिर्ऋषिरुष्णिक् छन्दो वायुर्देवता, प्रजापतिर्ऋषिरनुष्टुप् छन्दः सूर्यो देवता व्याहृति होमे विनियोगः । ॐ भूः स्वाहा इदमग्नये न मम १ । ॐ भुवः स्वाहा इदं वायवे न मम २ । ॐ स्वः स्वाहा इदं सूर्याय न मम ३ । इति व्याहृतिहोमः । ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषांᳬसि प्रमुमुग्ध्यस्मत्स्वाहा ४ । इदमग्नीवरुणाभ्यां० । ॐ सत्वन्नोऽअग्नेवमो भवोती नेदिष्ठोऽअस्याऽउषसो व्युष्टौ ॥ अवयक्ष्वनो वरुणᳬरराणो वीहि मृडीकᳬसुहवोनऽएधि स्वाहा ५ । इदमग्नीवरुणाभ्याम्० । ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्वमयाऽअसि ॥ अयानो यज्ञं वहास्ययानो धेहि भेषजᳬस्वाहा ६ । इदमग्नये अयसे न मम ॥ ॐ येते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ७ । इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम । ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमᳬश्रथाय ॥ अथावयमादित्यव्रते तवानागसोऽअदितये स्याम स्वाहा ८ । इदं वरुणायादित्यायादितये च न मम । ॐ प्रजापतये स्वाहा ९ इदं प्रजापतये न मम । इति नवाहुतीर्जुहुयात् । इति होमकर्म । ततो होमान्ते ग्रहवास्तुयोगिनीक्षेत्रपालादीन्संपूज्य शष्कुलीमाषभक्तदध्याद्युपहारान्धूपदीपपुष्पाक्षतांश्च गृहीत्वा मण्डपाद्बहिरागत्येन्द्रादिलोकपालेभ्यः पूर्वादितस्तूर्यवाद्यगीतपुरःसरं बलीन्दद्यात् ( अथवा अग्न्यायतनस्य समन्ताद्दिक्षु च बलयो देयाः ) । तद्यथा । ( पूर्वे ) । एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधरामरेश । संवीज्यमानोऽप्सरसां गणेन रक्षाध्वरं नो भगवन्नमस्ते ॥ १ ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रᳬहवे हवे सुहवᳬशूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रᳬस्वस्ति नो मघवा धात्विन्द्रः ॥ ॐ इन्द्राय नमः । इन्द्रानुचरेभ्यो नम इति नत्वा ॥ भो इन्द्र दिशं रक्षेमं बलिं भक्ष यजमानस्याभ्युदयं कुरु ॥ १ ॥ ततः ( आग्नेय्याम् ) । एह्येहि सर्वामरहव्यवाह मुनिप्रवीरैरभिजुष्ट देव । तद्देवतालोकगणेन सार्द्धं ममाध्वरं रक्ष विभो नमस्ते ॥ ॐ त्वन्नो

अग्नेतवंदेवपायुभिर्म्मघोनोरक्षतन्वश्चवन्द्य । त्रातातोकस्युतनंयेगवांमुस्यनिंमिषुरक्षमाणस्तवंव्रते । ॐ अग्नये नमः । अग्नेरनुचरेभ्यो नमः
भो अग्ने दिशं रक्षेमं बलिं भक्ष यजमानस्याभ्युदयं कुरु ॥ २ ॥ ततो ( दक्षिणस्याम् ) । एह्येहि वैवस्वत धर्मराज सर्वामरैरर्चित धर्ममूर्ते ।
शुभाशुभाचारकृतस्य साक्षिञ्छिवाय पाहि त्वमितो नमस्ते । ॐ सुगन्नःपन्थांप्रदिंशन्नऽएहिज्योतिंष्मद्धेह्यजरंन्नऽआयुः ॥ अपैतुमृत्युर
मृतंम्मऽआगांद्वैवस्वतोनोऽअभंयंकृणोतुस्वाहा । ॐ यमाय नमः यमस्यानुचरेभ्यो नमः । भो यम दिशं रक्षेमं बलिं भक्ष यजमानस्याभ्युदयं
कुरु ॥ ३ ॥ ( नैर्ऋत्याम् ) । एह्येहि रक्षोगणनायकस्त्वं विशालवेतालपिशाचसंघैः ॥ ममाध्वरं पाहि शुभाधिनाथ लोकेश्वर त्वं भगवन्नमस्ते ॥
ॐ असुंन्वन्तमयंजमानमिच्छस्तेनस्येत्यामन्विहितस्कंरस्य । अन्यमुस्मदिंच्छसातंऽइत्यानमोदेविनिर्ऋतेतुभ्यंमस्तु । ॐ निर्ऋतये नमः । निर्ऋ
त्यनुचरेभ्यो नमः । भो निर्ऋते दिशं रक्षेमं बलिं भक्ष यजमानस्याभ्युदयं कुरु ॥ ४ ॥ ततः ( पश्चिमे ) एह्येहि यादोगणवारिधीनां गणेन
पर्ज्जन्य सहाप्सरोभिः । विद्याधरेन्द्रामरगीयमान पाहि त्वमस्मान्भगवन्नमस्ते ॥ ॐ तत्त्वांयामिब्रह्मंणावन्दंमानुस्तदाशांस्तेयजंमानोह
विर्भिः ॥ अहेडमानोव्वरुणेहबोध्युरुंशꣳसमानऽआयुःप्प्रमोंषीः ॥ ॐ वरुणाय नमः ॥ वरुणस्यानुचरेभ्यो नमः । भो वरुण दिशं रक्षेमं
बलिं भक्ष यजमानस्याभ्युदयं कुरु ॥ ५ ॥ ततो ( वायव्याम् ) एह्येहि यज्ञे मम रक्षणाय मृगाधिरूढः सह सिद्धसंघैः ॥ प्राणाधिपाकार्यकवे
सहाय गृहाण पूजां भगवन्नमस्ते ॥ ॐ आनोंनियुद्भिंःशतिनींभिरध्वरꣳसंहस्त्रिणींभिरुपंयाहियुज्ञम् ॥ व्वायोऽअस्मिन्त्सवंनेमादयस्वयूयं
पांतस्वुस्तिभिःसदांनः ॥ ॐ वायवे नमः । वायोरनुचरेभ्यो नमः । भो वायो दिशं रक्षेमं बलिं भक्ष यजमानस्याभ्युदयं कुरु ॥ ६ ॥ ( उत्तरस्याम् )
एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्धम् ॥ सर्वौषधीभिः सह भूतसंघैर्गृहाण पूजां भगवन्नमस्ते । ॐ व्वुयꣳसोंमव्व्रतेतवुमनंस्त
नूषुबिभ्रंतः ॥ प्रजावंन्तꣳसचेमहि ॥ ॐ कुबेराय नमः । कुबेरानुचरेभ्यो नमः । भो कुबेर दिशं रक्षेमं बलिं भक्ष यजमानस्याभ्युदयं कुरु ॥

॥ ७ ॥ तत (ऐशान्याम्) ॥ एह्येहि विश्वेश्वर नस्त्रिशूलकपालखट्वाङ्गवरेण सार्द्धम् ॥ लोकेश यज्ञेश्वर भूतसंघैर्गृहाण पूजां भगवन्नमस्ते ॥ ॐ तमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धस्वस्तये ॥ २ ॥ ॐ ईशानाय नमः । ईशानानुचरेभ्यो नमः । भो ईशान दिशं रक्षेमं बलिं भक्ष यजमानस्याभ्युदयं कुरु ॥ ८ ॥ (तत ईशानपूर्वयोर्मध्ये) ॥ एह्येहि विश्वाधिपते सुरेन्द्र लोकेन सार्द्धं पितृदेवताभिः ॥ सर्वस्य धाता त्वमितप्रभावः शिवाध्वरं पाहि विभो नमस्ते ॥ ॐ ब्रह्मयज्ञानंप्रथमं० ॥ इति मन्त्रान्ते ॐ ब्रह्मणे नमः । ब्रह्मणोऽनुचरेभ्यो नमः । भो ब्रह्मन्दिशं रक्षेमं बलिं भक्ष यजमानस्याभ्युदयं कुरु ॥ ९ ॥ ततो निर्ऋतिवरुणयोर्मध्येऽधः । एह्येहि पातालधराधरेन्द्र नागाङ्गनाकिन्नरगीयमान ॥ रक्षोनरेन्द्रामरलोकसार्द्धमनन्त रक्षाध्वरमस्मदीयम् ॥ ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाः ॥ ॐ अनन्ताय नमः । अनन्तानुचरेभ्यो नमः । भो अनन्त दिशं रक्षेमं बलिं भक्ष यजमानस्याभ्युदयं कुरु ॥ १० ॥ इति दिक्पालबलिः ॥ ततः क्षेत्रपालपूजनं बलिदानं च । एकस्मिन्पात्रे दधि-माष-भक्त-सिन्दूर-कज्जल-दीप-द्रव्य-हरिद्रा-कुङ्कुम-पताकायुतं बलिं कृत्वा ॥ ॐ नहिस्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरएतारमग्नेः ॥ एमेनमवृधन्नमृताऽअमर्त्यंवैश्वानरंक्षेत्रजित्यायदेवाः ॥ ॐ क्षेत्रपालाय नमः इति षोडशोपचारैः संपूज्य ओ३म् नमः क्षेत्रपालस्त्वं भूतप्रेतगणैः सह । पूजां बलिं गृहाणेमं सौम्यो भवतु सर्वदा ॥ १ ॥ आयुरारोग्यं मे देहि निर्विघ्नं कुरु सर्वदा । इति प्रार्थयेत । ततो बलिं गृहीत्वा ॐ क्षेत्रपाल महाबाहो महाबलपराक्रम ॥ क्षेत्राणां रक्षणार्थाय बलिं गृह्ण नमोऽस्तु ते ॥ १ ॥ ॐ क्षेत्रपालाय नमः । ॐ क्षेत्रपालानुचरेभ्यो नमः । क्षेत्रपालाय साङ्गाय भूत-प्रेत-पिशाच-डाकिनी-वेतालादि-परिवारयुताय सायुधाय सशक्तिकाय सवाहनाय इमं सदीपमाषभक्तबलिं समर्पयामि । भो क्षेत्रपाल क्षेत्रं रक्षेमं बलिं सदीपं दधि-माष-भक्त-सिन्दूर-कज्जल-द्रव्य-सहितं गृहाण यजमानस्याभ्युदयं कुरु । आयुःकर्ता, क्षेमकर्ता, शान्तिकर्ता, पुष्टिकर्ता, तुष्टिकर्ता, निर्वि

घ्नकर्ता, वरदो भव । अनेन बलिदानेन क्षेत्रपालः प्रीयताम् ॥ १ ॥ ततः ॐ भूतायत्वानारातयेस्वरभिविख्येषंदृꣳहन्तान्दुर्याःपृथिव्यामुर्वन्त
रिक्षमन्वेमिपृथिव्यास्त्वानाभौसादयाम्यदित्याऽउपस्थेऽग्नेहव्यꣳरक्ष ॥ १ ॥ ॐ हिङ्कारायस्वाहाहिंकृतायस्वाहाक्रन्दतेस्वाहावक्रन्दायस्वाहा
प्रोथतेस्वाहाप्रप्रोथायस्वाहागन्धायस्वाहाघ्रातायस्वाहानिविष्टायस्वाहोपविष्टायस्वाहासन्दितायस्वाहावल्गतेस्वाहासीनायस्वाहाशयानायस्वाहास्व
पतेस्वाहाजाग्रतेस्वाहाकूजतेस्वाहाप्रबुद्धायस्वाहाविजृम्भणायस्वाहाविवृत्तायस्वाहासꣳहानायस्वाहोपस्थितायस्वाहायनाय स्वाहा प्रायणायस्वाहा
॥ २ ॥ अनेन मन्त्रेण क्षेत्रपालबलिनेतारं प्रति तण्डुलान्प्राक्षिपेत् ॥ अनवेक्ष्यमाणेन दुर्ब्राह्मणेन बलिं नीत्वा चतुष्पथे निक्षिपेत् ॥ इति क्षेत्रपालबलिः ॥

अथ भूतेभ्यश्चतुष्पथे बलिदानम् । शूर्पमध्ये पिष्टमयदीप-माषान्न-दध्योदन-हरिद्रा-सिंदूर-कज्जल-गन्ध-रक्त-पुष्पाणि संस्थाप्य गीतवादि
त्रकुटुम्बजनसहितश्चत्वरे गत्वा तत्र गन्धपुष्पाद्यर्चितं शूर्पं स्थापयेदेभिर्मंत्रैः । ॐ बलिं गृह्णंतु ते देवा आदित्या वसवस्तथा ॥ मरुत
श्चाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ॥ १ ॥ जृम्भकाः सिद्धगन्धर्वा मालाविद्याधरा नगाः ॥ असुरा यातुधानाश्च पिशाचा डाकिनीगणाः
॥ २ ॥ शक्तयो यक्षवेताला ये च विघ्नविनायकाः ॥ जगतां शान्तिकर्तारः क्रमाढ्याश्चैव मातरः ॥ ३ ॥ मा विघ्नं मा च मे रोगो मा स
न्तु परिपन्थिनः ॥ सौम्या भवन्तु तृप्ताश्च भूताः प्रेताः सुखावहाः ॥ ४ ॥ ते सर्वे तृप्तिमायान्तु रक्षां कुर्वन्तु मेऽध्वरे ॥ देवताभ्यः पितृभ्यश्च
भूतेभ्यः सह जन्तुभिः ॥ ५ ॥ एतत्स्थानाधिवासिभ्यः प्रयच्छामि बलिं नमः ॥ त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ॥ ६ ॥
ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्वन्तु तानि मे ॥ देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥ ७ ॥ ऋषयो मुनयो गावो
देवमातर एव च ॥ एते ममाध्वरे रक्षां कुर्वन्तु प्रमुदान्विताः ॥ ८ ॥ एतेभ्यो भूतेभ्यो गन्धादिकं वः स्वाहा ।
इति बलिं दत्त्वा नत्वा गीतादियुतो मण्डपसमीपमागत्य पादप्रक्षालनमाचमनं च कुर्यात् ॥ इति बलिदानप्रकारः । अथ यूपारोपणविधिः ।

आचार्यः पूर्वकुण्डात्पूर्वतो मण्डपात्पूर्वतो वा पादत्रयमितां भूमिं त्यक्त्वा तत्र यूपस्थानं करोत्यथवा प्रासादादीशानभागे षोडशहस्तान्तरमिते दशहस्तमितान्तराले वा यूपस्थापनं पूजनं च करोति । तत्र काष्ठेन अरत्निमात्रं खातं कृत्वा यूपस्तुतिः । यूपस्त्वं निर्मितः पूर्वं यज्ञभागः सुरेश्वरैः ॥ स्तुतः प्रासादरक्षार्थं पूजां पुष्पबलिं तथा । गृहीत्वा सुस्थिरो भूत्वा यजमानोदयं कुरु ॥ ततः पूर्वोक्तलक्षणं यूपं हरिद्रातैलाभ्यक्तं कृत्वा शांतिकुम्भोदकेन स्नापयित्वा घृतेनाभ्यज्य पुष्पमालादिनाभ्यर्च्य सर्षपगोरोचनगुग्गुलुदूर्वानिंबपत्राण्येतेषां पोटलिकाम् ॥ ॐ यदाबध्नंदाक्षायणाहिरण्यꣳशतानीकायसुमनस्यमानाः ॥ तन्मऽआबध्नामिशतशारदायायुष्मान्जरदष्टिर्यथासम् ॥ इति मन्त्रेण बद्ध्वा । ॐ युवासुवासाः परिवीतआगात्सउश्रेयान्भवतिजायमानः ॥ तंधीरासः कवयउन्नयंतिस्वाध्योमनसादेवयंतः । इति मत्रान्ते वस्त्रेणावेष्ट्य ॐ यूपव्रस्काउतयेयूपवाहाश्चषालंयेऽअश्वयूपायतक्षति । येचार्वतेपचनꣳसंभरंत्युतोतेषामभिगूर्तिर्न्नऽइन्वतु ॥ इति मंत्रेण यूपमालभ्य ॥ ॐ उच्छ्रयस्ववनस्पतेवर्ष्मन्पृथिव्याअधि ॥ सुमितीमीयमानोवर्चोधायज्ञवाहसे ॥ १ ॥ इत्युच्छ्रित्य ॥ यूपगर्तेऽक्षतपुष्पदर्भान्प्रक्षिप्य यूपमुदकेन प्रोक्ष्य ॐ ध्रुवासीति मंत्रेण रोपयेत् ॥ ॐ ध्रुवासिध्रुवोयंय्यजमानोऽस्मिन्नायतनेप्रजयापशुभिर्भूयात् ॥ घृतेनद्यावापृथिवीपूर्य्येथामिंद्रस्यच्छदिरसिविश्वजनस्यच्छाया ॥ सुप्रतिष्ठो भव चिरकालं स्थिरो भव यजमानस्यायुर्वर्द्धनस्त्वं भव सर्वसौख्यप्रदो भव । अनेन मंत्रेण मृद्भिर्गर्तमापूर्य दंडेन यूपं दृढीकुर्यात् ॥ यथा यतस्ततो न चलति तथा निधेयः । ततः । यज्ञायंज्ञावो अग्नयेगिरागिराचदक्षसे ॥ प्रप्रवयममृतंजातवेदसम्प्रियम्मित्रन्नशꣳसिषम् । इति मंत्रेण मूले जलमभिषिच्य यूपं कुङ्कुमाक्तं कृत्वा गंधपुष्पधूपदीपनैवेद्यपूगीफलदक्षिणाभिः संपूज्य ततोऽस्य दक्षिणपार्श्वे यूपदेवतार्थं मण्डलं परिकल्पयेत् ॥ तत्र क्रमः ॥ प्रथमं स्थण्डिलं हस्तमात्रं कार्यं तस्योपरिवस्त्रास्तरणवस्त्रोपरि षट् पूर्वायता रेखास्तथैवोत्तरायताः षड्रेखाः कार्याः ॥ एवं कृते पञ्चविंशतिकोष्ठात्मकं व्रीहिभिर्मण्डलं परिकल्पनीयम् ॥ तेषु ब्रह्मादीन्पूजयेत् ( मध्यकोष्ठे

ब्रह्माणम् ॥ ( उत्तरे ) सोमम् ॥ ( ऐशान्याम् ) शिवम् ॥ ( पूर्वे ) इन्द्रम् ॥ ( आग्नेय्याम् ) अग्निम् ॥ ( दक्षिणे ) यमम् ॥ ( नैर्ऋत्याम् ) निर्ऋतिम् ॥ ( पश्चिमे ) वरुणम् ॥ ( वायव्याम् ) वायुम् ॥ ( वायुसोमयोर्मध्ये ) अष्टवसून् ॥ ( सोमेशानयोर्मध्ये ) एकादश रुद्रान् ॥ ( ईशानपूर्वयोर्मध्ये ) द्वादशादित्यान् ॥ ( इन्द्राग्न्योर्मध्ये ) अश्विनौ ॥ ( आग्नेयदक्षिणयोर्मध्ये ) सप्त मातॄः ॥ ( यमनिर्ऋत्योर्मध्ये ) ॥ गणपतिम् ॥ ( निर्ऋतिवरुणयोर्मध्ये ) नागान्भूतानि च ॥ ( वरुणवाय्वोर्मध्ये ) यक्षरक्षांसि ॥ ततो ब्रह्मत उदीच्याः प्रादक्षिण्येन मध्यपङ्क्तौ । अष्टौ वृषभध्वजान् ॥ १ ॥ साध्यान् ॥ २ ॥ नारायणम् ॥ ३ ॥ पितॄन् ॥ ४ ॥ यमम् ॥ ५ ॥ मृत्युरोगान् ॥ ६ ॥ मरुतः ॥ ७ ॥ चित्रगुप्तम् ॥ ८ ॥ ततो ब्रह्मणः पादमूले पृथिवीम् ॥ एवं पञ्चविंशतिसंख्याकाः देवताः स्वस्वनाममन्त्रेण प्रणवव्याहृतिसहितेन मण्डले संस्थाप्य ॥ ॐ मनोजूतिर्जुषता० इति प्रतिष्ठां कृत्वा यथानाममन्त्रेण प्रत्येकं पूजयेत् ॥ अथाभिषेकः ॥ ॐ असंख्याता सहस्राणियेरुद्राऽअधिभूम्याम् । तेषांᳬसहस्रयोजनेवधन्वानितन्मसि ॥ १ ॥ ॐ इमंमेगंगेयमुनेसरस्वतिशतुद्रिस्तोमंसचतापरुष्णिया । असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ २ ॥ ॐ एकाचमेतिस्रश्चमेतिस्रश्चमेपञ्च च मेपञ्च च मे सप्तचमेसप्तचमेनवचमेनवचमेनवचमऽएकादशचमऽएकादशचमेत्रयोदशचमेत्रयोदशचमेपञ्चदशचमे पञ्चदशचमे सप्तदशचमेसप्तदशचमेनवदशचमेनवदशचमऽएकविंᳬशतिश्चमऽएकविंᳬशतिश्चमेत्रयोविंᳬशतिश्चमेत्रयोविंᳬशतिश्चमेपञ्चविंᳬशतिश्चमे पंचविंᳬशतिश्चमे सप्तविंᳬशतिश्चमे सप्तविंᳬशतिश्चमेनवविंᳬशतिश्चमेनवविंᳬशतिश्च मऽएकत्रिंᳬशच्चम एकत्रिंᳬशच्चमे त्रयस्त्रिंᳬशच्चमे त्रयस्त्रिंᳬशच्चमे यज्ञेन कल्पंताम् ॥ ३ ॥ चतस्रश्चमेष्टौचमेष्टौचमे द्वादशचमे द्वादशचमे षोडशचमेषोडशचमे विंᳬशतिश्चमेविंᳬशतिश्चमे चतुर्विंᳬशतिश्चमे चतुर्विंᳬशतिश्चमेष्टाविंᳬशतिश्चमेष्टाविंᳬशतिश्चमे द्वात्रिंᳬशच्चमे द्वात्रिंᳬशच्चमे षट्त्रिंᳬशच्चमे षट्त्रिंᳬशच्चमे चत्वारिंᳬशच्चमे चत्वारिंᳬशच्चमे चतुश्चत्वारिंᳬशच्चमे

चतुश्चत्वारिꣳशच्चमेऽष्टाचत्वारिꣳशच्चमेयज्ञेनकल्पंताम् ॥ ४ ॥ ॐ येतीर्थानिप्रचरन्तिसृकाहस्तानिषङ्गिणः ॥ तेषांꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ५ ॥ एतैर्मन्त्रैर्यूपमभिषिञ्चयेत् । अथ यूपन्यासः । यूपशिरसि, ब्रह्मणे नमः । चक्षुषोः, शशिभास्कराभ्यां नमः । हृदि, केशवाय नमः । नाभौ, अग्नये नमः । ऊर्वोः, कट्यां, गुह्ये, एकादशरुद्रेभ्यो नमः ॥ जङ्घयोर्मेरुपर्वताय नमः । पादयोर्नागेभ्यो नमः । ॐ अर्त्थेतस्थ राष्ट्रदाराष्ट्रम्मेदत्त स्वाहार्त्थेतस्थराष्ट्रदाराष्ट्रममुष्मैदत्तौजस्वतीस्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहौजस्वतीस्थ राष्ट्रदाराष्ट्रममुष्मैदत्तापः परिवाहिणीस्थ राष्ट्रदाराष्ट्रम्मेदत्त स्वाहापः परिवाहिणीं स्थराष्ट्रदाराष्ट्रममुष्मैदत्तापाम्पतिरसिराष्ट्रदाराष्ट्रम्मेदेहिस्वाहापाम्पतिरसिराष्ट्रदाराष्ट्रममुष्मैदेह्यपाङ्गर्भोसिराष्ट्रदाराष्ट्रम्मेदेहिस्वाहापाङ्गर्भोसिराष्ट्रदाराष्ट्रममुष्मैदेहिसूर्य्यत्वचसस्थ ॥ इति शिखायाम् । ॐ विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पात ॥ सम्बाहुभ्यां धमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवएकः ॥ इति चक्षुषोः ॥ ॐ वाराहाय नमः नासिकायाम् ॥ ॐ अग्निन्दूतंपुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ २ ऽआसादयादिह ॥ इति मुखे ॥ ॐ नीलग्रीवाःशितिकंठादिवꣳरुद्राऽउपश्रिताः ॥ तेषांꣳसहस्रयोजनेवधन्वानितन्मसि ॥ इति ग्रीवायाम् ॥ ॐ बाह्वोर्मे बलमस्तु ॥ इति बाह्वोः । ॐ हृदेत्वामनसेत्वादिवेत्वासूर्य्यायत्वा ॥ ऊर्ध्वमिममध्वरंदिविदेवेषुहोत्रायच्छ ॥ इति हृदये । ॐ समुद्रादूर्म्मिर्मधुमाँ २ उदारदुपाꣳशुनासममृतत्वमानट् ॥ घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ इत्युदरे । ॐ वाममद्यसवितर्वाममुश्वोदिवेदिवेवाममस्मभ्यꣳसावीः ॥ वाममस्यहिक्षयस्यदेवभूरेरयाधियावामभाजः स्याम ॥ इति कटिद्वये । ॐ नाभिर्मेचित्तंविज्ञानंपायुर्मेपचितिर्भसत ॥ आनंदनंदावांडौमेभगः सौभाग्यंपसः ॥ जंघाभ्यांपद्भ्यांधर्म्मोस्मिविशिराजाप्रतिष्ठितः ॥ इति जङ्घयोः । ॐ आयंगौःपृश्निरक्रमीदसदन्मातरम्पुरः ॥ पितरञ्चप्रयन्स्वः ॥ इति पादयोः । एवं यूपन्यासं कृत्वा पुनः पंचोप

चारैः संपूज्य बलिं दद्यात ॥ ॐ एह्येहि धर्मध्वज यज्ञनाथ त्रयीमयो (?) वेदशरीर यूप ॥ विधातु (?) देवध्वरयज्ञरक्षां (?) बलिं गृहाण (?) भगवन्नमस्ते ॥ १ ॥ यूपायैष बलिर्न मम । ततः कुङ्कुमाक्तसूत्रेणावेष्ट्य ॐ पर्वतेभ्यो नम इति पर्वतान्वरुणं दिक्पालांश्च यूपे गन्धपुष्पैः प्रपूज्य कृताञ्जलिपुटो भूत्वा देवं ध्यायन्नुदङ्मुखः पठेत् । ॐ त्वां प्रार्थये ह्यहं यूप लोकानां शान्तिदायक । सर्वपापविशुद्ध्यर्थं जगदानन्दकारक ॥ १ ॥ देहि मेऽनुग्रहं यूप प्रसादं कुरु सुप्रभो ॥ मूलच्छेदेन यत्पापं भूमिघातेन पातकम् ॥ २ ॥ अदुष्टयूपघातोत्थं यूप पापं व्यपोहतु ॥ यद्बाल्ये यच्च कौमारे यत्पापं वार्द्धके कृतम् ॥ ३ ॥ तत्सर्वं मम देवेश यूप पापं व्यपोहतु ॥ यन्निशायां तथा प्रातर्यन्मध्याह्नापराह्णयोः ॥ ४ ॥ सन्ध्ययोश्च कृतं पापं कर्मणा मनसा गिरा ॥ तत्सर्वं मम देवेश यूप पापं व्यपोहतु ॥ ५ ॥ येन केन निमित्तेन कर्ता पापं तु कारयेत् ॥ तस्य पापेन लिप्ताङ्गस्तेनैवास्पृश्य उच्यते ॥ ६ ॥ वापीकूपतडागानां कर्ता यूपं तु कारयेत् ॥ तस्य पापेन नो लिप्तो यो यूपस्पर्शकृन्नरः ॥ ७ ॥ इति प्रार्थ्य । ॐ याऽओषधीः पूर्वाजातादेवेभ्यस्त्रियुगम्पुरा ॥ मनैनुबभ्रूणामहꣳशतं धामानिसप्तच ॥ १ ॥ इति पुष्पमालां बद्ध्वा यूपं प्रदक्षिणीकृत्य गाढमालिंग्य पुत्रपौत्रादियुक्तो नमस्कुर्यात ॥ केचिदालिंग्य स्नात्वाऽन्यानि वासांसि धारयेदिति वदन्ति ॥ ( यूपप्रमाणं बृहत्पाराशरे । पालाशो ब्राह्मणस्योक्तो नैयग्रोधस्तु भूभुजः ॥ बैल्वो वैश्यस्य यूपः स्याच्छूद्रस्यौदुम्बरः स्मृतः ॥ १ ॥ शिरःप्रमाणो विप्रस्य ह्याकण्ठं क्षत्रियस्य च॥उरःप्रमाणो वैश्यस्य शूद्रस्य नाभिमात्रतः ॥ २ ॥ ) पूर्वकुण्डात्प्राच्यां पदमात्रान्तरिते देशे इति रूपनारायणीये ॥ इति यूपपूजनविधिः ॥ इति श्रीरत्नगढनिवासिना श्रीवसिष्ठगोत्रोद्भवश्रीरामकृष्णामरचन्द्रयोः पौत्रेण श्रीकस्तूरिचं

---

१ पद्येऽस्मिन्प्रश्नचिह्नाङ्कितानि पदानि दूषितानीव प्रतीयन्ते, तत्राद्ये प्रथमान्तत्वदोषः । द्वितीये पुरुषदोषः । तृतीये आद्याकारलोपः । पर्यायपुनःप्रयुक्तिदोषश्च । चतुर्थे "स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति लक्षणाच्छन्दोभङ्गदोषः ॥

द्रात्मजेन श्रीचतुर्भुजदत्तसूनुना श्रीमहादेवभक्तेन नानानिबन्धकर्त्रा गौडपण्डितश्रीचतुर्थीलालशर्मणा प्रणीते सर्वदेवप्रतिष्ठाप्रकाशेऽग्नि स्थापनादियूपारोपणान्तकर्मकथनं नाम पञ्चमः परिच्छेदः ॥ ५ ॥ ॥ अथ सूक्तसंग्रहः षष्ठः परिच्छेदः ॥ मदनरत्नं हेमाद्रिं दृष्ट्वा वेद चतुष्टयम् ॥ चतुर्थीलालशर्माहं करोमि सूक्तसंग्रहम् ॥ १ ॥ तत्रादौ पूर्वद्वारे ऋग्वेदिनां द्वारपालजाप्यसूक्तानुक्रमणम् ॥ मद नरत्ने ॥ श्रीसूक्तं पावमानं च सोमसूक्तं सुमङ्गलम् ॥ शान्त्यध्यायं चन्द्रसूक्तं रक्षोघ्नं चेति बह्वृचौ ॥ १ ॥ श्रीसूक्तं हिरण्यवर्णा मित्यादि पञ्चदशर्चम् ॥ १५ ॥ पावमानं स्वादिष्ठयामदिष्ठया इत्यादि ॥ सोमसूक्तं त्वं सोमप्रचिकित इत्यादि गविष्ठावित्यन्तं त्रयोविंशर्चम् ॥ सुमङ्गलं कनिक्रदद्दित्यादि ॥ ३ ॥ शान्तिकाध्यायः शन्न इन्द्राग्नी इत्यादिकः ॥ १५ ॥ इन्द्रसूक्तं यो जात एवेत्यादिकम् ॥ १५ ॥ रक्षोघ्नं कृणुष्वपाज इत्यादि ॥ ५ ॥ ( दक्षिणे यजुर्वेदिनाम् ) दक्षिणे द्वारपालौ तु रुद्रान् पुरुषसूक्तकम् ॥ श्लोकाध्यायं शुक्रियं च मण्डलाध्यायमेव च ॥ २ ॥ रुद्रान् नमस्ते रुद्र इत्यादि ॥ ६६ ॥ पुरुषसूक्तं सहस्रशीर्षेत्यादिकम् ॥ १६ ॥ श्लोकाध्यायं देवसवितः प्रसुवयज्ञमित्यादिकमध्यायम् ॥ २२ ॥ शुक्रियम् ऋचं वाचं प्रपद्ये इत्या दिकम् ॥ २४ ॥ मण्डलाध्यायं यद्येतन्मण्डलमित्यादि तैत्तिरीये प्रसिद्धम् ॥ २३ ॥ ( पश्चिमे सामगानाम् ) वामदेव्यं बृहत्साम ज्येष्ठसाम रथन्तरम् ॥ तथा पुरुषसूक्तं च रुद्रसूक्तमतः परम् ॥ आज्यदोहानि सामानि शान्तिकं भारुंडानि च ॥ पश्चिमे द्वारपालौ तु पठेतां साम गौ तथा ॥ इति ॥ ३ ॥ वामदेव्यं कयानश्चित्र इत्यस्यामृचि गीतम् ॥ ३ ॥ बृहत्साम त्वामिद्धि हवामह इत्यादि ॥ २ ॥ ज्येष्ठसाम मूर्द्धानं दिव इत्यादि ॥ ३ ॥ रथन्तरम् अभि त्वा शूर नोनुम इत्यादिकम् ॥ १० ॥ पुरुषसूक्तं सहस्रशीर्षेत्यादिकम् ॥ १६ ॥ रुद्रसूक्तम् आवो राजानमिति वर्गद्वयम् ॥ २ ॥ आज्यदोहानि देवव्रतसंज्ञानि त्रीणि ॥ ३ ॥ शान्तिकाध्यायः अबोध्यग्निरित्यादिः ॥ ३ ॥ भारुण्डसामानि

इमं स्तोममित्यादिगीतानि ॥ ७ ॥ ( उत्तरे आथर्वणानाम् ) अथर्वाङ्गिरसं नीलरुद्रं देव्यपराजिता ॥ मधुसूक्तं रोधसं च शान्तिकाध्यायमेव च ॥ अथर्वाणौ द्वारपालौ पठेतामुत्तराश्रितौ ॥ ४ ॥ आथर्वणं छन्दो गायद्बृहद्गायेत्यादि ॥ आङ्गिरसम् आङ्गिरोसि जन्मानीत्यादिकम् ॥ नीलरुद्रं यां ते रुद्रेत्यादि ॥ अपराजिता देवी परिवत्मानीत्यादि ॥ ३ ॥ मधुसूक्तं मधुवाता ऋतायत इत्यादि ॥ ३ ॥ रोधसम् अभयं द्यावापृथिवी त्यादि ॥ ३ ॥ शान्तिकाध्यायः शन्न इन्द्राग्नी भवतामवोभिरित्यादि ॥ इति द्वारपालसूक्तानि ॥ अथ जापकजप्यानि सूक्तानि ( पूर्वे ऋग्वेदिनाम् ) रात्रिसूक्तं च रौद्रं च पावमानं सुमङ्गलम् ॥ जपेयुः पौरुषं सूक्तं पूर्वतो बहूवृचौ पृथक् ॥ १ ॥ रात्रिसूक्तं रात्री व्यख्यदायतीत्यादि ॥ ८ ॥ रौद्रम् इमा रुद्राय तवसे इत्यादि ॥ ११ ॥ पावमानं स्वादिष्ठयेत्यादि ॥ सुमङ्गलं कनिक्रददित्यादिकम् ॥ पौरुषं सहस्रशीर्षे त्यादि ॥ ( दक्षिणे यजुर्वेदिनाम् ) शाक्रं रौद्रं च सौम्यं च कौष्माण्डं जातवेदसम् ॥ सौरसूक्तं जपेरंस्ते दक्षिणेन यजुर्विदौ ॥ २ ॥ शाक्रम् आशुः शिशान इत्यध्यायम् ॥ १५ ॥ रौद्रम् इमा रुद्राय तवसे इत्यादि ॥ ५ ॥ सौम्यं सोमो धेनुमित्यादि ॥ ५ ॥ कौष्माण्डं यद्देवादेवहेडनमित्यादि ॥ ३ ॥ जातवेदसं समास्त्वाग्न इत्यनुवाकः ॥ सौरं विभ्राट् बृहत्पिबतु इति ॥ १४ ॥ ( पश्चिमे सामगानां जापकजप्यानि ) वैराजं पौरुषं सूक्तं सौपर्णं रुद्रसंहिताम् ॥ शैशवं पञ्चनिधनं गायत्रं ज्येष्ठसाम च ॥ वामदेव्यं बृहत्साम रौरवं सरथन्तरम् ॥ गवां व्रतं विकर्णं च रक्षोघ्नं च यशस्तथा ॥ गायेयुः सामगा राजन् पश्चिमद्वारमाश्रिताः ॥ ३ ॥ वैराजं पिब सोमम् इत्यादि ॥ ३ ॥ पौरुषं सहस्रशीर्षेत्यादि षण्मन्त्रात्मकम् ॥ ६ ॥ सौपर्णम् उद्वेदमिश्रुतामघमित्यादि ॥ ३ ॥ रुद्रसंहिताम् आवोराजानमित्यादि ॥ शैशवम् उच्चाते जातमन्धस इत्यादि ॥ ३ ॥ पञ्चनिधनम्; रहस्यावीतम् ॥ गायत्रं तत्सवितुरित्यादि ॥ ३ ॥ ज्येष्ठसाम मूर्द्धानं दिव इत्यादि ॥ वामदेव्यं कयानश्चित्रेत्यादि ॥ बृहत्साम त्वामिद्धि हवामहे इत्यादि ॥ सौम्यं सोमव्रतं संतेपयांसीत्यादिकम् । रौरवं पुनानः सोमेत्यादि ॥ २ ॥

रथन्तरम् अभि त्वा शूर नोनुम इत्यादि ॥ गवां व्रतं ते मन्वन्तरं प्रथममित्यादि ॥ २ ॥ विकर्णं विभ्राट् बृहदित्यादि त्रयम् ॥ ३ ॥
रक्षोघ्नम् अग्ने रक्षाणो इत्यादि द्वयम् ॥ २ ॥ यशः बृहदिन्द्रायेत्यादि ॥ १ ॥ ( उत्तरेऽथर्वणानाम् ) जपेतामप्यथर्वाणो शान्तिकं पौष्टिकं
तथा ॥ अन्ते प्रधानसुक्तं च जपेयुः सर्व एव हि ॥ ४ ॥ शान्तिकपौष्टिकानि शन्न इन्द्राग्नीइत्यादि । प्रधानसूक्तं स्वस्वशाखीयम् ।
अथ वा सर्वेऽपि विष्णुं मनसा ध्यायन्तः स्तुवन्तो वैष्णवान्मन्त्राञ्जपेयुः ॥ इति जाप्यसूक्तानुक्रमः समाप्तः ॥ अथ ऋग्वेदिनां पूर्वद्वारपा
लजाप्यसूक्तानि ॥ तत्र श्री ( लक्ष्मी ) सूक्तम् ॥ ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ॥ चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह
॥ १ ॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ॥ यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ २ ॥ अश्वपूर्वां रथमध्यां हस्तिनां
दप्रमोदिनीम् ॥ श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥ ३ ॥ कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ॥ पद्मे स्थितां पद्म
वर्णां तामिहोपह्वये श्रियम् ॥ ४ ॥ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ॥ तां पद्मनेमीं शरणमहं प्रपद्ये अलक्ष्मीर्मे नश्य
तां त्वां वृणे ॥५॥१॥ आदित्यवर्णे तपसोधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः॥ तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः ॥६॥
उपैतु मां देवसखः कीर्तिश्च मणिना सह ॥ प्रादुर्भूतोऽस्मिराष्ट्रेस्मिन्कीर्तिमृद्धिं ददातु मे ॥ ७ ॥ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्य
हम् ॥ अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥ ८ ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रिय
म् ॥ ९ ॥ मनसः काममाकूतिं वाचः सत्यमशीमहि ॥ पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ १० ॥ २ ॥ कर्दमेन प्रजा भूता मयि
संभव कर्दम ॥ श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥ ११ ॥ आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ॥ नि च देवीं मातरं श्रियं
वासय मे कुले ॥ १२ ॥ आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम् ॥ चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥ १३ ॥ आर्द्रां यष्करिणीं

यष्टिं सुवर्णां हेममालिनीम् ॥ सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १४ ॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ॥ यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्विन्देयं पुरुषानहम् ॥ १५ ॥ ३ ॥ यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ॥ सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥ १६ ॥ इति श्रीसूक्तम् ॥ ॥ अथ पावमानसूक्तम्-ऋ० अष्टक ॥ ६ ॥ अध्याय ॥ ७ ॥ वर्ग ॥ २३ ॥ स्वादिष्ठयामदिष्ठयापवस्वसोमधारया ॥ इन्द्रायपातवेसुतः ॥ १ ॥ रक्षोहाविश्वचर्षणिरभियोनिमयोहतम् ॥ द्रुणासधस्थमासदत् ॥ २ ॥ वरिवोधातमोभववंहिष्ठोवृत्रहन्तमः ॥ पर्षिराधोमघोनाम् ॥ ३ ॥ अभ्यर्षमहानां देवानां वीतिमंधसा ॥ अभिवाजमुतश्रवः ॥ ४ ॥ त्वामच्छाचरामसितदिदर्थंदिवेदिवे ॥ इन्दोत्वेनआशसः ॥ ५ ॥ १ ॥ पुनातितेपरिस्रुतंसोमंसूर्यस्यदुहिता ॥ वारेणशश्वतातना ॥ ६ ॥ तमीमण्वीःसमर्यआगृभ्णंतियोषणोदश ॥ स्वसारःपार्येदिवि ॥ ७ ॥ तमींहिन्वन्त्यग्रुवोधमंतिबाकुरंदृतिम् ॥ त्रिधातुवारणं मधु ॥ ८ ॥ अभी३ ममघ्न्याउतश्रीणंतिधेनवःशिशुम् ॥ सोममिन्द्रायपातवे ॥ ९ ॥ अस्येदिन्द्रोमदेष्वाविश्वावृत्राणिजिघ्नते ॥ शूरोमघाचमंहते ॥ १० ॥ २ ॥ पवस्वदेववीरातिपवित्रंसोमरंह्या ॥ इन्द्रमिन्दोवृषाविश ॥ ११ ॥ आवच्यस्वमहिप्सरोवृषेंदोद्युम्नवत्तमः ॥ आयोनिंधर्णसिः सदः ॥ १२ ॥ अधुक्षतप्रियंमधुधारासुतस्यवेधसः ॥ अपोवसिष्टसुक्रतुः ॥ १३ ॥ महान्तंत्वामहीरन्वापोऽअर्षंतिसिन्धवः ॥ यद्गोभिर्वासयिष्यसे ॥ १४ ॥ समुद्रोअप्सुमामृजेविष्टंभोधरुणोदिवः ॥ सोमःपवित्रेअस्मयुः ॥ १५ ॥ ३ ॥ अचिक्रदद्वृषाहरिर्महान्मित्रोनदर्शतः ॥ संसूर्येणरोचते ॥ १६ ॥ गिरस्तइन्दओजसामर्मृज्यंतेअपस्युवः ॥ याभिर्मदायशुंभसे ॥ १७ ॥ तंत्वामदायघृष्वयउलोककृत्नुमीमहे ॥ तवप्रशस्तयोमहीः ॥ १८ ॥ अस्मभ्यमिन्दविन्द्रयुर्मध्वःपवस्वधारया ॥ पर्जन्योवृष्टिमाँइव ॥ १९ ॥ गोषाइंदोनृषाअस्यश्वसावाजसाउत ॥ आत्मायज्ञस्य पूर्व्यः ॥ २० ॥ ४ ॥ एषदेवोअमर्त्यः पर्णवीरिवदीयति ॥ अभिद्रोणान्यासदम् ॥ २१ ॥ एषदेवोविपाकृतोतिह्वरांसिधावति ॥ पवं

मानोऽअदाभ्यः ॥ २२ ॥ एषदेवोविपन्युभिःपवमानऋतायुभिः ॥ हरिर्वाजायमृज्यते ॥ २३ ॥ एषाविश्वानिवार्याशूरोयन्निवसत्वभिः ॥
पवमानः सिषासति ॥ २४ ॥ एषदेवोरथर्यतिपवमानोदशस्यति ॥ आविष्कृणोतिवग्वनुम् ॥ २५ ॥ ५ ॥ एषाविप्रैरभिष्टुतोपोदेवो विगाहते ॥
दधद्रत्नानिदाशुषे ॥ २६ ॥ एषदिवंविधावतितिरोरजांसिधारया ॥ पवमानःकनिक्रदत् ॥ २७ ॥ एषदिवंव्यासरत्तिरोरजांस्यस्पृतः ॥ पवमानः
स्वध्वरः ॥ २८ ॥ एषप्रत्नेनजन्मनादेवोदेवेभ्यःसुतः॥हरिःपवित्रेअर्षति ॥२९॥ एषउस्यपुरुव्रतोजज्ञानोजनयन्निषः ॥ धारयापवतेसुतः ॥३०॥६॥ सना
तसोमजेषिचपवमानमहिश्रवः ॥ अथानोवस्यसस्कृधि ॥ ३१ ॥ सनाज्योतिः सनास्व१ र्विश्वाचसोमसौभगा ॥ अथानोवस्यसस्कृधि ॥ ३२ ॥
सनादक्षमुतक्रतुमपसोममृधोजहि ॥ अथानोवस्यसस्कृधि ॥ ३३ ॥ पवीतारःपुनीतनसोममिन्द्रायपातवे ॥ अथानोवस्यसस्कृधि ॥ ३४ ॥
त्वंसूर्येनआभजतवक्रत्वातवोतिभिः ॥ अथानोवस्यसस्कृधि ॥ ३५ ॥ ७ ॥ तवक्रत्वातवोतिभिर्ज्योक्पश्येमसूर्यम् ॥ अथानोवस्यसस्कृधि ॥ ३६ ॥
अभ्यर्षस्वायुधसोमद्विबर्हसंरयिम् ॥ अथानोवस्यसस्कृधि ॥ ३७ ॥ अभ्य१ र्षानपच्युतोरयिंसमत्सुसासहिः ॥ अथानोवस्यसस्कृधि ॥ ३८ ॥
त्वांयज्ञैरवीवृधन्पवमानविधर्मणि ॥ अथानोवस्यसस्कृधि ॥ ३९ ॥ रयिंनश्चित्रमश्विनमिन्दोविश्वायुमाभर ॥ अथानोवस्यसस्कृधि ॥ ४० ॥
॥ ८ ॥ समिद्धोविश्वतस्पतिः पवमानोविराजति ॥ प्रीणन्वृषाकनिक्रदत् ॥ ४१ ॥ तनूनपात्पवमानः शृंगेशिशानोअर्षति ॥ अन्तरिक्षे
णरारजत् ॥ ४२ ॥ ईळेन्यः पवमानोरयिर्विराजतिद्युमान् ॥ मधोर्धाराभिरोजसा ॥ ४३ ॥ बर्हिः प्राचीनमोजसापवमानः स्तृण
न्हरिः ॥ देवेषुदेवईयते ॥ ४४ ॥ उदातैर्जिहतेबृहद्द्वारोदेवीर्हिरण्ययीः ॥ पवमानेनसुष्टुताः ॥ ४५ ॥ ९ ॥ सुशिल्पेबृहतीमहीपवमानोवृ
षण्यति ॥ नक्तोषासानदर्शते ॥ ४६ ॥ उभादेवानृचक्षसाहोतारादैव्याहुवे ॥ पवमान इंद्रोवृषा ॥ ४७ ॥ भारतीपवमानस्यसरस्वतीळा
मही ॥ इमंनोयज्ञमागमन्तिस्रोदेवीः सुपेशसः ॥ ४८ ॥ त्वष्टारमग्रजांगोपांपुरोयावानमाहुवे ॥ इंदुरिंद्रोवृषाहरिः पवमानः प्रजापतिः

॥ ४९ ॥ वनस्पतिंपवमानमध्वासमंङ्धिधारया ॥ सहस्रवल्शंहरितं भ्राजमानंहिरण्ययम् ॥ ५० ॥ १० ॥ विश्वेदेवाः स्वाहाकृतिंपवमानस्या
गत ॥ वायुर्बृहस्पतिः सूर्योग्निरिंद्रः सजोषसः ॥ ५१ ॥ मंद्रयासोमधारयावृषापवस्वदेवयुः ॥ अव्योवारेष्वस्मयुः ॥ ५२ ॥ अभित्यं
मद्यंमदमिंदविंद्रइतिक्षर ॥ अभिवाजिनो अर्वतः ॥ ५३ ॥ अभित्यंपूर्व्यमदंसुवानोअर्षपवित्रआ ॥ अभिवाजमुतश्रवः ॥ ५४ ॥
अनुद्रप्सासइंदवआपोनप्रवतासरन् ॥ पुनानाइंद्रमाशत ॥ ५५ ॥ ११ ॥ यमत्यमिववाजिनंमृजंतियोषणोदश ॥ वनेक्रीळंतमत्यविम् ॥ ५६ ॥
तंगोभिर्वृषणंरसंमदायदेववीतये ॥ सुतंभरायसंसृज ॥ ५७ ॥ देवोदेवायधारयेंद्रायपवतेसुतः ॥ पयोयदस्यपीपयत ॥ ५८ ॥ आत्मायज्ञस्यरंह्य
सुष्वाणःपवतेसुतः ॥ प्रत्नंनिपातिकाव्यम् ॥ ५९ ॥ एवापुनानइंद्रयुर्मदंमदिष्ठवीतये ॥ गुहाचिद्दधिषेगिरः ॥ ६० ॥ १२ ॥ असृग्रमिंदवःपथा
धर्मन्नृतस्यसुश्रियः ॥ विदानाअस्ययोजनम् ॥ ६१ ॥ प्रधारामध्वोअग्रियोमहीरपोविगाहते ॥ हविर्हविष्षुवंद्यः ॥ ६२ ॥ प्रयुजोवाचोअग्रियो
वृषावचक्रदद्वने ॥ सद्माभिसत्योअध्वरः ॥ ६३ ॥ परियत्काव्याकविर्नृम्णावसानोअर्षति ॥ स्वर्वाजीसिषासति ॥ ६४ ॥ पवमानोअभिस्पृ
धोविशोराजेवसीदति ॥ यदीमृण्वंतिवेधसः ॥ ६५ ॥ १३ ॥ अव्योवारेपरिप्रियोहरिर्वनेषुसीदति ॥ रेभोवनुष्यतेमती ॥ ६६ ॥ सवायुमिन्द्र
मश्विनासाकंमदेनगच्छति ॥ रणायोअस्यधर्मभिः ॥ ६७ ॥ आमित्रावरुणाभगंमध्वः पवन्तऊर्मयः ॥ विदानाअस्यशक्मभिः ॥ ६८ ॥ अस्मभ्यं
रोदसीरयिंमध्वोवाजस्यसातये ॥ श्रवोवसूनिसंजितम् ॥ ६९ ॥ एतेसोमाअभिप्रियमिन्द्रस्यकाममक्षरन् ॥ वर्धतोअस्यवीर्यम् ॥ ७० ॥ १४ ॥ पुना
नासश्चमूषदोगच्छंतोवायुमश्विना ॥ तेनोधांतुसुवीर्यम् ॥ ७१ ॥ इंद्रस्यसोमराधसेपुनानोहार्दिचोदय ॥ ऋतस्ययोनिमासदम् ॥ ७२ ॥ मृजं
तित्वादशक्षिपोहिन्वंतिसप्तधीतयः ॥ अनुविप्राअमादिषुः ॥ ७३ ॥ देवेभ्यस्त्वामदायकंसृजानमतिमेष्यः ॥ संगोभिर्वासयामसि ॥ ७४ ॥ पुनानः
कलशेष्वावस्त्राण्यरुषोहरिः ॥ परिगव्यान्यव्यत ॥ ७५ ॥ ॥ १५ ॥ मघोनआपवस्वनोजहिविश्वाअपद्विषः ॥ इन्दोसखायमाविश ॥ ७६ ॥ वृष्टिं

दिवः परिस्रवद्युम्नंपृथिव्याअधि ॥ सहोनः सोमपृत्सुधाः ॥ ७७ ॥ नृचक्षसंत्वावयमिंद्रपीतंस्वर्विदम् ॥ भक्षीमहिप्रजामिषम् ॥ ७८ ॥ परिप्रि
यादिवः कविर्वयांसिनप्त्योर्हितः ॥ सुवानोयातिकविक्रतुः ॥ ७९ ॥ प्रप्रक्षयायपन्यसेजनायजुष्टोअद्रुहे ॥ वीत्यर्षचनिष्ठया ॥८०॥१६ ॥ ससूनुर्मा
तराशुचिर्जातोजातेअरोचयत् ॥ महान्महीऋतावृधा ॥ ८१ ॥ सस्प्तधीतिभिर्हितोनद्योअजिन्वदद्रुहः ॥ याएकमक्षिवावृधुः ॥ ८२ ॥ ताअभि
सन्तमस्तृतंमहेयुवानमादधुः ॥ इंदुमिंद्रतवव्रते ॥ ८३ ॥ अभिवह्निरमर्त्यःसप्तपश्यतिवावहिः ॥ क्रिविर्देवीरतर्पयत् ॥ ८४ ॥ अवाकल्पेषुनः
पुमस्तमांसिसोमयोध्या ॥ तानिपुनानजंघनः ॥ ८५ ॥ १७ ॥ नूनव्यसेनवीयसेसूक्तायसाधयापथः ॥ प्रत्नवद्रोचयारुचः ॥ ८६ ॥ पवमानमहि
श्रवोगामश्वंरासिवीरवत् ॥ सनामेधांसनास्वः ॥ ८७ ॥ प्रस्वानासोरथाइवार्वंतोनश्रवस्यवः ॥ सोमासोरायेअक्रमुः ॥ ८८ ॥ हिन्वानासो
रथाइवदधन्विरेगभस्त्योः ॥ भरासः कारिणामिव ॥ ८९ ॥ राजानोनप्रशस्तिभिः सोमासोगोभिरञ्जते ॥ यज्ञोनसप्तधातृभिः ॥ ९० ॥ १८ ॥
परिसुवानासइंदवोमदायबर्हणागिरा ॥ सुताअर्षतिधारया ॥ ९१ ॥ आपानासोविवस्वतोजनंतउषसोभगम् ॥ सूराअण्वंवितन्वते ॥ ९२ ॥
अपद्वारामतीनांप्रत्नाऋण्वंतिकारवः ॥ वृष्णोहरसआयवः ॥ ९३ ॥ समीचीनासआसतेहोतारः सप्तजामयः ॥ पदमेकस्यपिप्रतः ॥ ९४ ॥ नाभा
नाभिंनआददेचक्षुश्चित्सूर्येसचा ॥ कवेरपत्यमादुहे ॥ ९५ ॥ १९ ॥ अभिप्रियादिवस्पदमध्वर्युभिर्गुहाहितम् ॥ सूरः पश्यतिचक्षसा ॥ ९६ ॥
उपास्मैगायतानरः पवमानायेंदवे ॥ अभिदेवाँइयक्षते ॥ ९७ ॥ अभितेमधुनापयोथर्वाणो अशिश्रयुः ॥ देवंदेवाय देवयुः ॥ ९८ ॥ सनः
पवस्वशंगवेशंजनायशमर्वते ॥ शंराजन्नोषधीभ्यः ॥ ९९ ॥ बभ्रवेनुस्वतवसेरुणायदिविस्पृशे ॥ सोमायगाथमर्चत ॥ १०० ॥ २० ॥ हस्तच्यु
तेभिरद्रिभिः सुतंसोमंपुनीतन ॥ मधावाधावतामधु ॥ १०१ ॥ नमसेदुपसीदतदध्नेदभिश्रीणीतन ॥ इंदुमिंद्रेदधातन ॥ १०२ ॥ अमित्रहाविचर्षणिः पवस्वसोमशंगवे ॥ देवेभ्योअनुकामकृत् ॥ १०३ ॥ इंद्रायसोमपातवेमदायपरिषिच्यसे ॥ मनश्चिन्मनसस्पतिः ॥ १०४ ॥ पवमानसु

वीर्यंरयिसोमरिरीहिनः ॥ इंद्रविन्द्रेणनोयुजा ॥ १०५ ॥ २१ ॥ सोमाअस्मृग्रमिंदवः सुताऋतस्यसादने ॥ इंद्रायमधुमत्तमाः ॥ १०६ ॥ अभिविप्रा
अनूषतगावोवत्संनमातरः ॥ इंद्रंसोमस्यपीतये ॥ १०७ ॥ मदच्युत्क्षेतिसादनेसिंधोरूर्माविपश्चित ॥ सोमोगौरीअधिश्रितः ॥ १०८ ॥ दिवो
नाभाविचक्षणोव्योवारेमहीयते ॥ सोमोयः सुक्रतुः कविः ॥ १०९ ॥ यः सोमः कलशेष्वाँअंतः पवित्रआहितः ॥ तामिंदुः परिषस्वजे ॥
॥ ११० ॥ २२ ॥ प्रवाचमिंदुरिष्यंतिसमुद्रस्याधिविष्टपि ॥ जिन्वन्कोशंमधुश्चुतम् ॥ १११ ॥ नित्यस्तोत्रोवनस्पतिर्धीनामंतः सबर्दुघः ॥
हिन्वानोमानुषायुगा ॥ ११२ ॥ अभिप्रियादिवस्पदासोमोहिन्वानोअर्षति ॥ विप्रस्यधारयाकविः ॥ ११३ ॥ आपवमानधारयरयिंसह
स्रवर्चसम् ॥ अस्मेइंदोस्वाभुवम् ॥ ११४ ॥ २३ ॥ इति ऋग्वेदीयं पवमानसूक्तम् ॥ ॥ अथ सोमसूक्तम् ॥ ऋ० अ० ॥ १ ॥ अ० ॥ ६ ॥ व०
॥ १९ ॥ ॐ त्वं सोमप्रचिकितोमनीषात्वंरजिष्ठमनुनेषिपंथाम् ॥ तवप्रणीतीपितरोनइन्दोदेवेषुरत्नमभजन्तधीराः ॥ १ ॥ त्वंसोमक्रतुभिःसु
क्रतुर्भूस्त्वंदक्षैः सदक्षोविश्ववेदाः ॥ त्वंवृषावृषत्वेभिर्महित्वाद्युम्नेभिर्द्युम्न्यभवो नृचक्षाः ॥ २ ॥ राज्ञोनुतेवरुणस्यव्रतानिबृहद्गभीरन्तवसोम
धाम ॥ शुचिष्ट्वमसिप्रियोनमित्रोदक्षाय्योअर्यमेवासिसोम ॥ ३ ॥ यातेधामानिदिवियापृथिव्यांयापर्वतेष्वोषधीष्वप्सु ॥ तेभिर्नोविश्वैः सुम
नाअहेळन्राजन्त्सोमप्रतिहव्यागृभाय ॥ ४ ॥ त्वंसोमासिसत्पतिस्त्वंराजोतवृत्रहा ॥ त्वंभद्रोअसिक्रतुः ॥ ५ ॥ त्वंचसोमनोवशोजीवातुंनमरा
महे ॥ प्रियस्तोत्रोवनस्पतिः ॥ ६ ॥ त्वंसोममहे भगंत्वंयूनऋतायते ॥ दक्षंदधासिजीवसे ॥ ७ ॥ त्वंनःसोमविश्वतोरक्षाराजन्नघायतः ॥ नरि
ष्येत्वावतः सखा ॥ ८ ॥ सोमयास्तेमयोभुवऊतयः सन्तिदाशुषे ॥ ताभिर्नोविताभव ॥ ९ ॥ इमंयज्ञमिदंवचोजुजुषाणउपागहि ॥ सोमत्वंनो
वृधेभव ॥ १० ॥ सोमगीर्भिष्ट्वावयंवर्धयामोवचोविदः ॥ सुमृळीकोनआविश ॥ ११ ॥ गयस्फानोअमीवहावसुवित्पुष्टिवर्धनः ॥ सुमित्रः सोम
नोभव ॥ १२ ॥ सोमरारंधिनोहृदिगावोनयवसेष्वा ॥ मर्यइवस्वओक्ये ॥ १३ ॥ यः सोमसख्येतवरारणद्देवमर्त्यः ॥ तंदक्षः सचतेकविः ॥ १४ ॥

उरुष्याणोअभिशस्तेः सोमनिपाह्यंहसः ॥ सखासुशेवएधिनः ॥ १५ ॥ आप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यम् ॥ भवावाजस्यसंगथे ॥ १६ ॥ आप्यायस्वमदिन्तमसोमविश्वेभिरंशुभिः ॥ भवानःसुश्रवस्तमः सखावृधे ॥ १७ ॥ सन्तेपयांसिसमुयन्तुवाजाःसंवृष्ण्यान्यभिमातिषाहः । आप्यायमानोऽअमृतायसोमदिविश्रवांस्युत्तमानिधिष्व ॥ १८ ॥ यातेधामानिहविषायजन्तितातेविश्वापरिभूरस्तुयज्ञम् ॥ गयस्फानः प्रतरणः सुवीरोवीरहाप्रचरासोमदुर्यान् ॥ १९ ॥ सोमोधेनुंसोमोअर्वन्तमाशुंसोमोवीरंकर्मण्यंददाति ॥ सादन्यंविदथ्यंसभेयंपितृश्रवणंयोददाशदस्मै ॥ २० ॥ अषाळ्हंयुत्सुपृतनासुपप्रिंस्वर्षामप्सांवृजनस्यगोपाम् ॥ भरेषुजांसुक्षितिंसुश्रवसंजयन्तंत्वामनुमदेमसोम ॥ २१ ॥ त्वमिमाऽओषधीः सोमविश्वास्त्वमपोऽअजनयस्त्वङ्गाः ॥ त्वमाततन्थोर्व १ न्तरिक्षंत्वञ्ज्योतिषावितमोववर्थ ॥ २२ ॥ देवेनन्नोमनसादेवसोमरायो भागंसहसा वन्नभियुध्य ॥ मात्वातनदीशिषेवीर्य्यस्योभयेभ्यः प्रचिकित्सागविष्टौ ॥ २३ ॥ इति सोमसूक्तम् ॥ अथ सुमङ्गलं सूक्तम् ॥ ऋ० अ० ॥ २ ॥ अ० ॥ ८ ॥ व० ११ ॥ ॐ कनिक्रदज्जनुषंप्रब्रुवाणऽइयर्तिवाचमरितेवनावम् ॥ सुमङ्गलश्चशकुनेभवासिमात्वाकाचिदभिभाविश्व्याविदत् ॥ १ ॥ मात्वाश्येनउद्वधीन्मासुपर्णोमात्वाविददिषुमान्वीरोऽस्ता ॥ पित्र्यामनुप्रदिशंकनिक्रदत्सुमङ्गलोभद्रवादीवदेह ॥ २ ॥ अवक्रन्दद क्षिणतोगृहाणांसुमङ्गलोभद्रवादीशकुंते ॥ मानःस्तेनईशतमाघशंसोबृहद्वदेमविदथेसुवीराः ॥ ३ ॥ इति सुमङ्गलम् ॥ अथ शान्त्यध्यायः ॥ ऋ० ॥ अ० ॥ ५ ॥ अ० ॥ ३ ॥ वर्ग ॥ २८ ॥ ॐ शंनऽइंद्राग्नीभवतामवोभिः शंनऽइंद्रावरुणारातहव्या ॥ शमिंद्रासोमासुवितायशंयोः शन्नइं द्रापूषणावाजसातौ ॥ १ ॥ शंनोभगः शमुनः शंसोअस्तुशंनः पुरंधिः शमुसंतुरायः ॥ शंनसत्यस्यसुयमस्यशंसः शंनोऽअर्यमापुरुजातोऽअस्तु ॥ २ ॥ शन्नोधाताशमुधर्तानोऽअस्तुशंनउरूचीभवतु स्वधाभिः ॥ शंरोदसीबृहतीशन्नोअद्रिः शंनोदेवानांसुहवानिसंतु ॥ ३ ॥ शंनोऽअग्नि ज्योतिरनीकोऽअस्तुशंनोमित्रावरुणावश्विनाशम् ॥ शंनः सुकृतां सुकृतानिसंतुशंनऽइषिरोअभिवातुवातः ॥ ४ ॥ शंनो द्यावापृथिवीपूर्वहूतौ

शमुन्तारिक्षंदृशयेनोऽअस्तु ॥ शंनओषधीर्वनिनो भवन्तु शंनोरजंसस्पतिंरस्तुजिष्णुः ॥ ५ ॥ शंन इंद्रोवसुभिर्देवोऽअंस्तुशमांदित्येभिर्वरुंणः
सुशंसः ॥ शंनोरुद्रोरुद्रेभिर्जलाषः शंनस्त्वष्टाग्नाभिरिहश्रृंणोतु ॥ ६ ॥ शंनः सोमो भवतु ब्रह्म शंनः शंनोग्रावांणः शमुंसन्तुयज्ञाः ॥ शंनः
स्वरूंणांमितयो भवन्तुशंनः प्रस्वः१ शम्वंस्तुवेदिः ॥ ७ ॥ शंनःसूर्यंउरुचक्षाउदेतुशंनश्चतंस्रःप्रदिशोभवंतु ॥ शंनःपर्वताध्रुवयो भवन्तुशंनः
सिंधवः शमुंसन्त्वापः ॥ ८ ॥ शन्नोऽअदितिर्भवतुव्रतेभिश्शंनोभवंतुमरुतः स्वर्काः ॥ शंनोविष्णुः शमुंपूषानोअस्तुशंनोभविञंशम्वंस्तुवायुः
॥ ९ ॥ शंनोदेवः संवितात्रायमाणः शंनोभवंतूषसोविभातीः ॥ शंनःपर्जन्योभवतुप्रजाभ्यः शंनः क्षेत्रंस्यपतिंरस्तुशंभुः ॥ १० ॥ शंनोदेवा
विश्वदेवाभवन्तुशंसरंस्वतीसहधीभिरंस्तु ॥ शमंभिषाचः शमुंरातिषाचः शंनोदिव्याः पार्थिवाःशंनोऽअप्यांः ॥ ११ ॥ शंनःसत्यस्यपतंयो भवन्तु
शंनोअर्वन्तः शमुंसन्तुगावः ॥ शंनऋभवः सुकृतः सुहस्ताः शंनोभवन्तुपितरोहवेषु ॥ १२ ॥ शंनोऽअजएकंपाद्देवोअंस्तु शंनोहिर्बुध्न्यः १ शंस
मुद्रः ॥ शंनोअपांनपांत्पेरुरंस्तुशंनः पृश्निर्भवतुदेवगोपा ॥ १३ ॥ आदित्यारुद्रावसंवोजुषंतेदंब्रह्मंक्रियमांणंनवीयः ॥ शृण्वंतुनोदिव्याः
पार्थिवासोगोजांताउतयेयज्ञियांसः ॥ १४ ॥ येदेवानांयज्ञियायज्ञियांनांमनोर्यजंत्राऽअमृतांऋतज्ञाः ॥ तेनोरासंतामुरुगायमद्ययूयंपातस्व
स्तिभिः सदांनः ॥ १५ ॥ इति शान्तिकाध्यायः ॥ अथ इंद्रसूक्तम् ॥ ऋ० अ० ॥ २ ॥ अ० ॥ ६ ॥ व० ॥ ७ ॥ योजातएवंप्रथमोमनंस्वान्देवो
देवान्क्रतुनापर्यभूषंत ॥ यस्यशुष्माद्रोदंसीअभ्यंसेतांनृम्णस्यंमह्नासजंनासइंद्रः ॥ १ ॥ यः पृथिवींव्यथमानामदृंहद्यः पर्वतान्प्रकुंपितांअरंम्णा
त् ॥ योअंतरिंक्षंविममेवरीयोयोद्यामस्तंभ्नात्सजंनासइन्द्रः ॥ २ ॥ योहत्वाहिमरिंणात्सप्तसिन्धून्योगाउदाजंदपधावलस्यं ॥ योअश्मनोर
न्तरग्निंजजानंसंवृक्समत्सुसजंनासइन्द्रः ॥ ३ ॥ येनेमाविश्वाच्यवंनाकृतानियोदासंवर्णमधंरंगुहाकः ॥ श्वघ्नीवयोजिगीवाँल्लक्षमादंदर्यः पुष्टा
निसजंनासइंद्रः ॥ ४ ॥ यंस्मापृच्छन्तिकुहसेतिघोरमुतेमांहुर्नैषोअस्तीत्यैनम् ॥ सोअर्यःपुष्टीर्विजंइवामिनातिश्रदंस्मैधत्तसजंनासइन्द्रः ॥ ५ ॥

योरं॒ध्रस्य॑चोदि॒ता यः कृ॒शस्य॒ यो ब्र॒ह्मणो॒ नाध॑मानस्य की॒रेः ॥ यु॒क्तग्रा॑व्णो॒ योऽवि॒ता सु॑शि॒प्रः सु॒तसो॑मस्य॒ स ज॑नास॒ इन्द्रः॑ ॥ ६ ॥ यस्याश्वा॑सः प्र॒दिशि॒ यस्य॒ गावो॒ यस्य॒ ग्रामा॒ यस्य॒ विश्वे॒ रथा॑सः ॥ यः सूर्यं॒ य उ॒षसं॑ ज॒जान॒ यो अ॒पां ने॒ता स ज॑नास॒ इन्द्रः॑ ॥ ७ ॥ यं क्रन्द॑सी संय॒ती वि॒ह्वये॑ते॒ परेऽव॑र उ॒भया॑ अ॒मित्राः॑ ॥ स॒मा॒नं चि॒द्रथ॑मातस्थि॒वांसा॒ नाना॑ हवेते॒ स ज॑नास॒ इन्द्रः॑ ॥ ८ ॥ यस्मा॒न्न ऋ॒ते वि॒जय॑न्ते॒ जना॑सो॒ यं युध्य॑माना॒ अव॑से॒ हव॑न्ते ॥ यो विश्व॑स्य प्रति॒मानं॑ ब॒भूव॒ यो अ॑च्युत॒च्युत्स ज॑नास॒ इन्द्रः॑ ॥ ९ ॥ यः शश्व॑तो॒ मह्येनो॒ दधा॑ना॒नम॑न्यमाना॒ञ्छर्वा॑ ज॒घान॑ ॥ यः शर्ध॑ते॒ नानु॒ददा॑ति शृ॒ध्यां यो दस्यो॑र्ह॒न्ता स ज॑नास॒ इन्द्रः॑ ॥ १० ॥ यः शम्ब॑रं॒ पर्व॑तेषु क्षि॒यन्तं॑ चत्वारिं॒श्यां श॒रद्य॒न्ववि॑न्दत् ॥ ओ॒जा॒यमा॑नं॒ यो अहिं॑ ज॒घान॒ दानुं॒ शया॑नं॒ स ज॑नास॒ इन्द्रः॑ ॥ ११ ॥ यः स॒प्तर॑श्मिर्वृष॒भस्तुवि॑ष्मान॒वासृ॑ज॒त्सर्त॑वे स॒प्त सिन्धू॑न् ॥ यो रौ॑हि॒णमस्फु॑र॒द्वज्र॑बाहु॒र्द्यामा॒रोह॑न्तं॒ स ज॑नास॒ इन्द्रः॑ ॥ १२ ॥ द्यावा॑ चिदस्मै पृथि॒वी न॑मेते॒ शुष्मा॑च्चिदस्य॒ पर्व॑ता भयन्ते ॥ यः सो॑म॒पा नि॑चि॒तो वज्र॑बाहु॒र्यो वज्र॑हस्तः॒ स ज॑नास॒ इन्द्रः॑ ॥ १३ ॥ यः सु॒न्वन्त॒मव॑ति॒ यः पच॑न्तं॒ यः शंस॑न्तं॒ यः श॑शमा॒नमू॒ती ॥ यस्य॒ ब्रह्म॒ वर्ध॑नं॒ यस्य॒ सोमो॒ यस्ये॒दं राधः॒ स ज॑नास॒ इन्द्रः॑ ॥ १४ ॥ यः सु॒न्व॒ते पच॑ते दु॒ध्र आ चि॒द्वाजं॒ दर्द॑र्षि॒ स किला॑सि स॒त्यः ॥ व॒यन्त॑ इन्द्र वि॒श्वह॑ प्रि॒यासः॑ सु॒वीरा॑सो वि॒दथ॒मा व॑देम ॥ १५ ॥ इतीन्द्रसूक्तम् ॥ अथ राक्षोघ्नं सूक्तम् ॥ ऋ० अ० ॥ ३ ॥ अ० ॥ ४ ॥ व० ॥ २३ ॥

ॐ कृणु॒ष्व पाजः॒ प्रसि॑तिं॒ न पृ॒थ्वीं या॒हि राजे॒वाम॑वाँ॒ इभे॑न ॥ तृ॒ष्वीमनु॒ प्रसि॑तिं द्रूणा॒नोऽस्ता॑सि॒ विध्य॑ र॒क्षस॒स्तपि॑ष्ठैः ॥ १ ॥ तव॑ भ्र॒मास॑ आशु॒या प॑त॒न्त्यनु॑ स्पृश धृष॒ता शोशु॑चानः ॥ तपूं॑ष्यग्ने जु॒ह्वा॑ पत॒ङ्गानसं॑दितो॒ वि सृ॑ज॒ विष्व॑गु॒ल्काः ॥ २ ॥ प्रति॒ स्पशो॒ वि सृ॑ज॒ तूर्णि॑तमो॒ भवा॑ पा॒युर्वि॒शो अ॒स्या अद॑ब्धः ॥ यो नो॑ दू॒रे अ॒घशं॑सो॒ यो अन्त्यग्ने॒ माकि॑ष्टे॒ व्यथि॒रा द॑धर्षीत् ॥ ३ ॥ उद॑ग्ने तिष्ठ॒ प्रत्या त॑नुष्व॒ न्य॑मित्राँ॑ ओषतात्तिग्महेते ॥ यो नो॒ अरा॑तिं समिधान च॒क्रे नी॒चा तं ध॑क्ष्यत॒सं न शुष्क॑म् ॥ ४ ॥ ऊ॒र्ध्वो भ॑व॒ प्रति॑ वि॒ध्याध्य॒स्मदा॒विष्कृ॑णुष्व॒ दैव्या॑न्यग्ने ॥ अव॑ स्थि॒रा त॑नुहि यातु॒जूनां॑ जा॒मिमजा॑मिं॒ प्र मृ॑णीहि॒ शत्रू॑न् ॥ ५ ॥ इति राक्षोघ्नम् ॥ इति पूर्वद्वारपालजाप्यसूक्तानि ॥ अथ पूर्वे ऋग्वेदिनां जापकजप्यानि सूक्तानि ॥ ऋ० ॥ अ०

॥ ८ ॥ अ० ॥ ७ ॥ व० ॥ १४ ॐ रात्रीव्यख्यदायतीपुरुत्रादेव्य १ क्षभिः ॥ विश्वाअधिश्रियोधित ॥ १ ॥ ओर्वप्राअमर्त्यानिवतोदेव्यु १
द्वतः ॥ ज्योतिषाबाधतेतमः ॥ २ ॥ निरुस्वसारमस्कृतोषसंदेव्यायती ॥ अपेदुहासतेतमः ॥ ३ ॥ सानोअद्ययस्यावयंनितेयामन्नविक्ष्महि ॥
वृक्षेनवसतिंवयः ॥ ४ ॥ निग्रामासोअविक्षतनिपद्वन्तोनिपक्षिणः ॥ निश्येनासश्चिदर्थिनः ॥ ५ ॥ यावयावृक्यं १ वृकंयवयस्तेनमूर्म्ये ॥
अथानः सुतराभव ॥ ६ ॥ उपमापेपिशत्तमः कृष्णव्यक्तमस्थित ॥ उपऋणेवयातय ॥ ७ ॥ उपतेगाइवाकरंवृणीष्वदुहितर्दिवः ॥ रात्रिस्तो
मंनजिग्युषे ॥ ८ ॥ इति रात्रिसूक्तम् ॥ अथ रौद्रं सूक्तम् ॥ ऋ० अ० ॥ १ ॥ अ० ॥ ८ ॥ व० ॥ ५ ॥ ॐ इमारुद्रायतवसेकपर्दिनेक्षयद्वी
रायप्रभरामहेमतीः ॥ यथाशमसद्विपदेचतुष्पदेविश्वंपुष्टंग्रामेऽअस्मिन्ननातुरम् ॥ १ ॥ मृळानोरुद्रोतनोमयस्कृधिक्षयद्वीरायनमसाविधेमते ॥
यच्छंचयोश्चमनुरायजेपितातदश्यामतवरुद्रप्रणीतिषु ॥ २ ॥ अश्यामतेसुमतिंदेवयज्ययाक्षयद्वीरस्यतवरुद्रमीढ्वः ॥ सुम्नायन्निद्विशोऽअस्माक
माचरारिष्टवीराजुहवामतेहविः ॥ ३ ॥ त्वेषंवयंरुद्रंयज्ञसाधंवंकुंकविमवसेनिह्वयामहे ॥ आरेअस्मद्दैव्यंहेळोअस्यतुसुमतिमिद्वयमस्यावृणी
महे ॥ ४ ॥ दिवोवराहमरुषंकपर्दिनंत्वेषंरूपंनमसानिह्वयामहे ॥ हस्तेबिभ्रद्भेषजावार्याणिशर्मवर्मच्छर्दिरस्मभ्यंयंसत् ॥ ५ ॥ इदंपित्रेमरुतां
मुच्यते वचः स्वादोः स्वादीयोरुद्रायवर्धनम् ॥ रास्वाचनोऽमृतमर्तभोजनंत्मनेतोकायतनयायमृळ ॥ ६ ॥ मानोमहान्तमुतमानोऽअर्भकंमा
नऽउक्षन्तमुतमानऽउक्षितम् ॥ मानोवधीः पितरंमोतमातरंमानः प्रियास्तन्वोरुद्ररीरिषः ॥ ७ ॥ मानस्तोकेतनयेमानआयोमानो गोषुमानो
अश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतः सदमित्त्वाहवामहे ॥ ८ ॥ उपतेस्तोमान्पशुपाइवाकरंरास्वापितर्मरुतांसुम्नमस्मे ॥
भद्राहितेसुमतिर्मृळयत्तमाथा वयमवइत्तेवृणीमहे ॥ ९ ॥ आरेतेगोघ्नमुतपूरुषघ्नंक्षयद्वीरायसुम्नमस्मेतेऽअस्तु ॥ मृळाचनोअधिचब्रूहिदेवाधा
चनः शर्मयच्छद्विबर्हाः ॥ १० ॥ अवोचामनमोऽअस्माअवस्यवः शृणोतुनोहवं रुद्रोमरुत्वान् ॥ तन्नोमित्रोवरुणोमामहंतामदितिः सिन्धुःपृ

थिवीमुतद्यौः ॥ ११ ॥ इति रुद्रसूक्तम् ॥ ततः पवमानं सुमंगलं च जपेत् ( पवमानं स्वादिष्ठयेत्यादि सुमंगलं कनिक्रददित्यादि च पूर्वमुक्तम् )
अथ पुरुषसूक्तम् ॥ ऋ० अ० ॥ ८ ॥ अ० ४ ॥ व० ॥ १७ ॥ ॐसहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिंविश्वतोवृत्वात्यतिष्ठद्द
शांगुलम् ॥ १ ॥ पुरुषएवेदंसर्वंयद्भूतंयच्च भव्यम् ॥ उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ २ ॥ एतावानस्यमहिमातोज्यायांश्चपूरुषः ॥
पादोस्यविश्वाभूतानित्रिपादस्यामृतं दिवि ॥ ३ ॥ त्रिपादूर्ध्वऽउदैत्पुरुषः पादोस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥ ४ ॥
तस्माद्विराळजायत विराजोअधिपूरुषः ॥ सजातोअत्यरिच्यत पश्चाद्भूमिमथोपुरः ॥ ५ ॥ १ ॥ यत्पुरुषेणहविषा देवायज्ञमतन्वत ॥ वसंतो
अस्यासीदाज्यं ग्रीष्मइध्मः शरद्धविः ॥ ६ ॥ तंयज्ञंबर्हिषिप्रौक्षन्पुरुषं जातमग्रतः ॥ तेन देवाऽअयजंत साध्याऋषयश्चये ॥ ७ ॥ तस्माद्यज्ञा
त्सर्वहुतः संभृतंपृषदाज्यम् ॥ पशून्तांश्चक्रेवायव्यानारण्यान्ग्राम्याश्चये ॥ ८ ॥ तस्माद्यज्ञात्सर्वहुतऋचः सामानिजज्ञिरे ॥ छंदांसिजज्ञिरेत
स्माद्यजुस्तस्मादजायत ॥ ९ ॥ तस्मादश्वाअजायंत येकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताअजावयः ॥ १० ॥ २ ॥ यत्पुरुषंव्यदधुः
कतिधाव्यकल्पयन् ॥ मुखं किमस्य कौबाहू का ऊरू पादा उच्येते ॥ ११ ॥ ब्राह्मणोस्य मुखमासीद्बाहू राजन्यः कृतः ॥ ऊरू तदस्य यद्वैश्यः
पद्भ्यां शूद्रोऽअजायत ॥ १२ ॥ चन्द्रमा मनसो जातश्चक्षोःसूर्योऽअजायत ॥ मुखादिंद्रश्चाग्निश्च प्राणाद्वायुरजायत ॥ १३ ॥ नाभ्याऽआसी
दंतरिक्षं शीर्ष्णो द्यौः समवर्तत ॥ पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँऽअकल्पयन् ॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधः कृताः ॥
देवा यद्यज्ञं तन्वानाऽअबध्नन्पुरुषं पशुम् ॥ १५ ॥ यज्ञेनयज्ञमयजंत देवास्तानिधर्माणिप्रथमान्यासन् ॥ तेह नाकंमहिमानः सचंत यत्र पूर्वे
साध्याः संति देवाः ॥ १६ ॥ इति ऋग्वेदीयं पौरुषं सूक्तम् ॥ अथ ऋग्वेदीयं वामदेव्यं सूक्तम् । ऋ० अ० ॥ ३ ॥ अ० ॥ ६ ॥ व० ॥ २४ ॥
ॐकयानश्चित्रऽआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ १ ॥ कस्त्वासत्योमदानांमंहिष्ठोमत्सदन्धसः ॥ दृळहाचिदारुजेवसु ॥ २ ॥

अभीषुणः सखीनामविताजरितॄणाम् ॥ शतंभवास्यूतिभिः ॥ ३ ॥ अभीनऽआववृत्स्वचक्रंनवृत्तमर्वतः ॥ नियुद्भिश्चर्षणीनाम् ॥ ४ ॥ प्रवता
हिक्रतूनामाहापदेवगच्छसि ॥ अभक्षिसूर्येसचा ॥ ५ ॥ संयत्तइन्द्रमन्यवः संचक्राणिदधन्विरे ॥ अधत्वेऽअधसूर्ये ॥ ६ ॥ उतस्मावित्वामाहुरिन्म
घवानंशचीपते ॥ दातारमविदीधयुम् ॥ ७ ॥ उतस्मासद्यइत्परिशशमानायसुन्वते ॥ पुरूचिन्मंहसेवसु ॥ ८ ॥ नहिष्मातेशतंचनराधोवरन्तआ
मुरः ॥ नच्यौत्नानिकरिष्यतः ॥ ९ ॥ अस्माँऽअवन्तुतेशतमस्मान्सहस्रमूतयः ॥ अस्मान्विश्वाऽअभिष्टयः ॥ १० ॥ अस्माँऽइहावृणीष्वसख्यायस्व
स्तये ॥ महोरायेदिवित्मते ॥ ११ ॥ अस्माँऽअविड्ढिविश्वहेंद्ररायापरीणसा ॥ अस्मान्विश्वाभिरूतिभिः ॥ १२ ॥ अस्मभ्यंताँऽअपावृधिव्रजाँऽ
अस्तेव गोमतः ॥ नवाभिरिंद्रोतिभिः ॥ १३ ॥ अस्माकंधृष्णुयारथोद्युमाँऽइन्द्रानपच्युतः ॥ गव्युरश्वयुरीयते ॥ १४ ॥ अस्माकमुत्तमंकृधिश्रवो
देवेषुसूर्य ॥ वर्षिष्ठन्द्यामिवोपरि ॥ १५ ॥ इति वामदेव्यम् ॥ इति ऋग्वेदिनां पूर्वे द्वारपालादिजाप्यसूक्तानि ॥ अथ दक्षिणे यजुर्वेदिनां द्वारपा
लादिजाप्यसूक्तानि ॥ तत्रादौ रुद्रसूक्तम् ॥ यजु० अध्याय ॥ १६ ॥ मन्त्र ॥ ॐ नमस्तेरुद्रमन्यवऽउतोतइषवेनमः ॥ बाहुभ्यामुततेनमः ॥ १ ॥
यातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि ॥ २ ॥ यामिषुंगिरिशन्तहस्तेबिभर्ष्यस्तवे ॥ शिवा
ङ्गिरित्रताङ्कुरुमाहिंसीःपुरुषञ्जगत् ॥ ३ ॥ शिवेनवचसात्वागिरिशाच्छावदामसि ॥ यथानःसर्वमिज्जगदयक्ष्मꣳसुमनाऽअसत् ॥ ४ ॥
अध्यवोचदधिवक्ताप्रथमोदैव्योभिषक् ॥ अहींश्चसर्वाञ्जम्भयन्त्सर्वाश्चयातुधान्योधराचीःपरासुव ॥ ५ ॥ असौयस्ताम्रोऽअरुणऽ
उतबभ्रुःसुमंगलः ॥ येचैनꣳरुद्राऽअभितोदिक्षुश्रिताःसहस्रशोवैषाꣳ हेडऽईमहे ॥ ६ ॥ असौयोवसर्प्पतिनीलग्रीवोविलोहितः ॥
उतैनङ्गोपाऽअदृश्रन्नदृश्रन्नुदहार्य्यःसदृष्टोमृडयातिनः ॥ ७ ॥ नमोस्तुनीलग्रीवाय सहस्राक्षायमीढुषे ॥ अथोयेऽअस्यसत्वानोहन्तेभ्यो
करन्नमः ॥ ८ ॥ प्रमुञ्चधन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् ॥ याश्चतेहस्तऽइषवःपराताभगवोवप ॥ ९ ॥ विज्ज्यन्धनुः कपर्दिनोविशल्यो

बाणवाँ २ उत ॥ अनेशन्नस्ययाऽ इषवऽ आभुरस्यनिषङ्गधिः ॥ १० ॥ यातेहेतिर्मीढुष्टमहस्तेबभूवते धनुः ॥ तयास्मान्विश्वतस्त्वमय
क्ष्मयापरिब्भुज ॥ ११ ॥ परितेधन्वनोहेतिरस्मान्वृणक्तुविश्वतः ॥ अथोयऽइषुधिस्तवारेऽअस्मन्निधेहितम् ॥ १२ ॥ अवतत्यधनुष्ट्वꣳसह
स्राक्षशतेषुधे ॥ निशीर्य्यशल्ल्यानाम्मुखाशिवोनः सुमनाभव ॥ १३ ॥ नमस्तऽआयुधायानाततायधृष्णवे ॥ उभाब्भ्यामुततेनमोबाहुब्भ्या
न्तवधन्वने ॥ १४ ॥ मानोमहान्तमुतमानोऽअर्ब्भकम्मानऽउक्षन्तमुतमानऽउक्षितम् ॥ मानोवधीःपितरम्मोतमातरम्मानः प्रियास्त
न्वोरुद्ररीरिषः ॥ १५ ॥ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः ॥ मानोवीरान्रुद्रभामिनोवधीर्हविष्मन्तःसदमि
त्वाहवामहे ॥ १६ ॥ नमोहिरण्यबाहवेसेनान्न्येदिशाञ्चपतयेनमोनमोवृक्षेब्भ्योहरिकेशेब्भ्यःपशूनाम्पतयेनमोनमः शष्पिञ्जरायत्त्विषी
मतेपथीनांपतयेनमोनमोहरिकेशायोपवीतिनेपुष्टानाम्पतये नमोनमो बब्भ्लुशाय ॥ १७ ॥ नमोबब्भ्लुशाय व्याधिनेन्नानाम्पतये नमोनमो
भवस्यहेत्यैजगताम्पतयेनमोनमोरुद्रायाततायिनेक्षेत्राणाम्पतयेनमोनमःसूतायाहन्त्यैवनानांपतयेनमोनमोरोहिताय ॥ १८ ॥ नमोरो
हितायस्थपतये वृक्षाणाम्पतये नमोनमोभुवन्तये वारिवस्कृतायौषधीनाम्पतये नमोनमोमन्त्रिणेवाणिजायकक्षाणाम्पतयेनमोनमऽउच्चैर्घो
षायाक्रन्दयतेपत्तीनाम्पतयेनमोनमः कृत्स्नायतया ॥ १९ ॥ नमः कृत्स्नायतयाधावतेसत्त्वनाम्पतयेनमोनमःसहमानायनिव्याधिनऽ
आव्याधिनीनाम्पतये नमोनमोनिषङ्गिणेककुभायस्तेनानाम्पतयेनमोनमोनिचेरवेपरिचरायारण्यानाम्पतयेनमोनमोवञ्चते ॥ २० ॥
नमोवञ्चतेपरिवञ्चतेस्तायूनाम्पतये नमोनमोनिषङ्गिणेऽइषुधिमते तस्कराणाम्पतये नमोनमः सृकायिब्भ्यो जिघाꣳसद्भ्यो मुष्णताम्पतयेन
मोनमोसिमद्भ्योनक्तञ्चरद्भ्योविकृन्तानाम्पतयेनमः ॥ २१ ॥ नमऽउष्णीषिणेगिरिचरायकुलुञ्चानाम्पतयेनमोनमऽइषुमद्भ्योधन्वाि
ब्भ्यश्चवोनमोनमऽआतन्वानेब्भ्यः प्रतिदधानेब्भ्यश्चवोनमोनमऽआयच्छद्भ्योस्यद्भ्यश्चवोनमोनमोविसृजद्भ्यः ॥ २२ ॥ नमोविसृज

द्भ्योविद्ध्यद्भ्यश्चवोनमोनम ÷ स्वपद्भ्योजाग्रद्भ्यश्चवोनमोनमः शयानेभ्यऽआसीनेभ्यश्चवोनमोनमस्तिष्ठद्भ्योधावद्भ्यश्चवोनमोनम ÷
सभाभ्य ÷ ॥ २३ ॥ नम ÷ सभाभ्य ÷ सभापतिभ्यश्चवोनमोनमोऽश्वेभ्योऽश्वपतिभ्यश्चवोनमोनमऽ आव्याधिनीभ्योविविध्यन्ती
भ्यश्चवोनमोनमऽउगणाभ्यस्तृꣳहतीभ्यश्चवोनमोनमोगणेभ्य ÷ ॥ २४ ॥ नमोगणेभ्योगणपतिभ्यश्चवोनमोनमोव्रातेभ्योव्रातपति
भ्यश्चवोनमोनमो गृत्सेभ्योगृत्सपतिभ्यश्चवोनमोनमोविरूपेभ्योविश्वरूपेभ्यश्चवोनमोनमः सेनाभ्यः ॥ २५ ॥ नमः सेनाभ्यः से
नानिभ्यश्चवोनमोनमोरथिभ्योऽअरथेभ्यश्चवोनमोनम ÷ क्षत्तृभ्य ÷ संग्रहीतृभ्यश्चवोनमोनमोमहद्भ्योऽअर्भकेभ्यश्चवोनम ÷ ॥ २६ ॥
नमस्तक्षभ्योरथकारेभ्यश्चवोनमोनमः कुलालेभ्यः कर्मारेभ्यश्चवोनमोनमोनिषादेभ्य ÷ पुञ्जिष्टेभ्यश्चवोनमो नम ÷ श्वनिभ्योमृ
गयुभ्यश्चवोनमोनमः श्वभ्य ÷ ॥ २७ ॥ नमः श्वभ्यः श्वपतिभ्यश्चवोनमोनमोभवायचरुद्रायचनम ÷ शर्वायचपशुपतयेचनमोनील
ग्रीवायचशितिकण्ठायचनम ÷ कपर्दिने ॥ २८ ॥ नम ÷ कपर्दिनेचव्युप्तकेशायचनम ÷ सहस्राक्षायचशतधन्वनेच नमोगिरिशयायचशिपि
विष्टायचनमोमीढुष्टमायचेषुमतेचनमोह्रस्वाय ॥ २९ ॥ नमोह्रस्वायचवामनायचनमोबृहतेचवर्षीयसेचनमोवृद्धायच सवृधेचनमोग्र्या
यचप्रथमायचनमऽआशवे ॥ ३० ॥ नमऽआशवेचाजिरायचनमः शीघ्र्यायचशीभ्यायचनमऽऊर्म्यायचावस्वन्यायचनमोनादेयायचद्वीप्या
यच ॥ ३१ ॥ नमोज्येष्ठायच कनिष्ठायच नम ÷ पूर्वजायचापरजायचनमोमध्यमायचापगल्भायचनमोजघन्यायचबुध्न्यायचनमः
सोभ्याय ॥ ३२ ॥ नम ÷ सोभ्यायचप्रतिसर्यायचनमोयाम्यायचक्षेम्यायचनमः श्लोक्यायचावसान्यायचनमऽउर्वर्यायचखल्यायचन
मोवन्याय ॥ ३३ ॥ नमोवन्यायचकक्ष्यायचनम ÷ श्रवायचप्रतिश्रवायचनमऽआशुषेणायचाशुरथायचनमः शूरायचावभेदिनेचनमोबि
ल्मिने ॥ ३४ ॥ नमोबिल्मिनेचकवचिनेचनमोवर्मिणेचवरूथिनेचनम ÷ श्रुतायचश्रुतसेनायचनमोदुन्दुभ्यायचाहनन्यायचनमोधृष्णवे

॥ ३५ ॥ नमो॑धृष्णवे॑चप्प्रमृशाय॑चुनमो॑निषुङ्गिणे॑चेषुधिमते॑चुनम॑स्तीक्ष्णेष॑वेचायुधिने॑चुनम॑ ÷ स्वायुधाय॑चसुधन्व॑नेच ॥ ३६ ॥ नमुह्स्स्रुत्याय॑
चुपत्थ्याय॑चुनमुह् काट्ट्याय॑चुनीप्प्याय॑चुनमुह् कुल्ल्याय॑चसरुस्स्यायचुनमो॑नादेयाय॑चवैशन्ताय॑चुनमुह्कूप्प्याय॑ ॥ ३७ ॥ नमुह्कूप्प्याय॑चावुट्ट्या
यचुनमो॑वीद्ध्रय्याय॑चातप्प्यायचुनमो॑मेग्घ्याय॑चाविद्युत्त्यायचुनमो॑वर्ष्याय॑चावुर्ष्याय॑चुनमो॑वात्त्याय॑ ॥ ३८ ॥ नमो॑वात्त्याय॑चुरेष्म्याय॑चुनमो॑वा
स्तुव्व्यायचव्वास्तुपाय॑चुनमुह् सोमा॑यचरुद्द्राय॑चुनम॑स्ताम्म्राय॑चारुणाय॑चुनम॑÷शुङ्गवे॑ ॥ ३९ ॥ नम॑÷शुङ्गवे॑चपशुपत॑येचुनम॑ऽउग्ग्राय॑चभीमाय॑
चुनमो॑ग्ग्रेव्वधाय॑चदूरेव्वधाय॑चुनमो॑हुन्त्रेचुहनी॑यसेचुनमो॑वृक्षेब्भ्यो॒हरि॑केशेब्भ्योनम॑स्ताराय॑ ॥ ४० ॥ नम॑÷शम्भवाय॑चमयोभवाय॑चुनम॑÷ शंकु
राय॑चमयस्क्कराय॑चुनम॑÷ शिवाय॑चशिवत॑रायच ॥ ४१ ॥ नमुह् पार्य्याय॑चवार्य्याय॑चुनम॑ ÷ प्प्रतर॑णायचोत्तर॑णायचुनमुस्तीत्थ्याय॑चुकूल्ल्याय॑
चुनमुह्शष्प्प्याय॑चुफेन्न्याय॑चुनम॑÷ सिकुत्त्याय ॥ ४२ ॥ नम॑÷ सिकुत्त्यायचप्प्रवाह्याय॑चुनम॑÷किंशिलाय॑च क्षयुणाय॑चुनम॑÷कपुर्दिने॑चपुल
स्तये॑चुनम॑ऽइरिण्यायचप्प्रपथ्थ्यायचुनमो॑व्रज्ज्याय ॥ ४३ ॥ नमो॑व्रज्ज्याय॑चुगोष्ठ्याय॑चुनमुस्तल्प्प्याय॑चुगेह्याय॑चुनमो॑हृदुय्यायचनिवेष्प्यायचुनमुह्
काट्ट्याय॑चगह्वरेष्ठाय॑चुनमुह् शुष्क्याय॑ ॥ ४४ ॥ नमुह्शुष्क्याय॑चहरित्त्यायचुनम॑ ÷ पांसुव्व्यायचरजुस्स्यायचुनमो॑लोप्प्याय॑चोलप्प्याय॑चुनमु
ऊर्व्याय॑चुसूर्व्याय॑चुनम॑ ÷ पुर्ण्याय॑ ॥ ४५ ॥ नम॑ ÷ पुर्ण्याय॑चपर्णशदाय॑चुनम॑ऽउद्गुरमा॑णायचाभिघ्घ्नुतेचु नम॑ऽआखिदुते॑च॑प्प्रखिदुतेचुनम॑ऽइषुकृ
द्द्ध्यो॑धनुष्कृद्ध्य॑श्ववोनमोनमो॑वुह् किरिकेब्भ्यो॑देवानाᳪंहृद॑येब्भ्योनमो॑विचिन्न्वुत्केब्भ्योनमो॑विक्षिणत्केब्भ्योनम॑ऽआनिर्हुतेब्भ्य॑ ÷ ॥ ४६ ॥
द्राप॑ऽअन्ध॑सस्पतेदरि॑द्रुंनील॑लोहित ॥ आसाम्प्रजाना॑मेषाम्प॑शूनाम्माभेर्म्मारो॑मोच॑नुह्किञ्चुनाम॑मत् ॥ ४७ ॥ इमारुद्राय॑तुवसे॑कपुर्दिने॑
क्षयद्वी॑रायुप्प्रभ॑रामहेमुती॑ ॥ यथाशमसा॑द्द्विपदेचतु॑ष्पदेव्विश्श्वं॑म्पुष्टङ्ग्रामे॑ऽअस्मिन्नु॑नातुरम् ॥ ४८ ॥ याते॑रुद्रशिवातनूह्शिवाव्विश्वाह॑भेषजी ॥
शिवारुतस्य॑भेषुजीतया॑नोमृडजीवसे॑ ॥ ४९ ॥ परि॑नोरुद्रस्य॑हेतिर्वृ॑णक्तुपरि॑त्त्वेषस्य॑दुर्म्मतिर॑घायो॑ ॥ अव॑स्थिरामुघव॑द्द्भ्यस्तनुष्ष्वमीढ्व॑

स्तोकायतनयाय मृड ॥ ५० ॥ मीढुष्टमशिवतमशिवोनः सुमना भव ॥ परमे वृक्षऽआयुधन्निधाय कृत्तिंवसानऽआचरपिनाकम्बिभ्रदागहि ॥ ५१ ॥ विकिरिदविलोहितनमस्तेऽअस्तु भगवः ॥ यास्तेसहस्रꣳहेतयोन्यमस्मन्निवपन्तु ताः ॥ ५२ ॥ सहस्राणि सहस्रशो बाह्वोस्तव हेतयः ॥ तासामीशानो भगवःपराचीनामुखाकृधि ॥ ५३ ॥ असङ्ख्याताः सहस्राणि ये रुद्राऽअधिभूम्याम् ॥ तेषाꣳसहस्रयोजनेवधन्वानि तन्मसि ॥ ५४ ॥ अस्मिन्महत्यर्णवेन्तरिक्षेभवाऽअधि ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ५५ ॥ नीलग्रीवाःशितिकण्ठा दिवꣳ रुद्राऽउपश्रिताः ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ५६ ॥ नीलग्रीवाःशितिकण्ठाःशर्वाऽअधःक्षमाचराः ॥ तेषाꣳ सहस्रयोजनेवधन्वानितन्मसि ॥ ५७ ॥ ये वृक्षेषु शष्पिञ्जरानीलग्रीवाविलोहिताः ॥ तेषां० ॥ ५८ ॥ ये भूतानामधिपतयो विशिखासः कपर्दिनः ॥ तेषां० ॥ ५९ ॥ ये पथाम्पथिरक्षयऽऐलबृदाऽआयुर्युधः ॥ तेषां० ॥ ६० ॥ ये तीर्थानिप्रचरन्तिसृकाहस्ता निषङ्गिणः ॥ तेषां० ॥ ६१ ॥ येन्नेषुविविध्यन्ति पात्रेषु पिबतो जनान् ॥ तेषां० ॥ ६२ ॥ यऽएतावन्तश्च भूयाꣳसश्चदिशोरुद्रावितस्थिरे ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ६३ ॥ नमोस्तु रुद्रेभ्योयेदिवियेषांवर्षमिषवः ॥ तेभ्यो दशप्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६४ ॥ नमोस्तु रुद्रेभ्योयेन्तरिक्षे येषां वातऽइषवः ॥ तेभ्योदशप्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥ तेभ्यो नमोऽअस्तुतेनोवन्तुतेनोमृडयन्तु तेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भे दध्मः ॥ ६५ ॥ नमोस्तु रुद्रेभ्योयेपृथिव्यांयेषामन्नमिषवः ॥ तेभ्योदशप्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥ तेभ्यो नमोऽअस्तु तेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६६ ॥ इति रौद्रं सूक्तम् ॥ अथ पौरुषं सूक्तम् ॥ य० अ० ॥ ३१ ॥ सहस्रशीर्षापुरुषः सहस्राक्षःसहस्रपात् ॥ सभूमिꣳ सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुषऽएवेदꣳसर्वंयद्भूतं यच्चभाव्यम् ॥ उतामृतत्त्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥ एतावा

नस्य महिमातोज्ज्यायाँश्च्च पूरुषः ॥ पादोस्य विश्वाभूतानित्रिपादस्यामृतन्दिवि ॥ ३ ॥ त्रिपादूर्द्ध्वऽउदैत्पुरुषः पादोस्येहाभवत्पुनः ॥ ततोवि
ष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥ ४ ॥ ततो विराडजायत विराजोऽअधिपूरुषः ॥ सजातोऽअत्त्यरिच्यत पश्चाद्भूमिमथोपुरः ॥ ५ ॥
तस्माद्यज्ञात्सर्व्वहुतः सम्भृतम्पृषदाज्ज्यम् ॥ पशूँस्ताँश्चक्रे वायव्यानारण्यान्ग्राम्याश्चये ॥ ६ ॥ तस्माद्यज्ञात्सर्व्वहुतऽऋचः सामानि जज्ञिरे ॥
छंदाछंसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ७ ॥ तस्मादश्वाऽअजायंत ये केचोभयादतः ॥ गावोह जज्ञिरे तस्मात्तस्माज्जाताऽअजावयः
॥ ८ ॥ तंय्यज्ञम्बर्हिषिप्रौक्षन्पुरुषञ्जातमग्रतः ॥ तेन देवाऽअयजन्त साद्ध्याऽऋषयश्च ये ॥ ९ ॥ यत्पुरुषं व्यदधुः कतिधाव्यकल्पयन् ॥
मुखङ्किमस्यासीत्किम्बाहूकिमूरू पादाऽउच्येते ॥ १० ॥ ब्राह्मणोस्य मुखमासीद्बाहू राजन्यः कृतः ॥ ऊरू तदस्ययद्वैश्यः पद्भ्याछंशूद्रोऽ
अजायत ॥ ११ ॥ चन्द्रमा मनसो जातश्चक्षोःसूर्य्योऽअजायत ॥ श्श्रोत्राद्वायुश्च्च प्राणश्च मुखादग्निरजायत ॥ १२ ॥ नाभ्याऽआसी
दन्तरिक्षछंशीर्ष्णो द्यौःसमवर्त्तत ॥ पद्भ्याम्भूमिर्दिशःश्रोत्रात्तथा लोकाँऽअकल्पयन् ॥ १३ ॥ यत्पुरुषेण हविषा देवा यज्ञमतन्वत ॥
वसन्तोस्यासीदाज्ज्यं ग्रीष्मऽइध्मःशरद्धविः ॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ॥ देवा यद्यज्ञन्तन्वानाऽअबध्नन्
न्पुरुषम्पशुम् ॥ १५ ॥ यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् ॥ तेह नाकम्महिमानः सचन्त यत्र पूर्व्वेसाद्ध्याःसंति देवाः
॥ १६ ॥ इति पुरुषसूक्तम् ॥ अथ श्लोकाध्यायः ॥ यजु० अ० ॥ ३० ॥ ॐ देव सवितः प्रसुवयज्ञम्प्रसुव यज्ञपतिम्भगाय ॥ दिव्यो
गन्धर्व्वः केतपूः केतन्नः पुनातु वाचस्पतिर्व्वाचन्नः स्वदतु ॥ १ ॥ तत्सवितुर्व्वरेण्यम्भर्गोदेवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥ २ ॥
विश्श्वानि देव सवितर्दुरितानि परासुव ॥ यद्भद्रन्तन्नऽ आसुव ॥ ३ ॥ विभक्तारछं हवामहेवसोश्चित्रस्यराधसः ॥ सवितारन्नृचक्षसम् ॥ ४ ॥
ब्रह्मणेब्राह्मणङ्क्षत्रायराजन्यम्मरुद्भ्योवैश्यन्तपसेशूद्रन्तमसेतस्करन्नारकायवीरहणम्पाप्मने क्लीबमाक्रयायाऽअयोगूम्कामाय पुँश्चलूमतिक्रु

ष्टायमागधम् ॥ ५ ॥ नृत्ताय सूतङ्गीताय शैलूषन्धर्म्माय सभाचरन्नरिष्ठायै भीमलन्नर्म्माय रेभꣳ हसाय कारिमानन्दाय स्त्रीषखम्प्रमदे कुमा
रीपुत्रम्मेधायै रथकारन्धैर्य्याय तक्षाणम् ॥ ६ ॥ तपसे कौलालम्मायायै कर्म्मारꣳ रूपाय मणिकारꣳ शुभे वपꣳ शरव्याया इषुकारꣳ हेत्यै
धनुष्कारङ्कर्म्मणे ज्याकारन्दिष्टाय रज्जुसर्जम्मृत्यवे मृगयुमन्तकाय श्वनिनम् ॥ ७ ॥ नदीभ्यः पौञ्जिष्ठमृक्षीकाभ्यो नैषादम्पुरुषव्याघ्राय
दुर्म्मदङ्गन्धर्वाप्सरोभ्यो व्रात्यम्प्रयुग्भ्य उन्मत्तꣳ सर्प्पदेवजनेभ्यो ऽप्रतिपदमयेभ्यः कितवमीर्य्यतायाऽअकितवम्पिशाचेभ्यो बिदलकारीं
यातुधानेभ्यः कण्टकीकारीम् ॥ ८ ॥ सन्धये जारङ्गेहायोपपतिमार्त्त्यै परिवित्तं निर्ऋत्यै परिविविदानमराद्ध्या एदिधिषुः पतिन्निष्कृत्यै पे
शस्कारीꣳ संज्ञानाय स्मरकारीम्प्रकामोद्यायोपसदं वर्णायानुरुधम्बलायोपदाम् ॥ ९ ॥ उत्सादेभ्यः कुब्जम्प्रमुदे वामनन्द्वार्भ्यः
स्रामꣳ स्वप्नायान्धमधर्म्माय बधिरम्पवित्राय भिषजम्प्रज्ञानाय नक्षत्रदर्शमाशिक्षायै प्रश्निनमुपशिक्षायाऽअभिप्रश्निनम्मर्य्यादायै प्रश्नविवा
कम् ॥ १० ॥ अर्मेभ्यो हस्तिपञ्जवायाश्वपम्पुष्ट्यै गोपालं वीर्य्यायाविपालन्तेजसे ऽजपालमिरायै कीनाशङ्कीलालाय सुराकारम्भद्राय गृहपꣳ
श्रेयसे वित्तधमाध्यक्ष्यायानुक्षत्तारम् ॥ ११ ॥ भायै दार्वाहारम्प्रभाया ऽअग्न्येधम्ब्रध्नस्य विष्टपायाभिषेक्तारं वर्षिष्ठाय नाकाय परिवेष्टारं
देवलोकाय पेशितारम्मनुष्यलोकाय प्रकरितारꣳ सर्वेभ्यो लोकेभ्य उपसेक्तारमवऽऋत्यै वधायोपमन्थितारम्मेधाय वासःपल्पूलीम्प्रकामा
य रजयित्रीम् ॥ १२ ॥ ऋतये स्तेनहृदयं वैरहत्याय पिशुनं विविक्त्यै क्षत्तारमौपद्रष्ट्र्यायानुक्षत्तारम्बलायानुचरम्भूम्ने परिष्कन्दम्प्रियाय प्रिय
वादिनमरिष्ट्या ऽअश्वसादꣳ स्वर्ग्गाय लोकाय भागदुघं वर्षिष्ठाय नाकाय परिवेष्टारम् ॥ १३ ॥ मन्यवे ऽयस्तापङ्क्रोधाय निसरं योगाय योक्तारꣳ
शोकायाभिसर्त्तारङ्क्षेमाय विमोक्तारमुत्कूलनिकूलेभ्यस्त्रिष्ठिनं वपुषे मानस्कृतꣳ शीलायाञ्जनीकारीन्निर्ऋत्यै कोशकारीं यमायासूम् ॥ १४ ॥
यमाय यमसूमथर्वभ्यो ऽवतोकाꣳ संवत्सराय पर्य्यायिणीम्परिवत्सरायाविजातामिदावत्सरायातीत्त्वरीमिद्वत्सरायातिष्कद्वरीं वत्सराय विजं

र्ज्जरा ७ँ सँवत्सराय पलिक्नीमृभुभ्योऽजिनसन्धꣳ साध्येभ्यश्चर्म्मम्नम् ॥ १५ ॥ सरोभ्यो धैवरमुपस्थावराभ्यो दाशँवैशन्ताभ्योवैन्द
न्नड्वलाभ्यःशौष्कम्पाराय मार्गारमवाराय कैवर्त्तं तीर्थेभ्य आन्दं विषमेभ्योमैनालꣳ स्वनेभ्यःपर्णकङ्गुहाभ्यःकिरातꣳ सानुभ्यो
जम्भकम्पर्वतेभ्यःकिम्पूरुषम् ॥ १६ ॥ बीभत्सायैपौल्कसंवर्ण्णायहिरण्यकारन्तुलायैवाणिजम्पश्चादोषायग्लाविनंविश्वेभ्योभूतेभ्य ÷ सि
ध्मलम्भूत्यैजागरणमभूत्यै स्वपनमार्त्यै जनवादिनम्व्यृद्ध्याऽअपगल्भꣳ संꣳशरायप्रच्छिदम् ॥ १७ ॥ अक्षराजायकितवङ्कृतायादिनव
दर्शन्त्रेतायै कल्पिनन्द्वापरायाधिकल्पिनमास्कन्दायसभास्थाणुम्मृत्यवे गोव्यच्छमन्तकायगोघातङ्क्षुधेयोगाम्विकृन्तन्तम्भिक्षमाणऽउपतिष्ठ
तेदुष्कृतायचरकाचार्य्यम्पाप्मनेसैलगम् ॥ १८ ॥ प्रतिश्रुत्कायाऽअर्त्तनङ्घोषायभषमन्तायबहुवादिनमनन्तायमूकꣳ शब्दायाडंबराघातम्महसे
वीणावादङ्क्रोशायतूणवध्मम्वरस्पराय शङ्खध्मम्वनाय वनपमन्यतोऽरण्यायदावपम् ॥ १९ ॥ नर्म्मायपुँश्चलूꣳहसायकारिँ यादसेशाब
ल्यांग्रामण्यङ्गणकमभिक्रोशकन्तान्महसेवीणावादम्पाणिघ्नन्तूणवध्मन्तानृत्तायानन्दायतलवम् ॥ २० ॥ अग्नयेपीवानम्पृथिव्यैपीठसर्प्पिणं
वायवेचाण्डालमन्तरिक्षायवꣳशनर्त्तिनन्दिवेखलतिꣳ सूर्य्यायहर्य्यक्षन्नक्षत्रेभ्यः किर्म्मिरश्चन्द्रमसेकिलासमन्हेशुक्लम्पिङ्गाक्षꣳ रात्र्यै कृष्ण
म्पिङ्गाक्षम् ॥ २१ ॥ अथैतानष्टौविरूपानालभतेतिदीर्घञ्चातिह्रस्वञ्चातिस्थूलञ्चातिकृशञ्चातिशुक्लञ्चातिकृष्णञ्चातिकुल्वञ्चातिलोमशञ्च
अशूद्राऽअब्राह्मणास्तेप्राजापत्याः ॥ मागधःपुँश्चलीकितवःक्लीबोशूद्राऽअब्राह्मणास्तेप्राजापत्याः ॥ २२ ॥ इति श्लोकाध्यायः समाप्तः ॥
अथ शुक्रियं ऋचंवाचं सूक्तम् ॥ यजु० अ० ॥ ३६ ॥ ॐ ऋचं वाचम्प्रपद्ये मनोयजुः प्रपद्ये साम्प्राणम्प्रपद्ये चक्षुःश्रोत्रम्प्रपद्ये ॥
वागोज ÷ सहोजोमयिप्राणापानौ ॥ १ ॥ यन्मेछिद्रञ्चक्षुषोहृदयस्यमनसोवातितृण्णम्बृहस्पतिर्म्मेतद्दधातु ॥ शन्नोभवतुभुवनस्ययस्पतिः ॥
॥ २ ॥ भूर्भुवः स्वः तत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि ॥ धियोयोन ÷ प्रचोदयात् ॥ ३ ॥ कयानश्चित्रऽआभुवदूतीसदावृधःसखा ॥ कया

शचिष्ठयावृता ॥ ४ ॥ कस्त्वा सत्यो मदानाम्मꣳहिष्ठोमत्सदन्धसः ॥ दृढाचिदारुजेवसु ॥ ५ ॥ अभीषुणः सखीनामविता जरितृणाम् ॥
शतम्भवास्यूतिभिः ॥ ६ ॥ कयात्वन्नऽऊत्याभिप्रमन्दसे वृषन् ॥ कया स्तोतृभ्यऽआभर ॥ ७ ॥ इन्द्रो विश्वस्य राजति शन्नोऽअस्तुद्विपदे
शञ्चतुष्पदे ॥ ८ ॥ शन्नोमित्रः शंवरुणः शन्नोभवत्वर्यमा ॥ शन्नऽइन्द्रोबृहस्पतिः शन्नोविष्णुरुरुक्रमः ॥ ९ ॥ शन्नोवातः पवताꣳ शन्न
स्तपतुसूर्यः ॥ शन्नःकनिक्रदद्देवः पर्जन्योऽअभिवर्षतु ॥ १० ॥ अहानिशम्भवन्तुनः शꣳरात्रीः प्रतिधीयताम् ॥ शन्नऽइन्द्राग्नीभवता
मवोभिः शन्नऽइन्द्रावरुणा रातहव्या ॥ शन्नऽइन्द्रापूषणा वाजसातौ शमिन्द्रासोमा सुविताय शंयोः ॥ ११ ॥ शन्नो देवीरभिष्टयऽआपो
भवन्तु पीतये ॥ शंय्योरभिस्रवन्तु नः ॥ १२ ॥ स्योना पृथिवि नो भवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाः ॥ १३ ॥ आपो हिष्ठामयोभु
वस्तानऽऊर्जेदधातन ॥ महेरणाय चक्षसे ॥ १४ ॥ योवः शिवतमो रसस्तस्य भाजयतेहनः ॥ उशतीरिव मातरः ॥ १५ ॥ तस्माऽअरङ्गमा
मवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ १६ ॥ द्यौःशान्तिरन्तरिक्षꣳशान्तिः पृथिवीशांतिरापःशांतिरोषधयःशान्तिः ॥ वनस्पतयः
शांतिर्विश्वेदेवाःशान्तिर्ब्रह्मशांतिः सर्वꣳ शांतिः शांतिरेवशांतिः सामाशान्तिरेधि ॥ १७ ॥ दृते दृꣳहमामित्रस्य माचक्षुषासर्वाणि भूता
निसमीक्षंताम् ॥ मित्रस्याहश्चक्षुषासर्वाणिभूतानिसमीक्षे ॥ मित्रस्यचक्षुषासमीक्षामहे ॥ १८ ॥ दृतेदृꣳहमा ॥ ज्योक्तेसन्दृशिजीव्यासञ्ज्यो
क्तेसन्दृशिजीव्यासम् ॥ १९ ॥ नमस्ते हरसे शोचिषेनमस्तेऽअस्त्वर्चिषे ॥ अन्याँस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मभ्यꣳशिवो भव ॥
॥ २० ॥ नमस्तेऽअस्तुविद्युतेनमस्तेस्तनयित्नवे ॥ नमस्तेभगवन्नस्तुयतःस्वः समीहसे ॥ २१ ॥ यतोयतः समीहसे ततोनोऽअभयं कुरु ॥
शन्नः कुरुप्रजाभ्योभयन्नः पशुभ्यः ॥ २२ ॥ सुमित्रियानऽआप ओषधयःसन्तुदुर्मित्रियास्तस्मैसन्तुय्योस्मान्द्वेष्टियञ्चवयंद्विष्मः ॥ २३ ॥
तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत ॥ पश्येमशरदः शतञ्जीवेमशरदः शतꣳशृणुयामशरदः शतम्प्रब्रवामशरदः शतमदीनाःस्यामशरदः शत

म्भूयश्चशरदः शतात ॥ २४ ॥ इति शुक्रियं ऋचंवाचं सूक्तम् ॥ अथ मण्डलाध्यायः ॥ यदेतन्मण्डलं तपतितन्महदुक्थंताऋचः सऋचां
लोकोथयदेतदर्चिर्दीप्यतेतन्महाव्रतं तानिसामानिससाम्नांलोकोथयऽएषऽएतस्मिन्मण्डलेपुरुषः सोग्निस्तानियजूंषिसयजुषां लोकः ॥ १ ॥
सैषात्रय्येवविद्या तपति तद्धैतदप्यविद्वांस आहुस्त्रयीवाऽएषाविद्या तपतीतिवाग्घैव तत्पश्यन्तीवदाति ॥ २ ॥ सएषएवमृत्युर्यएतस्मिन्म
ण्डलेपुरुषोथैतममृतंयदेतदर्चिदीप्यते तस्मान्मृत्युर्नम्रियतेमृतेह्यन्तस्तदुन दृश्यते मृतेह्यन्तः ॥ ३ ॥ तदेषश्लोकोभवत्यन्तरंमृत्योरमृतमित्यवरः
ह्येतन्मृत्योरमृतमृत्यावमृतमाहितमित्येतस्मिन्हिपुरुषएतन्मुण्डलंप्रतिष्ठितन्तपतिमृत्युर्विवस्वन्तवस्तऽइत्यसौवा आदित्यो विवस्वानेषह्यहोरात्रे
विवस्तेतमेषवस्तेसर्वतोह्यनेनपरिवृतो मृत्योरात्माविवस्वतीत्येतस्मिन्हि मण्डलऽएतस्य पुरुषस्यात्मैतदेष श्लोको भवति ॥ ४ ॥ तयोर्वाएतयो
रुभयोरेतस्यचार्चिषऽएतस्यपुरुषस्यैतन्मुण्डलं प्रतिष्ठा तस्मान्महदुक्थम्परस्मैनशंसेत्सन्नेदेतांप्रतिष्ठांछिनदाऽइत्येतां हसप्रतिष्ठां छिंत्तेयोमहदु
क्थंपरस्मैशंसेत् सातितस्मादुक्थशंसंभूयिष्ठंपरिचक्षते ॥ प्रतिष्ठाच्छिन्नोहिभवतीत्याधिदैवतम् ॥ ५ ॥ अथाधियज्ञंयदेतन्मण्डलन्तपत्ययंसरुक्मो
थयदेतदर्चिर्दीप्यतऽइदन्तत्पुष्करपर्णमापोह्येता आपः पुष्करपर्णमथयऽएषएतस्मिन्मण्डले पुरुषोयमेवसयोयंहिरण्मयः पुरुषस्तदेतदेवैत
त्रयंसंस्कृत्येहोपधत्ते तद्यजमानस्यैवानुसंस्थामूर्ध्वमुत्क्रामति तदेतमप्येतियएषतपतितस्मादग्निन्नाद्रियेतपरिहन्तुममुत्रह्येषतदाभवतीत्यएवा
धियज्ञम् ॥ ६ ॥ अथाध्यात्मं यदेतन्मण्डलंतपतियश्चैषरुक्मइदंतच्छुक्लमक्षन्नथयदेतदर्चिर्दीप्यतेयच्चैतत्पुष्करपर्णमिदंतत्कृष्णमक्षन्नथयएषएत
स्मिन्मुण्डलेपुरुषोयश्चैषहिरण्मयःपुरुषोयमेवसयोयं दक्षिणेक्षन्पुरुषः ॥ ७ ॥ सएषएव लोकम्पृणातामेषसोग्निरभिसंपद्यतेतस्यैतान्मिथुनंयोयं
सव्येक्षन्पुरुषोर्द्धमहैतदात्मनोयन्मिथुनंयदावैसहमिथनेनाथसर्वोथकृत्स्नः तायेतद्यत्तेद्वे भवतोद्वंद्वं हि मिथुनं प्रजननं तस्माद्वेद्वेलोकंपृणेउ
पधीयेतेतस्माद्द्वाभ्यांद्वाभ्यां चितिं प्रणयन्ति ॥ ८ ॥ सएष एवेंद्रोयोयंदक्षिणेक्षन्पुरुषोथेयमिन्द्राणीताभ्यांदेवाएतांविधृतिमकुर्वन्नासिकांतस्मा

ज्जायायाअन्तेनाश्नीयाद्वीर्यवाह्वास्माज्जायतेवीर्यवन्तमुहस्माजनयति यस्याअन्ते नाश्नाति ॥ ९ ॥ तदेतद्देवव्रतꣳ राजन्यबंधवोमनुष्याणाम
नुतमुंगोपायन्तितस्मादेतेषुवीर्यवाञ्जायतेमृतवाकाव्वयसा ७ꣳ साक्षिप्रश्येनंजनयति ॥ १० ॥ तौहृदयाकाशंप्रत्यवेत्यमिथुनीभवतस्तौयदामिथुन
स्यान्तंगच्छतोथहैतत्पुरुषꣳ स्वपितितद्यथाहैवेदं मानुषस्यमिथुनस्यान्तंगत्वासंविदइवभवत्येवꣳ हैवैतदसंविदइवभवतिदैवꣳ ह्येतन्मिथुनं
परमोह्येषआनन्दꣳ ॥ ११ ॥ तस्मादेवंवित्स्वप्यात्लोक्यꣳ हैतेएवतद्देवतेमिथुनेनप्रियेणधाम्नासमर्द्धयतितस्माहस्वपन्तंधुरेवनबोधयेन्नेदेतेदेव
तेमिथुनीभवन्त्यौहिनसानीतितस्मादुहैतत्सुषुपुषꣳ श्लेष्मणमिवमुखंभवत्येतेएवतद्देवतेरेतꣳ सिंचतस्तस्माद्रेतसइदꣳ सर्वꣳ संभवतियदिदं
किञ्च ॥ १२ ॥ सऽएषएवमृत्युर्यएषएतस्मिन्मण्डलेपुरुषोयश्चायं दक्षिणेक्षन्पुरुषस्तस्यहैतस्यहृदयेपादावतिहतौतौहैतदाच्छिद्योत्क्रामातिसयदो
त्क्रामत्यथहैतत्पुरुषोम्रियतेतस्मादुहैतत्प्रेतमाहुराच्छेद्यस्येति ॥ १३ ॥ एषउएवप्राणःएषहीमाꣳ सर्वाꣳ प्रजाꣳ प्रणयतितस्यैतेप्राणाꣳ स्वाꣳ सय
दास्वपित्यथैनमेतेप्राणाꣳ स्वाअपियन्तितस्मात्स्वाप्ययꣳ स्वाप्ययोहवैतꣳ स्वप्नइत्याचक्षतेपरोक्षंपरोक्षकामाहिदेवाꣳ ॥ १४ ॥ सएतैꣳ सुप्तौन
कस्यचनवेदनमनसासङ्कल्पयतिनवाचान्नस्यरसंविजानातिनप्राणेगंधंविजानातिनचक्षुषापश्यति न श्रोत्रेशृणोत्येतꣳ ह्येतेतदापीताभवन्तिस
एषएकꣳ सन्प्रजासुबहुधा व्याविष्टस्तस्मादेकासतीलोकम्पृणासर्वमग्निमनुविभवंत्यथयदेक एव तस्मादेका ॥ १५ ॥ तदाहुरेको मृत्युर्बहव ३
इत्येकश्चबहवश्चेतिह ब्रूयाद्यदिहासावमुत्र तेनैकोथयदिहप्रजासुबहुधा व्याविष्टस्तेनोबहवꣳ ॥ १६ ॥ तदाहुरन्तिके मृत्युर्दूरा३इत्यन्तिकेचदूरेचे
तिहब्रूयाद्यदहायमिहाध्यात्मन्तेनान्तिकेथयदसावमुत्र तेनोदूरे ॥ १७ ॥ तदेष श्लोको भवत्यन्ते भात्यश्रितोरसानाꣳसंक्षरेमृतइतियदेतन्मण्डलं
तपतिततदन्नमथयएषएतस्मिन्मण्डले पुरुषꣳ ॥ सोत्तासएतस्मिन्नन्नेपश्रितो भातीत्यधिदैवतम् ॥ १८ ॥ अथाध्यात्ममिदमेव शरीरमन्नमथयोयं
दक्षिणेक्षन्पुरुषꣳ सोत्तास एतस्मिन्नन्नेपश्रितो भाति ॥ १९ ॥ तमेतमग्निरित्यध्वर्यव उपासते यजुरित्येषहीदꣳ सर्वंयनक्तिसामेतिच्छंदोगाऽएत

स्मिन्हीदꣳसर्वꣳ समानमुक्थमितिबह्वृचा एषहीदꣳ सर्वमुत्थापयतियातुरिति यातुविद एतेनहीदꣳ सर्वंयतं विषमिति सर्पाःसर्पइतिस
र्पविद ऊर्गितिदेवाऽरयिरिति मनुष्यामायेत्यसुराः स्वधेतिपितरोदेवजनइतिदेवजनविदोरूपमितिगंधर्वागंधइत्यप्सरसस्तंयथायथोपासतेतदे
वभवतितद्धैनाभूत्वावतितस्मादेनमेवंवित्सर्वैरेवैतैरुपासीत सर्वꣳ हैतद्भवति सर्वꣳ हेनमेतद्भूत्वावति ॥ २० ॥ सऽएषत्रीष्टकोग्निरर्कएकाय
जुरेकासामैकात्तद्यांकाश्चात्रर्चोपदधातिरुक्मएवतस्याआयतनमथयांयजुषापुरुषएवतस्याआयतनमथयाꣳसाम्नापुष्करपर्णमेव तस्या आयतन
मेवन्त्रीष्टकः ॥ २१ ॥ तेवाएते उभे एषचरुक्मएतच्चपुष्करपर्णमेतंपुरुषमपीतउभेह्यक्सामयजुरपीतएवम्वेकेष्टकः ॥ २२ ॥ स एष एवमृत्युर्यएषए
तस्मिन्मण्डलेपुरुषोयश्चायं दक्षिणेक्षन्पुरुषः ॥ स एष एवंविदआत्माभवति सयदैवंविदस्माँल्लोकात्प्रैत्यथैतमेवात्मानमभिसंभवतिसोमृतोभवति
मृत्युर्ह्यस्यात्मा भवति ॥ २३ ॥ इति मण्डलाध्यायं ब्राह्मणसूक्तम् ॥ इति द्वारजाप्यसूक्तानि ॥ अथ जापकजप्यानि सूक्तानि ॥ तत्रादौ शाक्रं
सूक्तम् ॥ यजु० अ० ॥ १७ ॥ मन्त्रः ॥ ३३ ॥ ॐ आशुः शिशानोवृषभोनभीमो घनाघनः क्षोभणश्चर्षणीनाम् ॥ सङ्क्रन्दनोनिमिषऽएकवीरः शꣳ
तꣳ सेनाअजयत्साकमिन्द्रः ॥ १ ॥ सङ्क्रन्दनेनानिमिषेणजिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना ॥ तदिन्द्रेणजयततत्सहध्वंयुधोनरऽइषुह
स्तेनवृष्णा ॥ २ ॥ सऽइषुहस्तैःसनिषङ्गिभिर्वशीसꣳ स्रष्टासयुधऽइन्द्रोगणेन ॥ सꣳसृष्टजित्सोमपाबाहुशर्द्ध्युग्रधन्वाप्रतिहिताभिरस्ता
॥ ३ ॥ बृहस्पतेपरिदीयारथेनरक्षोहामित्राँ २ ऽअपबाधमानः ॥ प्रभञ्जन्त्सेनाः प्रमृणोयुधाजयन्नस्माकमेद्ध्यविताथानाम् ॥ ४ ॥
बलविज्ञायस्थविरःप्रवीरः सहस्वान्वाजी सहमानऽउग्रः ॥ अभिवीरोऽअभिसत्वासहोजाजैत्रमिन्द्ररथमातिष्ठ गोवित ॥ ५ ॥ गोत्रभिदं
गोविदं वज्रबाहुञ्जयन्तमज्मप्रमृणन्तमोजसा ॥ इमꣳ सजाताऽअनुवीरयद्ध्वमिन्द्रꣳ सखायोऽअनुसꣳ रभद्ध्वम् ॥ ६ ॥ अभिगोत्राणि
सहसागाहमानोदयो वीरःशतमन्युरिन्द्रः ॥ दुश्च्यवनः पृतनाषाडयुद्ध्योस्माकꣳ सेनाऽअवतु प्रयुत्सु ॥ ७ ॥ इन्द्रऽआसान्नेता बृहस्प

तिर्दक्षिणायज्ञऽपुरऽएतु सोमः ॥ देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतोयन्त्वग्ग्रम् ॥ ८ ॥ इन्द्रस्य वृष्णोवरुणस्य राज्ञऽआदित्यानाम्म
रुताꣳशर्द्धऽउग्ग्रम् ॥ महामनसाम्भुवनच्यवानाङ्घोषोदेवानाञ्जयतामुदस्थात् ॥ ९ ॥ उद्धर्षय मघवन्नायुधान्युत्सत्त्वनाम्मामकानाम्मना
ꣳसि ॥ उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानाञ्जयतांय्यन्तुघोषाः ॥ १० ॥ अस्माकमिन्द्रःसमृतेषुद्ध्वजेष्ववस्माकं य्याऽइषवस्ता जयन्तु ॥ अस्मा
कंव्वीराऽउत्तरे भवन्त्वस्माँ २ ऽउदेवाऽअवताहवेषु ॥ ११ ॥ अमीषाञ्चित्तम्प्रतिलोभयन्ती गृहाणाङ्गान्यप्प्वेपरेहि ॥ अभिप्प्रेहि निर्दहहृत्सु
शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥ १२ ॥ अवसृष्टापरापतशरव्ये ब्रह्मस ꣳशिते ॥ गच्छामित्रान्प्रपद्यस्वमामीषाङ्कञ्चनोच्छिषः ॥ १३ ॥
प्रेताजयतानरऽइन्द्रोवः शर्मयच्छतु ॥ उग्ग्रावः सन्तु बाहवोनाधृष्यायथासथ ॥ १४ ॥ असौयासेनामरुतः परेषामभ्येतिनऽओजसा
स्प्पर्द्धमाना ॥ ताङ्गूहततमसापव्रतेनयथामीऽअन्योऽअन्न्यन्नजानन् ॥ १५ ॥ यत्र बाणाःसम्पतन्तिकुमाराव्विशिखाऽइव ॥ तन्नऽइन्द्रोबृह
स्पतिरदितिः शर्म्मयच्छतुव्विश्श्वाहाशर्म्मयच्छतु ॥ १६ ॥ मर्म्माणितेव्वर्म्मणाच्छादयामिसोमस्त्वाराजामृतेनानुवस्ताम् ॥ उरोर्व्वरीयोवरुण
स्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु ॥ १७ ॥ इति शाक्रं सूक्तम् ॥ अथ रौद्रं सूक्तम् ॥ यजु० अ० ॥ १६ ॥ मन्त्राः ॥ ४८ ॥ इमारुद्रायतवसे
कपर्द्दिनेक्षयद्वीरायप्प्रभरामहेमतीः ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वंपुष्टङ्ग्रामेऽअस्मिन्ननातुरम् ॥ १ ॥ यातेरुद्रशिवातनूः शिवाविश्वाहा
भेषजी ॥ शिवारुतस्यभेषजीतयानोमृडजीवसे ॥ २ ॥ परिणोरुद्रस्यहेतिर्व्वृणक्तुपरित्त्वेषस्यदुर्म्मतिरघायोः ॥ अवस्थिरामघवद्भ्यस्तनुष्व
मीढ्वस्तोकायतनयायमृड ॥ ३ ॥ मीढुष्टमशिवतमशिवोनः सुमना भव ॥ परमेवृक्षऽआयुधन्निधायकृत्तिंवसानऽआचरपिनाकम्बिभ्रदा
गहि ॥ ४ ॥ विकिरिद्रविलोहितनमस्तेऽअस्तु भगवः ॥ यास्तसहस्र ꣳ हेतयोन्न्यमस्मान्निवपन्तुताः ॥ ५ ॥ सहस्राणिसहस्रशोबाह्वो
स्तवहेतयः ॥ तासामीशानोभगवः पराचीनामुखाकृधि ॥ ६ ॥ इति रौद्रं सूक्तम् ॥ अथ सौम्यं सूक्तम ॥ यजु० अ० ॥ ३४ ॥ मन्त्र ॥ २१ ॥

ॐ सोमो धेनुꣳ सोमोऽअर्वन्तमाशुꣳ सोमोवीरङ्कर्मण्यन्ददाति ॥ सादन्यं विदुत्थ्यꣳ सभेयम्पितृश्रवणंयोददाशदस्मै ॥ १ ॥ त्वमिमाऽऔषधीः सोमविश्वास्त्वमपोऽअजनयस्त्वङ्गाः ॥ त्वमाततन्थोर्वन्तरिक्षन्त्वञ्ज्योतिषाविततमो ववर्थ ॥ २ ॥ देवेननोमनसा देवसोमरायो भागꣳ सहसावन्नभियुद्ध्य ॥ मात्वातनदीशिषेवीर्य्यस्योभयेभ्यः प्रचिकित्सागविष्टौ ॥ ३ ॥ अष्टौ व्यख्यत्ककुभः पृथिव्यास्त्रीधन्वयोजनासप्तसिंधून् ॥ हिरण्याक्षः सविता देवऽआगाद्दधद्रत्नादाशुषे वार्य्याणि ॥ ४ ॥ हिरण्यपाणिः सविताविचर्षणिरुभेद्यावापृथिवीऽअन्तरीयते ॥ अपामीवाम्बाधते वेतिसूर्य्यमभिकृष्णेन रजसाद्यामृणोति ॥ ५ ॥ हिरण्यहस्तोऽअसुरः सुनीथः सुमृडीकः स्ववायात्वर्वाङ् ॥ अपसेधन्नक्षसोयातुधानानस्थाद्देवः प्रतिदोषङ्गृणानः ॥ ६ ॥ इति सौम्यं सूक्तम् ॥ अथ कौष्माण्डं सूक्तम् ॥ यजु० अ० ॥ २० ॥ मंत्र ॥ १४ ॥ ॐ यद्देवादेवहेडनन्देवासश्चकृमा वयम् ॥ अग्निर्म्मातस्मादेनसोविश्वान्मुञ्चत्वꣳहसः ॥ १ ॥ यदि दिवायदिनक्तमेनाꣳसि चकृमाव्वयम् ॥ व्वायुर्म्मातस्मादेनसोविश्वान्मुञ्चत्वꣳहसः ॥ २ ॥ यदि जाग्रद्यदिस्वप्नऽएनाꣳसिचकृमावयम् ॥ सूर्य्योमातस्मादेनसोविश्वान्मुञ्चत्वꣳहसः ॥ ३ ॥ यद्ग्रामेयदरण्येयत्सभायांयदिन्द्रिये ॥ यच्छूद्रेयदर्य्येयदेनश्चकृमावयंयदेकस्याधिधर्म्मणितस्यावयजनमसि ॥ ४ ॥ इति कौष्मांडं सूक्तम् ॥ ततो जातवदेसं ( आग्नेयं ) सूक्तं पठेत् ॥ अथ जातवेदसं सूक्तम् ॥ यजुः अ० २७ मं० १ ॥ ॐ समास्त्वाग्नऋतवोवर्धयन्तु संवत्सराऋषयोयानि सत्या ॥ संदिव्येन दीदिहिरोचनेनविश्वाआभाहिप्रदिशश्चतस्रः ॥ १ ॥ संचेध्यस्वाग्निप्रचबोधयैनमुच्चतिष्ठमहतेसौभगाय ॥ माचरिषदुपसत्तातेऽअग्नेब्रह्माणस्ते यशसः सन्तुमान्ये ॥ २ ॥ त्वामग्नेवृणते ब्राह्मणाइमेशिवोअग्नेसंवरणेभवानः ॥ सपत्नहानोअभिमातिजिच्चस्वेगयेजागृह्यप्रयुच्छन् ॥ ३ ॥ इहैवाग्नेअधिधारयारयिंमात्वानिक्रन्पूर्वचितोनिकारिणः ॥ क्षत्रमग्ने सुयममस्तुतुभ्यमुपसत्तावर्धतांतेऽअनिष्टृतः ॥ ४ ॥ क्षत्रेणाग्नेस्वायुःसꣳरभस्वमित्रेणाग्नेमित्रधेयेयतस्व ॥ सजातानांमध्यमस्थाऽएधिराज्ञामग्नेविहव्योदीदिहीह ॥ ५ ॥ अतिनिहोअतिस्रधोऽत्य

चित्तिमत्यरातिमग्ने ॥ विश्वाह्यग्ने दुरिता सहस्वाथास्मभ्यꣳ सहवीरा ꣳ रयिन्दाः ॥ ६ ॥ अनाधृष्यो जातवेदा अनिष्टृतो विराडग्ने क्षत्रभृद्दीदि हीह ॥ विश्वा आशाः प्रमुञ्चन्मानुषीर्भियः शिवेभिरद्य परिपाहि नो वृधे ॥ ७ ॥ बृहस्पते सवितर्बोधयैनꣳ सꣳशितं चित्सन्तराꣳ सꣳशिशाधि ॥ वर्धयैनं महते सौभगाय विश्वऽएनमनुमदन्तु देवाः ॥ ८ ॥ अमुत्रभूयादध यद्यमस्य बृहस्पतेऽअभिशस्तेरमुञ्चः ॥ प्रत्यौहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः ॥ ९ ॥ उद्वयं तमसस्परि स्वः पश्यन्तऽउत्तरम् ॥ देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ १० ॥ इति जातवेद समनुवाकम् ॥ अथ सौरं सूक्तम् ॥ यजु० अ० ॥ ३३ ॥ मन्त्र ॥ ३० ॥ विभ्राड्बृहत्पिबतु सोम्यम्मध्वायुर्दधद्यज्ञपतावविह्रुतम् ॥ वातजूतो योऽअभिरक्षति त्मना प्रजाः पुपोष पुरुधा विराजति ॥ १ ॥ उदु त्यञ्जातवेदसन्देवं वहन्ति केतवः ॥ दृशे विश्वाय सूर्यम् ॥ २ ॥ येना पावक चक्षसा भुरण्यन्तञ्जनाँ २ अनु ॥ त्वं वरुण पश्यसि ॥ ३ ॥ दैव्यावध्वर्यूऽआगतꣳ रथेन सूर्यत्वचा ॥ मध्वा यज्ञꣳ समञ्जाथे ॥ तम्प्रत्नथायं वेनश्चित्रन्देवानाम् ॥ ४ ॥ आनऽइडाभिर्विदथे सुशस्ति विश्वानरः सविता देवऽएतु ॥ अपि यथा युवानो मत्सथा नो विश्वञ्जगदभिपित्वे मनीषा ॥ ॥ ५ ॥ यदद्य कच्च वृत्रहन्नुदगाऽअभि सूर्य ॥ सर्वन्तदिन्द्र ते वशे ॥ ६ ॥ तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य ॥ विश्वमाभासि रोचनम् ॥ ७ ॥ तत्सूर्यस्य देवत्वन्तन्महित्वम्मध्या कर्तोर्विततꣳ सञ्जभार ॥ यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥ ८ ॥ तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपङ्कृणुते द्योरुपस्थे ॥ अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सम्भरन्ति ॥ ९ ॥ बण्महाँ २ऽअसि सूर्य बडादित्य महाँ २ऽअसि ॥ महस्ते सतो महिमा पनस्यतेऽद्धा देव महाँ २ऽअसि ॥ १० ॥ बट् सूर्य श्रवसा महाँ २ असि सत्रा देव महाँ २ असि ॥ मह्ना देवानामसुर्यः पुरोहितो विभु ज्योतिरदाभ्यम् ॥ ११ ॥ श्रायन्तऽइव सूर्यं विश्वेदिन्द्रस्य भक्षत ॥ वसूनि जाते जनमानऽओजसा प्रति भागन्न दीधिम ॥ ॥ १२ ॥ अद्या देवाऽउदिता सूर्यस्य निरꣳहसः पिपृता निरवद्यात् ॥ तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवीऽउत द्यौः

॥ १३ ॥ आकृष्णेनरजसावर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च ॥ हिरण्ययेन सविता रथेनादेवोयातिभुवनानिपश्यन् ॥ १४ ॥ इति सौरसूक्तम् ॥
अथ शांतिकमन्त्राः ॥ ॐ आनोभद्रा ऽ क्रतवोयन्तुविश्वतोदब्धासोऽअपरीतासऽउद्भिदः ॥ देवानोयथासदमिद्वृधेऽअसन्नप्रायुवोरक्षिता रोदिवेदिवे ॥ १ ॥ देवानाम्भद्रासुमतिर्ऋजूयतान्देवाना ऽ रातिरभिनोनिवर्त्तताम् ॥ देवानाᳬसख्यमुपसेदिमावयन्देवानऽआयुःप्र तिरन्तुजीवसे ॥ २ ॥ तान्पूर्वयानिविदाहूमहे वयम्भगं मित्रमदितिन्दक्षमस्रिधम् ॥ अर्य्यमणं वरुण ऽ सोममश्विनासरस्वतीनः सुभगा मयस्करत ॥ ३ ॥ तन्नो वातोमयोभुवातुभेषजन्तन्माता पृथिवी तत्पिताद्यौः ॥ तद्ग्रावाणः सोमसुतोमयोभुवस्तदश्विनाशृणुतन्धिष्ण्यायुवम् ॥ ४ ॥ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहे वयम् ॥ पूषानो यथावेदसामसद्वृधे रक्षितापायुरदब्धः स्वस्तये ॥ ५ ॥ स्वस्ति नऽइन्द्रोवृद्धश्रवाः स्वस्तिनःपूषा विश्ववेदाः । स्वस्तिनस्तार्क्ष्योऽ अरिष्टनेमिःस्वस्ति नोबृहस्पतिर्दधातु ॥ ६ ॥ पृषदश्वामरुतःपृश्निमातरः शुभं य्यावानोविदथेषु जग्मयः ॥ अग्निजिह्वामनवः सूरचक्षसोविश्वेनो देवाऽ अवसागमन्निह ॥ ७ ॥ भद्रङ्कर्णेभिः शृणुयाम देवाभद्रम्पश्येमा क्षभिर्य्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाᳬ सस्तनूभिर्व्यशेमहिदेवहितं यदायुः ॥ ८ ॥ शतमिन्नु शरदोऽअन्तिदेवायत्रानश्चक्राजरसन्तनूनाम् ॥ पुत्रासोयत्र पितरो भवन्ति मानोमद्ध्यारीरिषतायुर्गन्तोः ॥ ९ ॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माताससपितासपुत्रः ॥ विश्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्जातमदितिर्जनित्वम् ॥ १० ॥ इति शान्त्यनुवाकम् ॥ अथ पावमानसूक्तम् ॥ यजु० अ० १९ ॥ मन्त्रः ॥ ३ ॥ ७ ॥ ॐ पुनन्तुमापितरः सोम्यासः पुनन्तुमापितामहाः पुनन्तुप्रपितामहाः ॥ पवित्रेण शतायुषा पुनन्तु मा पितामहाः पुनन्तुप्रपितामहाः ॥ पवित्रे ण शतायुषा विश्वमायुर्व्यश्नवै ॥ १ ॥ अग्नआयू ऽ षि पवसआसुवोर्जमिषंचनः ॥ आरेबाधस्वदुच्छुनाम् ॥ २ ॥ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः ॥ पुनन्तु विश्वाभूतानि जातवेदः पुनीहि मा ॥ ३ ॥ पवित्रेण पुनीहि मा शुक्रेण देवदीद्यत ॥ अग्ने क्रत्वा क्रतू ऽ रनु ॥ ४ ॥ यत्तेप

वित्रमुर्च्चिष्यग्ने वितंतमन्तुरा ॥ ब्रह्म तेन पुनातु मा ॥ ५ ॥ पवमानःᳲ सोऽअद्य नः ॥ पवित्रेण विचर्षणिःᳲ ॥ यःपोता स पुनातु मा ॥ ६ ॥ उभाभ्यां
न्देव सवितः पवित्रेण सवेन च ॥ माम्पुनीहि विश्वतः ॥ ७ ॥ वैश्वदेवी पुनती देव्यागाद्यस्यामिमा बह्व्यस्तन्न्वो वीतपृष्ठाः ॥ तया मदन्तःᳲसधमा
देषुवयःᳲ स्याम पतयो रयीणाम् ॥ ८ ॥ इति पावमानसूक्तम् ॥ इनि यजुर्वेदिनां द्वारपालादिजाप्यसूक्तानि समाप्तानि ॥ अथ पश्चिमे

१ २ ३ २२ २२

सामवेदिनां द्वारपालजाप्यसूक्तानि ॥ तत्रादौ वामदेव्यसूक्तम् ॥ सामवेदे उत्तरार्चिकस्य प्रथमप्रपाठके द्वादशं सूक्तम् ॥ कयानश्चित्रआभु

३ २ ३ १ २ ३ १ २ २ ३ १ २ १ २ १ २ ३ १२ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २उ ३ २

वदूतीसदावृधः सखा ॥ कयाशचिष्ठयावृता ॥ १ ॥ कस्त्वासत्योमदानामᳲ हिष्ठोमत्सदन्धसः ॥ दृढाचिदारुजेवसु ॥ २ ॥ अभीषुणः सखीनाम

३ २ ३ २ ३ १ २ ३ १ २ १२

विताजरितॄणाम् ॥ शतंभवास्यूतये ॥ ३ ॥ इति वामदेव्यं सूक्तम् ॥ अथ बृहत्सामसूक्तम् ॥ साम० अध्याय० ॥ ३ ॥ खंड ॥ ४ ॥ ॐत्वामि

२र ३ १ २र ३ १ २ २ ३ १ २ ३ १ २ ३ २ ३ २ ३उ ३ १ २ १२२र ३ २ ३ १ २ ३ १ २

द्धिहवामहेसातौवाजस्यकारवः ॥ त्वांवृत्रेष्विन्द्रसत्पतिंनरस्त्वांकाष्ठास्वर्वतः ॥ १ ॥ सत्वंनश्चित्रवज्रहस्तधृष्णुयामहस्तवानोअद्रिवः ॥ गोम

२र ३ २ र ३ १ २ ३ २उ ३ २ ३ १ २ ३ १ २ ३ १

श्व रथ्यमिन्द्रसंकिरसत्रावाजंनजिग्युषे ॥ २ ॥ इति बृहत्साम ॥ अथ ज्येष्ठसामसूक्तम् ॥ साम० अ० ॥ ८ ॥ खं० ॥ ३ ॥ ॐमूर्धानंदिवो

२ ३ १ २ ३ १ २ ३ २ ३ २उ ३ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ १र २र ३ १ २ ३

अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम् ॥ कविंᳲसम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥ १ ॥ त्वांविश्वेअमृतजायमानᳲ

शिशुंनदेवाअभिसंनवन्ते ॥ तवक्रतुभिरमृतत्वमायन्वैश्वानरयत्पित्रोरदीदेः ॥ २ ॥ नाभिंयज्ञानाꣳ सदनꣳरयीणांमहामाहावमभिसंनवन्त ॥ वैश्वानरꣳरथ्यमध्वराणांयज्ञस्यकेतुंजनयन्तदेवाः ॥ ३ ॥ इति ज्येष्ठसाम ॥ साम० ॥ छन्द आर्चिके ॥ अ० ॥ ३ ॥ प्रथमा दशतिः ॥ अथ रथंतरम् ॥ अभित्वाशूरनोनुमोऽदुग्धाइवधेनवः ॥ ईशानमस्यजगतःस्वर्दृशमीशानमिंद्रतस्थुषः ॥ १ ॥ ( नत्वावां अन्योदिव्योनपार्थिवोन जातोनजनिष्यते ॥ अश्वायन्तोमघवन्निन्द्रवाजिनोगव्यन्तस्त्वाहवामहे ॥ २ ॥ ) त्वामिद्धिहवामहेसातौवाजस्यकारवः ॥ त्वांवृत्रेष्विन्द्रसत्पतिंनरस्त्वांकाष्ठास्वर्वतः ॥ २ ॥ अभिप्रवः सुराधसमिन्द्रमर्चयथाविदे ॥ योजरितृभ्योमघवापुरूवसुः सहस्रेणेवशिक्षति ॥ ॥ ३ ॥ तंवोदस्ममृतीषहंवसोर्मन्दानमन्धसः ॥ अभिवत्संनस्वसरेषुधेनवइन्द्रंगीर्भिर्नवामहे ॥ ४ ॥ तरोभिर्वोविदद्वसुमिन्द्रꣳसबाधऊतये ॥ बृहद्गायन्तः सुतसोमेअध्वरेहुवेभरंनकारिणम् ॥ ५ ॥ तरणिरित्सिषासातिवाजंपुरन्ध्यायुजा ॥ आवइन्द्रंपुरुहूतंनमेगिरानेमिंतष्टेवसुद्रुवम् ॥ ६ ॥ पिबासुतस्यरसिनोमत्स्वानइन्द्रगोमतः ॥ आपिर्नोबोधिसधमाद्यैर्वृधे ३ स्मांअवन्तुते

१ २ १उ ३ १ २ ३ २उ ३ १ २ १ २ १ २ ३ २ २ ३ २ १ ३ २ ३ १ २ १ २ २ २ ३ २ ३ १ २ २॰ २ ३ १

धियः ॥ ७ ॥ त्वꣳह्येहिचेरवेविदाभगवसुत्तये ॥ उद्वावृषस्वमघवन्गोविष्टय उदिन्द्राश्वमिष्टये ॥ ८ ॥ नहिवश्चरमंचनवसिष्ठः परिमꣳ

२ ३ १ २ ३ २ ३ १ २ ३ १ उ ३ १ २ ३ १२ १ २ ३ १ २ २ २ ३ १ २ २ ३ १ १ १ २ ३ २ १ २ १ २ ३

सते ॥ अस्माकमद्यमरुतः सुतेसचाविश्वेपिबन्तुकामिनः ॥ ९ ॥ माचिदन्यद्विशꣳसतसखायोमारिषण्यत ॥ इन्द्रमित्स्तोतावृषणꣳसचासुते

२ २ २ ३ १ २

मुहुरुक्थाचशꣳसत ॥ १० ॥ इति रथंतरं सूक्तम् ॥ ततः साम० ॥ छन्द आर्चिके षष्ठोऽध्यायः ॥ चतुर्थीदशतिः ॥ तृतीय

३ २ १ ३ १ २ ३ २ ३ १ २ १ २ २ २ ३ २ ३ १ २ ३ २ ३ २ ३ २ ३ १२ ३ १

सूक्तम् ॥ ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात ॥ सभूमिꣳसर्वतोवृत्वात्यतिष्ठद्दशांगुलम् ॥ १ ॥ त्रिपादूर्द्धउदैत्पुरुषः

२ ३ १२३१ २ २ ३ २३ क २ २ ३ २ ३ २ १ २ ३ २ उ ३ २ ३ २ ३३ १ २ १ २ ३ १ २ ३ १ २ ३ १ २ ३

पादोस्येहाभवत्पुनः ॥ तथाविष्वङ्व्यक्रामदशनानशनेअभि ॥ २ ॥ पुरुषएवेदꣳसर्वंयद्भूतंयच्चभाव्यम् ॥ पादोस्यसर्वाभूतानित्रिपादस्याऽ

१ २ ३ २ १ २ ३ २उ ३ १ २ ३ १२ ३ १ २ ३१ २२ १२ २२ ३ १२१२ ३ १ २ ३ २ १ २ ३

मृतंदिवि ॥ ३ ॥ एतावानस्यमहिमाततोज्यायांश्चपूरुषः ॥ उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ ४ ॥ ततोविराडजायतविराजोअधि

१ २ २ ३ १२ २२ ३ २ २ ३१ ३२३ १ २ ३ १२ २

पूरुषः ॥ सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ ५ ॥ सामवेदे उत्तरार्चिकस्य प्रथमप्रपाठके द्वादशसूक्ते प्रथममन्त्रः ॥ कयानश्चित्रआभुव

३ २ ३ १ २ ३ १ २ २ ३ १ २ १ २

दूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ ६ ॥ इति पुरुषव्रतयोः पठितं षड्चात्मकं पुरुषसूक्तं पठेत् ॥ साम० ॥ छ० आ० अ० १ सू० ७ ॥

२ ३१ २ ३ १ २३१ २ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २

अत्र रुद्रसूक्तम् ॥ आवोराजानमध्वरस्यरुद्रꣳहोतारꣳसत्ययजꣳरोदस्योः ॥ अग्निंपुरातनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥ १ ॥

३ २उ ३ २ ३ १ २ २र ३ २ ३ १ २ ३ १ २ ३ १२ १२३ २ ३ १र २र ३ १ २
इन्धेराजासमर्योनमोभिर्यस्यप्रतीकमाहुतंघृतेन ॥ नरोहव्येभिरीडेतसबाध आग्निरग्रमुषसामशोचि ॥ २ ॥ इति रुद्रसूक्तम् ॥ तत आज्यदो
३ १ २ ३ १ २ ३ १२३१२ ३२ ३ २ उ ३२
हानि ॥ ३ ॥ देवव्रतसंज्ञानि त्रीणि ( ३ ) च पठेत् ॥ सा० उ० अ० ८ ख० ३ सू० म० १ ॥ ॐ मूर्द्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतआजात
३ २ ३ २ ३ २ ३ १ २ ३ १ २ ३२३ १ २ ३ २
मग्निम् ॥ कवि ँसम्राजमतिथिंजनानामासन्नापात्रंजनयन्तदेवाः ॥ इति मन्त्रमाज्यदोहसंज्ञकं त्रिधा जपेत् ॥ ३ ॥ ॐ अधिपतये मित्रपतयेक्ष
३ २ ३ २
त्रपतयेस्वःपतयेधनपतयेनमइत्यादिदेवव्रतसंज्ञकमनुवाकं त्रिधा जपेदिति ३ ॥ उ० अ० १९ ख० ४ सू० १ ॥ अथ शान्तिकाध्यायः ॥ अबोध्यग्निः
३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ २ २
समिधाजनानांप्रतिधेनुमिवायतीमुषासम् ॥ यह्वाइवप्रवयामुज्जिहानाःप्रभानवःसिस्रतेनाकमच्छ ॥ १ ॥ इत्यस्य त्रिधा जपः ॥ साम० उ०
१२३ १२ २र ३२३२ २३२३क२र ३१२ १२ ३ २ ३ १२ ३२ ३१ २ ३१ २ २ ३ २ उ ३ १२
अ० ११९ सू० २ ॥ अबोध्याग्निर्ज्मउदेतिसूर्योव्युऽ ३ षाश्चन्द्रामह्यावो अर्चिषा ॥ आयुक्षातामश्विनायातवेरथंप्रासावीद्देवः सविताजगत्पृथक् ॥
२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ ३ २ ३ १ २ ३ २ उ ३ १ २ ३ १ २ ३ १
॥ १ ॥ यद्युञ्जाथेवृषणमश्विनारथंघृतेननोमधुनाक्षत्रमुक्षतम् ॥ अस्माकंब्रह्मपृतनासुजिन्वतंवयंधनाशूरसाताभजेमहि ॥ २ ॥ अर्वाङ्त्रिचक्रो
२ ३ १ २ ३ १ २ २ १ २ ३ १ २ १२ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १२
मधुवाहनोरथोजीराश्वोअश्विनोर्यातुसुष्टुतः । त्रिबन्धुरोमघवाविश्वसौभगः शंनआवक्षद्द्विपदेचतुष्पदे ॥ ३ ॥ अथ भारुण्डसूक्तम् ॥ साम०, छ०
३२उ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २ उ ३ १ २ ३ १ २ ३ १ २ २ २
आ०, अ० १ , ७ दशतिः, सू० ४ ॥ इमंस्तोममर्हतेजातवेदसेरथमिवसंमहेमामनीषया ॥ भद्राहिनः प्रमतिरस्यसंसद्यग्नेसख्येमारिषामा

वयंतव ॥ १ ॥ मूर्द्धानंदिवोअरतिं पृथिव्यावैश्वानरमृत आजातमग्निम् ॥ कविंꣳसम्राजमतिथिंजनानामासन्नापात्रं जनयन्त देवाः ॥ २ ॥

वित्वदापोनपर्वतस्य पृष्ठादुक्थेभिरग्नेजनयन्तदेवाः ॥ तंत्वागिरःसुष्टुतयो वाजयन्त्याजिन्नगिर्वाहोजिग्युरश्वाः ॥ ३ ॥ आवोराजानमध्वरस्य

रुद्रंꣳहोतारं सत्ययजꣳरोदस्योः ॥ अग्निंपुरातनयित्नोरचित्ताद्धिरण्यरूपमवसेकृणुध्वम् ॥ ४ ॥ इंधेराजासमर्य्योनमोभिर्यस्यप्रतीकमाहुतं

घृतेन ॥ नरोहव्येभिरीलतेसबाध आग्निरग्रमुषसामशोचि ॥ ५ ॥ प्रकेतुना बृहतायात्यग्निरारोदसीवृषभोरोरवीति ॥ दिवश्चिदन्ता दुपमामुदान

उपामुपस्थेमहिषोववर्द्ध ॥ ६ ॥ अग्निंनरोदीधितिभिररण्योर्हस्तच्युतंजनयतप्रशस्तम् ॥ दूरेदृशंगृहपतिमथर्व्युम् ॥ ७ ॥ इत्येषां त्रिधा जपः ॥

सा० उ० अ० ७ प्रपा० ४ ख० १ सू० २ ॥ भरामेध्मंकृणवामाहवींषितेचितयन्तः पर्वणापर्वणावयम् ॥ जीवातवेप्रतराꣳसाधयाधियोऽग्नेसख्ये

मारिषामावयंतव ॥ १ ॥ शकेमत्वासमिधꣳसाधयाधियस्त्वेदेवाहविरदन्त्याहुतम् ॥ त्वमादित्याँऽआवहतान्ह्युऽ३श्मस्यग्नेसख्येमारिषामाव

यन्तव ॥ २ ॥ इति भारुण्डानि ॥ इति द्वारपालजाप्यसूक्तानि ॥ अथ सामगानां जापकजप्यानि ॥ अथ वैराजं सूक्तम् ॥

साम० उ० अ० ५ ख० ५ सू० १ ॥ पिबासोममिन्द्रमदन्तुत्वायन्तेसुषावहर्य्यश्वाद्रिः सोतुर्बाहुभ्याꣳसुयतोनार्वा ॥ १ ॥ यस्तेमदोयुज्य

श्चारुरस्तियेनवृत्राणिहर्य्यश्वहꣳसि ॥ सत्वामिन्द्रप्रभूवसोममन्तु ॥ २ ॥ बोधासुमेमघवन्वाचमेमायांतेवसिष्ठोअर्चतिप्रशस्तिम् ॥ इमाब्रह्म सधमादे जुषस्व ॥ ३ इति वैराजम् ॥ ततः पारुषं सूक्तं जपेत् ॥ अथ सौपर्णं सूक्तम् ॥ साम० उ० अ० १३ खं० २ सू० २ ॥ उद्घेदभिश्रुतामघंवृषभंनर्य्यापसम् ॥ अस्तारमेषिसूर्य्य ॥ १ ॥ नवयोनवतिंपुरोबिभेदबाह्वोजसा ॥ अहिंचवृत्रहाऽवधीत् ॥ २ ॥ सनइन्द्रः शिवः सखाश्वावद्गोमद्यवमत ॥ उरुधारेवदोहते ॥ ३ ॥ इति सौपर्णम् ॥ ततो रुद्रसंहितां पठेत् ॥ रुद्रसंहिता--आवोराजानमित्यादिवर्गद्वयं पूर्वमुक्तम् ॥ अथ शैशवं सूक्तम् ॥ साम० उ० अ० १ ख० ३ सू० १ ॥ उच्चातेजातमन्धसोदिविषद्भूम्याददे ॥ उग्रꣳशर्ममहिश्रवः ॥ १ ॥ सनइन्द्राययज्यवेवरुणायमरुद्भ्यः ॥ वरिवोवित्परिस्रुव ॥ २ ॥ एनाविश्वान्यर्यआद्युम्नानिमानुषाणाम् ॥ सिषासन्तोवनमहे ॥ ३ ॥ इति शैशवम् ॥ ततः पञ्चनिधनं सूक्तं रहस्यावीतं पठेत् ॥ अथ गायत्रं सूक्तम् ॥ साम० उ० अ० १३ ख० १ सू० ३ ॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनः प्रचोदयात् ॥ १ ॥ सोमानाꣳस्वरणंकृणुहिब्रह्मणस्पते ॥ कक्षीवन्तंयऔशिजः ॥ २ ॥ अग्नआयूꣳषिपवसआसुवोर्जमिषंचनः ॥ आरेबाधस्वदुच्छुनाम् ॥ इति गायत्रम् ॥ ततो ज्येष्ठसाम मूर्द्धानंदिव इत्यादि पूर्वमुक्तं पठेत् । वामदेव्यं कयानश्चित्रेति पठेत् ॥ बृहत्साम त्वामिद्धिहवामहे

इत्यादिपूर्वोक्तम् ॥ ( सोम्यं सोमव्रतंसंतेपयांसीत्यादिकम् ॥ ) अथ रौरवं सूक्तम् ॥ साम० छ० अ० ५ दशति ५ सू० १ ॥ पुनानःसोमधार

याऽपोवसानोअर्षसि ॥ आरत्नधायोनि मृतस्यसीदस्युत्सोदेवहिरण्ययः ॥ १ ॥ दुहानऊधर्दिव्यंमधुप्रियंप्रत्न सधस्थमासदत् ॥ आपृच्छयंध

रुणंवाज्यर्षसिनृभिर्धूतोविचक्षणः ॥ २ ॥ इति रौरवम् ॥ ततो रथन्तरं सूक्तम् अभित्वाशूरनोनुम इत्यादि पूर्वोक्तं पठेत् ॥ गवांव्रतं सूक्तम् ॥

ते मन्वंतरं प्रथमम् ॥ अग्निमीळे इत्यनयोर्गीतं सामद्वयम् ॥ अथ विकर्णं सूक्तम् ॥ साम० उ० अ० १३ खं० २ सू० ३ ॥ विभ्राड्बृहत्पिबतुसोम्यं

मध्वायुर्दधद्यज्ञपतावविह्रुतम् ॥ वातजूतोयोअभिरक्षातित्मनाप्रजाः पिपर्त्तिबहुधाविराजति ॥ १ ॥ विभ्राड्बृहत्सुभृतंवाजसात्तमंधर्मंदिवोधरु

णेसत्यमर्पितम् ॥ अमित्रहावृत्रहादस्युहन्तमंज्योतिर्जज्ञेअसुरहासपत्नहा ॥ २ ॥ इदꣳ श्रेष्ठंज्योतिषांज्योतिरुत्तमंविश्वजिद्धनजिदुच्यतेबृहत् ॥

विश्वभ्राड्भ्राजोमहिसूर्योदृशउरुपप्रथेसहओजो अच्युतम् ॥ ३ ॥ इति विकर्णम् ॥ अथ रक्षोघ्नम् ॥ ॐअग्नेरक्षाणोअꣳहसः प्रतिस्मदेवरी

षतः ॥ तपिष्ठैरजरोदह ॥ १ ॥ अग्नेयुक्ष्वाहियेतवाश्वासोदेवसाधवः ॥ अरंवहन्त्याशवः ॥ २ ॥ अथ यज्ञः ॥ बृहदिन्द्रायगायतमरुतोवृत्रह

न्तमम् ॥ येनज्योतिरजनयन्नृतावृधोदेवंदेवायजागृवि ॥ १ ॥ इति यज्ञः ॥ अथ क्षेपकसूक्तानि ॥ इन्द्रायसामगायतविप्रायबृहतेबृहत् ॥

२ ३ २ १२ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २३ १२३ १२ २उ ३१ २३
ब्रह्मकृतेविपाश्चितेपनस्यवे ॥ १ ॥ त्वमिन्द्राभिभूरसित्वꣳ सूर्य्यमरोचयः ॥ विश्वकर्म्माविश्वदेवोमहाꣵ असि ॥ २ ॥ विभ्राजंज्योतिषास्व ॥ ३ ॥ रग
१ २ ३ १ २ ३ १२ ३ १ २ ३
च्छोरोचनंदिवः ॥ देवास्तइन्द्रसख्याययेमिरे ॥ ३ ॥ इति ॥ साम० उ० अ० १ ख० ५ सू० १ स्वादिष्ठयामदिष्ठयापवस्वसोमधारया ॥
१ २ ३ १ २ ३ २ ३ २ ३१ २ ३ २उ ३ १ २१ १ २ ३२३ १२ ३ १२ ३१ २ ३
इन्द्रायपातवेसुतः ॥ १ ॥ रक्षोहाविश्वचर्षणिरभियोनिमयोहतम् ॥ द्रोणासधस्थमासदत् ॥ २ ॥ वरिवोधातमोभुवोमꣳहिष्ठोवृत्र
२१ २३ १२ ३१ २ १ २ ३ १२ २२ ३२ ३ १ २ ३ १
हन्तमः ॥ पर्षिराधोमघोनाम् ॥ ३ ॥ इति ॥ साम० उ० अ० १० ख० ११ सू० ३ ॥ गायन्तित्वागायत्रिणोर्चन्त्यर्कमर्किणः ॥ ब्रह्मा
२ ३ २३ १ २ २उ ३ १२ २ २ ३ १२ २२३ १ २ २उ २ १ २ ३ १२ ३ १ २ ३ २उ
णस्त्वाशतक्रतउद्वꣳशमिवयेमिरे ॥ १ ॥ यत्सानोःसान्वारुहोभूर्यस्पष्टकर्त्त्वम् ॥ तदिन्द्रोअर्थंचेततियूथेनवृष्णिरेजति ॥ २ ॥ युङ्क्ष्वाहि
३ २ ३ २ ३ १२ ३२ १२ ३ १२ २२
केशिनाहरीवृषणाकक्ष्यप्रा ॥ अथान इन्द्रसोमपागिरामुपश्रुतिं चर ॥ इति सामवेदिनां द्वारपालादिजाप्यसूक्तानि समाप्तानि ॥

( अथाथर्वणानां द्वारपालसूक्तानि ) तत्रादौ ( अथर्वाणम् ) सूक्तम् ॥ ॐ अथर्वाणं पितरंदेवबन्धुंमातुर्गर्भं पितुरसुं युवानम् ॥ यइमं यज्ञं मनसाचिकेतप्रणोवोचस्तमिहहेब्रवः ॥ १ ॥ इतिकेचित् ॥ छंदोगाय बृहद्गायइत्यादिकमित्यन्ये ॥ तच्च संहितायामदृष्टत्वान्नोद्धृतम् ॥ अथांगिरसं सूक्तम् ॥ ॐअङ्गिरसोनः पितरोनवग्वा अथर्वाणोभृगवः सोम्यासः ॥ तेषांवयं सुमतौ यज्ञियानामपिभद्रेसौमनसेस्याम ॥ १ ॥ अङ्गिरोभिर्यज्ञियैरागहीहयमवैरूपैरिह मादयस्व ॥ विवस्वन्तं हुवेयः पिता तेऽस्मिन्बर्हिष्यां निषद्य ॥ २ ॥ इमं यमप्रस्तरमाहिरोहाङ्गिरोभिः पितृभिः संविदानः ॥ आत्वामंत्राः कविशस्तावहन्त्वेनाराजन्हविषो मादयस्व ॥ ३ ॥ इतएत उदारुहन्दिवस्पृष्टान्यारुहन् ॥

प्रभुर्जयों यथायथा द्यामङ्गिरसों ययुः ॥ ४ ॥ इति बहवः ॥ अङ्गिरोसिजन्मनेत्यादिकमिति पाठयमित्यन्ये ॥ तच्च संहितायामदृष्टत्वान्नेह
मयोद्धृतम् ॥ अथ नीलरुद्रं सूक्तम् ॥ यातरुद्रइषुमास्यदङ्गेभ्यो हृदयाय च ॥ इदंतामुद्यत्वद्रूयं विषूचीं विवृहामासि ॥ १ ॥ यास्तेशतं धमनयोऽ
ङ्गान्यनुं विष्ठिताः ॥ तासां ते सर्वासां वयं निर्विषाणिह्वयामासि ॥ २ ॥ नमस्ते रुद्रास्य तें नमः प्रतिहितायै नमों विसृज्यमानायै नमो निपंति
तायै ॥ ३ ॥ अथापराजितादेवीसूक्तम् ॥ परिवर्त्मानिसर्वतइन्द्रः पूषाचंसस्रतुः ॥ मुह्यंत्वद्यामूः सेना अमित्राणां परस्तराम् ॥ १ ॥ मूढा अमित्रां
श्चरता शीर्षाण इवाहयः ॥ तेषां वो अग्निमूढानामिन्द्रों हन्तु वरं वरम् ॥ २ ॥ एषुनह्यंवृषाजिनंहरिणस्यं भयं कृधि ॥ पराङ्मित्र एषंत्वर्वाची
गौरुपेषतु ॥ ३ ॥ इत्यपराजितासूक्तम् ॥ ४ ॥ ( मधुसूक्तम् ) ॥ ॐ मधु वाता ऋतायते मधुं क्षरन्ति सिन्धवः ॥ माध्वीर्नः सन्त्वोषधीः ॥ १ ॥
मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः ॥ मधु द्यौरस्तु नः पिता ॥ २ ॥ मधुमान्नो वनस्पतिर्मधुमाँ २ऽअस्तु सूर्यः ॥ माध्वीर्गावो भवन्तु नः
॥ ३ ॥ इति मधुसूक्तम् ॥ अथ रोधसं सूक्तम् ॥ ॐ अभयं द्यावापृथिवी इहास्तु नोऽभयं सोमः सविता नः कृणोतु । अभयं नोऽस्तूर्वन्त
रिक्षं सप्त ऋषीणां च हविषाऽभयं नो अस्तु ॥ १ ॥ अस्मै ग्रामाय प्रदिशश्चतस्र ऊर्जं संभूतं स्वस्ति सविता नः कृणोतु ॥ असाविन्द्रो अभयं नः कृणो
त्वन्यत्र राज्ञामभियातु मन्युः ॥ २ ॥ अनमित्रं नो अधरादनमित्रं न उत्तरात् ॥ इन्द्रानमित्रं नः पश्चादनमित्रं पुरस्कृधि ॥ ३ ॥ इति रोधसम् ॥ अथ
शान्तिकाध्यायः ॥ ॐ शन्न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या ॥ शमिन्द्रा सोमासुविताय शं योः शंन इन्द्रा पूषणावाजं
सातौ ॥ १ ॥ शं नो भगः शमु नः शं सोऽअस्तु शं नः पुरंधिः शमु सन्तु रायः ॥ शं नः सत्यस्य सुयमस्य शं सः शन्नो अर्यमा पुरु
जातो अस्तु ॥ २ ॥ शं नो धाता शमु धर्तानोऽअस्तु शं न उरूची भवतु स्वधाभिः ॥ शं रोदसी बृहती शं नो अद्रिः शं नो देवानां सुहवानि
सन्तु ॥ ३ ॥ शं नोऽअग्निर्ज्योतिरनीकोऽअस्तु ॥ शं नो मित्रावरुणावश्विना शम् ॥ शं नः सुकृतां सुकृतानि सन्तु शं न इषिरोऽअभिवात

वातः ॥ ४ ॥ शं नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षंदृशये नो अस्तु ॥ शं न ओषधीर्वनिनो भवन्तु शं नो रजसस्पतिरस्तु जिष्णुः ॥ ५ ॥ शं न इन्द्रो वसुभिर्देवोऽअस्तु शमादित्येभिर्वरुणः सुशंसः ॥ शं नो रुद्रो रुद्रेभिर्जलाषः शं नस्त्वष्टाग्नाभिरिह श्रृणोतु ॥ ६ ॥ शं नः सोमो भवतु ब्रह्म शं नः शं नो ग्रावाणः शमु सन्तु यज्ञाः ॥ शं नः स्वरूणांमितयोभवन्तु शं नः प्रस्व ७ः शम्वस्तु वेदिः ॥ ७ ॥ शं नः सूर्य उरु चक्षा उदेतु शं नो भवन्तु प्रदिशश्चतस्रः ॥ शं नः पर्वता ध्रुवयो भवन्तु शं न सिन्धवः शमु सन्त्वापः ॥ ८ ॥ शं नोऽअदितिर्भवतु व्रतभिः शं नो भवन्तु मरुतः स्वर्काः ॥ शं नो विष्णुः शमु पूषा नोऽअस्तु शं नो भवित्रं शम्वस्तु वायुः ॥ ९ ॥ शं नो देवः सविता त्रायमाणः शं नो भवन्तूषसो विभातीः ॥ शं नः पर्जन्यो भवतु प्रजाभ्यः शं नः क्षेत्रस्यपतिरस्तु शंभुः ॥ १० ॥ इति शान्तिकाध्यायः ॥ इति द्वारपालजाप्यसूक्तानि ॥ अथ जापकजप्यानि ॥ ( शान्तिपौष्टिकानि ) शं न इन्द्राग्नी इत्यादिपूर्वोक्तानि ॥ १० ॥ अथर्ववेदीयं पौरुषं सूक्तम् ॥ सहस्रं बाहुः पुरुषः सहस्राक्षः सहस्रंपात ॥ सभूमिंविश्वतोवृत्वात्यतिष्ठदशाङ्गुलम् ॥ १ ॥ त्रिभिः पद्भिर्द्यामरोहत्पादोस्येहाभवत्पुनः ॥ तथाव्यक्रामद्विष्वङ्ङशनानशनेऽअनु ॥ २ ॥ तावन्तोअस्यमहिमानस्ततोज्यायांश्चपूरुषः ॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतन्दिवि ॥ ३ ॥ पुरुषएवेदंसर्वंयद्भूतंयच्चभाव्यम् ॥ उतामृतत्त्वस्येश्वरोयदन्येनाभवत्सह ॥ ४ ॥ यत्पुरुषंव्यदधुः कतिधाव्यकल्पयन् ॥ मुखंकिमस्यकिंबाहूकिमूरूपादाउच्येते ॥ ५ ॥ ब्राह्मणोऽस्यमुखमासीद्बाहूराजन्योऽभवत् ॥ मध्यंतदस्ययद्वैश्यः ॥ पद्भ्यांशूद्रोअजायत ॥ ६ ॥ चन्द्रमामनसोजातश्चक्षोःसूर्योऽअजायत ॥ मुखादिन्द्रश्चाग्निश्चप्राणाद्वायुरजायत ॥ ७ ॥ नाभ्याआसीदन्तरिक्षंशीर्ष्णोद्यौः समवर्तत ॥ पद्भ्यांभूमिर्दिशःश्रोत्रात्तथा लोकाँअकल्पयन् ॥ ८ ॥ विराडग्रेसमभवद्विराजोअधिपूरुषः ॥ सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ ९ ॥ यत्पुरुषेणहविषादेवायज्ञमतन्वत ॥ वसन्तोअस्यासीदाज्यंग्रीष्मइध्मःशरद्धविः ॥ १० ॥ तंयज्ञंप्रावृषाप्रौक्षन्पुरुषंजातमग्रतः ॥ तेन देवाअयजन्तसाध्याव

संवश्च्युये ॥ ११ ॥ तस्मादश्वा॑अजायन्तयेकेचो॑भयादतः ॥ गावो॑हजज्ञिरेतस्मात्तस्मा॑ज्जाताअ॑जावयः ॥ १२ ॥ तस्मा॑द्यज्ञात्स॑र्वहुतऋचः
सामा॑निजज्ञिरे ॥ छन्दा॑ंसिजज्ञिरेतस्माद्यजुस्तस्मा॑दजायत ॥ १३ ॥ तस्मा॑द्यज्ञात्स॑र्वहुतः सम्भृ॑तंपृषदाज्यम् ॥ पशूञ्ताँश्च॑क्रेवायव्या॑नारण्या
न्ग्राम्याश्च्युये ॥ १४ ॥ सप्तास्या॑सन्परिधयस्त्रिः सप्तसमिधः कृताः ॥ देवायद्यज्ञंत॑न्वानाअब॑ध्नन्पुरु॑षंपशुम् ॥ १५ ॥ मूर्धनो॑देवस्य॑बृहतो अंशवः
सप्तसप्ततीः ॥ राज्ञः सोम॑स्याजायन्तजातस्यपुरुषादधि ॥ १६ ॥ इति पौरुषेयं सूक्तम् ॥ ॥ अथ शान्तिकाः मंत्राः ॥ ॥ शान्ता द्यौः
शान्ता पृथिवीशान्तमिदमुर्वन्तरि॑क्षम् ॥ शान्ता उदन्वतीरापःशान्ता नः सन्त्वोषधीः ॥ १ ॥ शान्तानि पूर्वरूपाणि शान्तन्नो अकृताकृतम् ॥
शान्तं भूतञ्च भव्यञ्च सर्वमेव शमस्तु नः॥२॥इयं या परमेष्ठिनी वाग्देवी ब्रह्मसंशिता ॥ ययैव संसृजे घोरं तयैव शान्तिरस्तु नः ॥३॥ इदं यत्परमे
ष्ठिनं मनो वा ब्रह्मसंशितम् ॥ येनैव संमृजे घोरं तेनैव शान्तिरस्तु नः ॥ ४ ॥ इमानियानि पञ्चेन्द्रियाणि मनःषष्ठानि मे हृदि ॥ ब्रह्मणा संशितानि
यैरेव संसृजे घोरं तैरेव शान्तिरस्तु नः ॥ ५ ॥ शंनो मित्रः शं वरुणः शं विष्णुः शं प्रजापतिः ॥ शं न इन्द्रो बृहस्पतिः शं नो भवत्वर्यमा ॥ ६ ॥
शं नो मित्रः शं वरुणः शं विवस्वञ्छमन्तकः ॥ उत्पाताः पार्थिवान्तरिक्षाच्छं नो दिवि चरा ग्रहाः ॥ ७ ॥ शं नो भूमिर्वेपमाना शमुल्का निर्हतं
च यत ॥ शं गावो लोहितक्षीराः शं भूमिरवतीर्यती ॥ ८ ॥ नक्षत्रमुल्काभिहतं शमस्तु नः शं नोऽभिचाराः शमुसन्तु कृत्याः ॥ शन्नो निखाता
वल्गाः शमुल्का देशोपसर्गाः शमु नो भवंतु ॥ ९ ॥ शं नो ग्रहाश्चन्द्रमसाः शमादित्याश्च राहुणा ॥ शं नो मृत्युर्धूमकेतुः शं रुद्रास्तिग्मतेजसः
॥१०॥ शं रुद्राः शं वसवःशमादित्याः शमग्नयः ॥ शं नो महर्षयो देवाः शं देवी शं बृहस्पतिः ॥११॥ ब्रह्मप्रजापतिर्धाता लोका वेदाः सप्त ऋषयोऽ
ग्नयः ॥ तैर्मे कृतं स्वस्त्ययनमिन्द्रो मे शर्म यच्छतु ब्रह्मा मे शर्म यच्छतु ॥ १२ ॥ विश्वे मे देवाः शर्म यच्छतु सर्वे मे देवाः शर्म्म यच्छन्तु
यानि कानि चिच्छान्तानि लोके सप्त ऋषयो विदुः सर्वाणि शं भवन्तु मे शं मे अस्त्वभयं मे अस्तु ॥ १३ ॥ पृथिवी शान्तिरंतरिक्षं शान्तिर्द्यौः

शान्तिराप॒ः शान्ति॒रोष॑धय॒ः शान्ति॒र्वन॒स्पत॑य॒ः शान्ति॒र्विश्वे॑देवा शान्ति॒ः सर्वै॑ मे देवाः शान्ति॒ः शान्ति॒ः शान्ति॑भिः ॥ ताभि॒ः शान्ति॑भिः सर्वशान्तिभिः शमयाम्यहः यदिह घोरं यदिह क्रूरं यदिह पापं तच्छान्तं च्छिवं सर्वमेव शमस्तु नः ॥ १४ ॥ इति शान्तिसूक्तम् ॥ ततो यथाशक्ति प्रधान देवमन्त्रान् जपेयुः ॥ इति श्रीरत्नदुर्गनिवासिना श्रीवसिष्ठकुलोद्भवेन श्रीरामकृष्ण–अमरचन्द्रयोः पौत्रेण श्रीकस्तूरिचन्द्रात्मजेन श्रीचतुर्भुज दत्तसूनुना श्रीमहादेवभक्तेन नानानिबन्धकारेण गौडपण्डितश्रीचतुर्थीलालशर्मणा विरचिते सर्वदेवप्रतिष्ठाप्रकाशे चतुर्वेदिनां सूक्तकथनं नाम षष्ठः परिच्छेदः ॥ ६ ॥ अथाधिवासनम्[1] ॥ अथ सायंकाले विष्णोर्वा शङ्करस्यान्यदेवस्य वाधिवासनं कुर्यात् । तत्राचार्यो यजमानऋत्विक्सुवासिनीसहितस्तूर्यघोषेण शिलिपशालां गत्वा देवस्याग्रे कलशस्थापनविधिना कलशं संस्थाप्य प्रतिष्ठां च कृत्वा तीर्थान्यावाहयेत् । ॐ काशी कुशस्थली मायाऽवन्त्ययोध्या मधोः पुरी ॥ शालिग्रामं सगोकर्णं नर्मदा च सरस्वती ॥ १ ॥ तीर्थान्येतानि कुम्भेऽस्मिन्विशन्तु ब्रह्मशासनात् ॥ गङ्गाद्याः सरितः सर्वाः समुद्राश्च सरांसि च ॥ वृषारूढा सरोजाक्षी पद्महस्ता शशिप्रभा ॥ २ ॥ आगच्छतु सरिज्ज्येष्ठा गङ्गा पापप्रणाशिनी ॥ नीलोत्पलदलश्यामा पद्महस्ताम्बुजेक्षणा ॥ ३ ॥ आयातु यमुना देवी कूर्मयानस्थिता सदा ॥ प्राची सरस्वती पुण्या पयोष्णी गौतमी तथा ॥ उर्मिला चन्द्रभागा च सरयू गण्डकी तथा ॥ ४ ॥ एता नद्यश्च तीर्थानि गुह्यक्षेत्राणि सर्वशः ॥ तानि सर्वाणि कुंभेऽस्मिन्विशन्तु ब्रह्मशासनात् ॥ ५ ॥ इत्यादितीर्थान्यावाह्य ॥ कुम्भस्य चतुर्दिक्षु विदिक्षु च ॐ इन्द्राय नमः । ॐ अग्नये नमः । ॐ यमाय नमः । ॐ निर्ऋतये नमः । ॐ वरुणाय० । ॐ वायवे० । ॐ कुबेराय० । ॐ ईशानाय० । इति दिक्पालान् गन्धादिभिः संपूज्य । ततः प्रतिमादिषु न्यूनातिरिक्तपाषाणदोषप्राणिवधादिदुर्नि

[1] अधिवासान्ते देवा अस्मिन्निति व्युत्पत्त्या " **करणाधिकरणयोश्च** " ३ । ३ । ११७ । इति ल्युटा सिद्धोऽयमधिवासनशब्दः कर्मविशेषे रूढः ॥

मित्तोपशमनार्थं प्रतिमायोग्यं स्थण्डिलं कृत्वा तत्र पंचभूसंस्कारान् कृत्वा तत्राग्निं प्रतिष्ठाप्य प्राणानायम्य देशकालौ संकीर्त्य प्रतिमानिर्माणे प्राणिवधादिदोषनिरासार्थं दुर्निमित्तोपशमनाय घृतेन तिलैर्वा होमं करिष्य इति संकल्प्य ब्रह्मोपवेशनादि आघारावाज्यभागौ हुत्वा देवमत्रेणाज्याहुतिशतद्वयं शमीपल्लवाक्षतैर्घृतैस्तिलैर्वा ॐ परंमृत्योऽअनुपरेहिपन्थांयस्तेऽअन्यइतरोदेवयानात् ॥ चक्षुष्मतेश्शृण्वते तेब्रवीमिमानःप्रजाꣳरीरिषोमोतवीरान् स्वाहा १ इति मन्त्रेण मृत्यवे १०८ ॐ अघोरेभ्योऽथ घोरेभ्य० इत्यनेन ॐ त्र्यम्बकं यजामहे० ॐ यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये ॥ यदेनश्च कृमा वयमिदं तदवयजामहे स्वाहा १ इत्यनेन चाष्टोत्तरशतं हुत्वा पूर्णाहुतिं च हुत्वा देवं प्रार्थयेत् ॥ ॐ त्वयि संपूजयामीशं नारायणमनामयम् ॥ रहितः सर्वदोषैस्त्वमृद्धियुक्तः सदा भव ॥ १ ॥ इति प्रार्थ्य । प्रतिमां कुशैः संमार्ज्य तूर्य-सुवासिनी-गीत-वेदघोषेण मध्वाज्याभ्यंगेन देवस्य व्रणभंगः कार्यः ॥ एवं व्रणभङ्गं कृत्वा मृदा गोमयेन गोमूत्रेण भस्मना क्षीरेण च पृथक् पृथक् जलान्तरितेन स्नापयित्वा गन्धादिभिरभ्यर्च्य सितपुष्पैः संपूज्य सुवर्णपात्रे मधुसर्पिषी संस्थाप्य सुवर्णशलाकया मधुसर्पिर्भ्यां नेत्रे आपूर्य्य मधूच्छिष्टेन नेत्रावरणं च कृत्वा पश्चात्स्थापितकुम्भोदकेन देवं संस्नाप्य शिल्पिना यजमानाय दापयेत् । ततो यजमानः शिल्पिवर्गं वस्त्रालङ्कारैः सन्तोष्य[1] प्रतिमां गृहीत्वा आचार्यं प्रार्थयेत् ॥ भो गुरो प्रतिमां सावयवां निरीक्षस्व ॥ आचार्यो हि प्रतिमां सावयवां निरीक्षेत् ॥ ततो देवस्य दक्षिणहस्ते सितोर्णादिसूत्रनिर्मितं सर्वौषधिमनःफलसहितं आचार्यवितास्तिमात्रं दोरकं मूलमत्रेण बध्नीयात् । अथ जला[2]धिवासनम् । तत आचार्यः ऋत्विग्भिः सह ( जलयात्रोपयोगिसम्भारान् प्रगृह्य ) शंखतूर्यादि--वेद--सुवासिनी--मङ्गलगीतैः सवस्त्रां

---

१ आनीय लिङ्गमर्च्चां वा शिल्पिनं पूजयेद्बुधः । वस्त्रादिभिश्च रत्नैश्च येऽपि तत्परिचारकाः । क्षमध्वमिति तान्ब्रूयाद् यजमानो ह्यतःपरम् । इति मात्स्योक्तेः ॥ २ अत्र तु जलाधिवासनममन्त्रकमेव लिखितं मूलकारैः **प्रतिष्ठासंग्रहे** त्विदं समन्त्रकं वरीवर्ति किञ्चिद्विशिष्टम् । सति सम्भवे पुस्तकान्ते ( परिशिष्टे ) तत् प्रकाशयिष्यते ॥

प्रतिमां रथे आरोपयति । तत्र मन्त्रः । ॐ रथेतिष्ठन्नयतिवाजिनः पुरोयत्रयत्रकामयतेसुखारथिः ॥ अभीशूनांमहिमानंपनायतमनः पश्चादनुय च्छन्तिरश्मयः ॥ इति वैदिकमन्त्रेण मूर्तिं ब्रह्मा रथे आरोपयेत । पश्चान्नद्यां वा सरसि तडागकूपयोर्वा नीत्वाऽधिवासयेत् । तत्रादौ पुण्याहवाचनं कृत्वा ॐ आनोभद्राः क्रतवोयन्तुविश्वतोदब्धासोअपरीतासउद्भिदः ॥ देवानोयथासदमिद्वृधेअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥ १ ॥ ॐ देवानांभद्रासुमतिर्ऋजूयतान्देवानांरातिरभिनोनिवर्त्तताम् ॥ देवानांसख्यमुपसेदिमाव्वयंदेवानआयुःप्रतिरन्तुजीवसे ॥ २ ॥ ॐ तान्पूर्व्वयानिविदाहूमहेव्वयम्भगम्मित्रमदितिन्दक्षमस्रिधम् ॥ अर्य्यमणंवरुणंसोममश्विनासरस्वतीनःसुभगामयस्करत् ॥ ३ ॥ ॐ तन्नोवातो मयोभुवातुभेषजन्तन्मातापृथिवीतत्पिताद्यौः ॥ तद्ग्रावाणःसोमसुतोमयोभुवस्तदश्विनाशृणुतन्धिष्ण्यायुवम् ॥ ४ ॥ ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियाञ्जिन्वमवसेहूमहेव्वयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धस्वस्तये ॥ ५ ॥ ॐ स्वस्तिनइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ ६ ॥ ॐ पृषदश्वामरुतःपृश्निमातरःशुभंय्यावानोविदथेषुजग्मयः ॥ अग्निजिह्वामनवःसूरचक्षसोविश्वेनो देवाअवसागमन्निह ॥ ७ ॥ ॐ भद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्य्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमहिदेवहितंयदायुः ॥ ८ ॥ ॐ शतमिन्नुशरदोअन्तिदेवायत्रानश्चक्राजरसन्तनूनाम् ॥ पुत्रासोयत्रपितरोभवन्तिमानोमद्ध्यारीरिषतायुर्गन्तोः ॥ ९ ॥ ॐ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्मातासपितासपुत्रः ॥ विश्वेदेवाअदितिःपञ्चजनाअदितिर्जातमदितिर्जनित्वम् ॥ १०॥ इत्यादिशान्तिपाठसूक्तानि पठित्वा नद्यादितीरम् । ॐ इन्द्रघोषस्त्वावसुभिःपुरस्तात्पातुप्रचेतास्त्वारुद्रैः पश्चात्पातुमनोजवास्त्वापितृभिर्दक्षिणतःपातुविश्वकर्म्मात्वादित्यैरुत्तरतः पात्विदमहन्तप्तंवार्बहिर्द्धायज्ञान्निःसृजामि ॥ १ ॥ ॐ चित्पतिर्म्मापुनातुवाक्पतिर्मापुनातुदेवोमासवितापुनात्वच्छिद्रेणपवित्रेणसूर्य्यस्यरश्मिभिः । तस्यतेपवित्रपतेपवित्रपूतस्ययत्कामःपुनेतच्छकेयम् ॥ ८ ॥ ८ ॥ ५ ॥ ११ ॥ इति मन्त्रद्वयेन पंचग

व्येन प्रोक्ष्य तत्र पूजासम्भारं संस्थाप्य वस्त्राच्छादितं देवं मूलमन्त्रेण जलेऽधिवासयेत् । तत उदङ्मुखो यजमानः कृताचमनप्राणायामः संकीर्ति तदेशकालः अमुकदेवप्रतिष्ठायागस्य परिपूर्तिद्वारा श्रीवरुणदेवताप्रीत्यर्थं श्रीगणेशपूजापूर्वकजलमातृजीवमातृक्षेत्रपालवरुणपूजनं करिष्ये इति संकल्प्य ॐ गुणानांत्त्वागणपतिꣳहवामहेप्रियाणांत्त्वाप्रियपतिꣳहवामहेनिधीनांत्वानिधिपतिꣳहवामहेवसोमम ॥ आहमजानिगर्ब्भधमात्वमजा सिगर्ब्भधम् ॥ ॐ भूर्भुवः स्वः गणेश इहागच्छ इह तिष्ठ इत्यावाह्य गणपतिं षोडशोपचारैः संपूज्य ॐ सिद्धिबुद्धिसहिताय गणाधीशाय इमं सदीपं ( दधि ) माषभक्तबलिं समर्पयामि इति गणेशाय बलिं दद्यात् ॥ अथ जलमातॄर्जले पूजयेत्।ॐ मत्स्यै नमः १।ॐकच्छप्यै नमः।२ । ॐकूर्म्यै नमः ।३। ॐ वाराह्यै नमः ।४। ॐ दर्दुर्य्यै नमः ।५ । ॐ शिशुमार्य्यै नमः । ६ । ॐ ईश्वर्य्यै नमः । ७ । एवं नाममन्त्रेण प्रत्येकं षोडशोपचारैः संपूजयेत् । अथ जीवमातृपूजनमक्षतपुञ्जेषु भित्तौ वा रेखासु कुर्यात् । ॐ मत्स्यै नमः ।१। ॐ हद्यै नमः । २ । ॐ गोधायै नमः । ३ । ॐ मकर्य्यै नमः । ४ । ॐ डुण्डुभ्यै नमः । ५ । ॐ दर्दुर्य्यै नमः । ६ । ॐ जलयै नमः । ७ । इति प्रत्येकं गन्धादिना पूजयेत् । ततः ॐ चतुःषष्टियोगिनीभ्यो नमः इति कुङ्कुमादिना जले योगिनीपूजा । ततो वायव्यां क्षेत्रपालं कुङ्कुमेन पुरुषाकारलिखितं पूजयेत् । ॐ क्षत्रस्ययोनिरसिक्षत्रस्युना भिरसि । मात्वाहिꣳसीन्मामाहिꣳसी ꣳ ॥ ॐ भूर्भुवः स्वः क्षेत्रपाल इहागच्छ इह तिष्ठ इत्यावाह्य ॐ क्षेत्रपालाय नमः इति गन्धादिभिः सम्पूज्य कुङ्कुमदीपयुतं दधिमाषभक्तबलिं गृहीत्वा ॐ क्षेत्रपाल महाबाहो महाबलपराक्रम ॥ क्षेत्राणां रक्षणार्थाय बलिं गृह्ण नमो नमः ॥ १ ॥ इति मन्त्रेण क्षेत्रपालाय दद्यात् । तत आचमनम् ॥ अथ जलपूजनम् ॥ ॐ अद्भ्यो नमः । ॐ सप्तसागरेभ्यो नमः । ॐ मानसादिसरोभ्यो नमः । ॐ पुष्करादितीर्थेभ्यो नमः । ॐ गङ्गादिमहानदीभ्यो नमः । इति गन्धाक्षताञ्जले क्षिपेत् । ततो वरुणपूजा । ॐ तत्त्वायामिब्रह्मणा वन्दमानस्तदाशास्तेयजमानोहविर्ब्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयुःप्रमोषीः ॥ ॐ भूर्भुवः स्वः वरुण इहागच्छ इह तिष्ठ

इत्यावाह्य ॐ अपांपतिवरुणाय नमः । इति गन्धादिना प्रपूज्य माषभक्तबलिं दद्यात् । इति वरुणपूजनम् ॥ ततः पञ्चामृतं हस्ते गृहीत्वा ॐ पयः पृथिव्यामित्यादिस्वस्वमन्त्रेण जले क्षिपेत् । ततः कलशस्थापनविधिना विदिक्षु चत्वारो मध्ये च एक एवं पञ्चकलशान्संस्थाप्य । तेषु ॐ तत्त्वायामीति वरुणमावाह्य गन्धादिभिः संपूज्य । आम्रपल्लवपुष्पमालादिभिः शोभितान्कुर्य्यात् । एवं गणेशादीन् संपूज्य जलस्थितं देवं प्रार्थयेत् । त्वदधिष्ठानसंयोग्यं त्वत्प्रसादात्सुरेश्वर ॥ इति विज्ञाप्य धूपार्तिकं कृत्वा सप्तपञ्चत्रिरात्रं चैकरात्रं वा यामं मुहूर्तं वा जले तदधिवासयेत् । ततः ॐ सहस्रशीर्षा इति पुरुषसूक्तं नारायणाथर्वशीर्षं च पठित्वा । पंचाक्षररुद्रजपमघोरमन्त्रजपं च कार्य्यम् ( अन्वितेन मूर्तिरक्षाकरणम् ) अन्येषु सूर्यादिसूक्तपाठः । सप्तरात्रादिषु निशावसाने प्रातःकाले च सद्यःपक्षे घटिकाद्वयानन्तरं जलान्निष्कास्य वस्त्राच्छादिते तीरे संस्थाप्य स्नानगन्धादिना संपूज्य समलंकृत्य आचार्यादिभ्यो हिरण्यदक्षिणां दत्त्वा अन्येभ्यो भूयसीं च दत्त्वा पूर्वस्थापितकलशैः

---

१ अत्रायम् "अपांपतिशब्दः" "**यादःपतिरपांपतिः**" इत्यमरकोषप्रामाण्याद् वैदिकशब्दानुकरणोऽलुक्समासान्तो वा बोध्यः । अत्रालुग्विधानं च "**षष्ठ्याः पतिपुत्र-पृष्ठ-पार-पद-पयस्-पोषेषु ८ । ३ । ५३ ।**" इति वैदिकप्रक्रियास्थसूत्रेण विसर्गस्थानीयसकारविधानेनानुमीयते, वाचस्पत्यादितदुदाहरणदर्शनात् ॥ "**सीतायाः पतये नमः**" इत्यादिप्रयोगेषु सकारत्वापत्तिवारणं तु "**पातौ बहुलम्**" इति पूर्वसूत्रस्थबहुलग्रहणानुवृत्त्या कर्तव्यम् । ततश्चात्र वरुणशब्देन सह "**विशेषणं विशेष्येण बहुलम्**" इति सूत्रेण वैकल्पिके कर्मधारयसमासे कृते "**अपांपतिवरुणः**" इति सिद्ध्यति, ततश्चतुर्थी ॥ पक्षे "**अपांपतये वरुणाय नमः**" इति प्रयोगेऽपि नाममन्त्रत्वेन वैदिकोपचारात्, कर्मकाण्डीयप्रयोगेषु वेदतुल्यत्वातिदेशेन वा "**षष्ठीयुक्तश्छन्दसि वा । १ । ४ । ९ ।**" इति सूत्रेण वैकल्पिक्या घिसंज्ञाया निर्बाधं विधानान्नात्र कश्चिद्दोषप्रसङ्गः ॥ **पारस्कर-गृह्यसूत्रपरिशिष्टे** ( मुम्बईस्थ-गुजराती-प्रेस-मुद्रिते ) अपि देवर्षि-पितृतर्पणान्ते "**ॐ अपां पतये वरुणाय नमः**" इति प्रयोगपरिदर्शनाच्च शुद्धोऽयं वाक्यसन्दर्भ इति मन्ये । पूर्वत्र ( अष्टादशतमे पत्रे ) समागतेऽस्मिन् वाक्ये "अत्र 'अप्पतये' इत्युचितं प्रतिभाति" इत्यकारि मया किञ्चिट्टिप्पणम्, ततश्चोत्पन्ना स्वोक्तिविरोधभ्रान्तिरपि परिहर्तव्याऽनेन समाधिना ॥

सह देवं तत्स्थानादुत्थापयेत् ॥ तत्र मन्त्रः ॥ ॐ उत्तिष्ठोत्तिष्ठ गोविन्द उत्तिष्ठ गरुडध्वज ॥ उत्तिष्ठ कमलाकान्त त्रैलोक्यमङ्गलं कुरु ॥ १ ॥ ॐ उत्तिष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे ॥ उपप्रयन्तुमरुतः सुदानवइन्द्रप्राशूर्भवासचा ॥ १ ॥ इति मन्त्रेण उत्थाप्य आचार्यो रथे विमाने वा याने वा सर्वाभरणैर्भूषितां प्रतिमां विष्णोर्वा शंकरस्य जयशब्दैर्वेदध्वनिभिः सुवासिनीमङ्गलगीतैः मृदङ्गादिघोषैः शनैः शनैर्मार्गे नयेत् ॥ अमुना ( [1]अनेन ) प्रकारेण जले नीत्वा जलाच्छन्नैर्देवं महामण्डपप्रादक्षिण्येन स्नानमण्डपमानयेत् ॥ तत्र मध्यवेदिकायां भद्रासनोपरि प्राङ्मुखं देवं तदग्रे कलशांश्च । ॐ भद्रंकर्णेभिरिति स्थापयेत् ॥ ॐ भद्रंकर्णेभिः शृणुयाम देवा भद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवा ᳪसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ १ ॥ इति जलाधिवासनविधिः ॥ अथ स्नानविधिरुच्यते ॥ तत्रादौ गुरुः स्नानमण्डपे वेदिकात्रयमुत्तरोत्तरक्रमेण कृत्वा स्नपनद्रव्यसंभृतिं कृत्वा ॐ नमोनारायणेत्यभिमन्त्रितपञ्चगव्येन भूमिं वेदिकात्रयं च संप्रोक्ष्य ॥ तत्र दक्षिणवेदिकायामास्तृतवालुकायामक्षतैः स्वस्तिकमालिख्य तत्र च भद्रपीठं[2] निधाय वेदिकायाः पश्चात् वारिपूर्णान् सपल्लवान् षट् कलशान् रक्तत्रिसूत्रवेष्टितान् मृत्तिकापल्लववृक्षीयकषायगोमूत्रगोमयभस्मगन्धोदकैः प्रपूर्य तेषां समीपे पुनः अपरान् ( षट् ) पञ्चदेवतासंज्ञांश्च चिह्नयित्वा गन्धोदकेनापूर्य उदक्संस्थपंक्तिरूपेण कलशस्थापनप्रयोगविधिना स्थापयेत् । ( तत्रान्त्यःस्थपतिसंज्ञकः तीर्थोदकपूरितः कलशः ) एवं भद्रपीठयुतदक्षिणवेदिकायाः पश्चिमभागे द्वादश कलशान्संस्थापयेत् । ( मध्यमवेदिपश्चिमेऽप्येवं द्वादश कलशान् स्थापयेत् ) उत्तरवेद्याः ( तृतीय

---

[1] इदमस्तु सन्निकृष्टे समीपतरवर्ति चैतदो रूपम् ॥ अदसस्तु विप्रकृष्टे तदिति परोक्षं विजानीयादिति सिद्धान्तोक्तेरत्र " अनेन " इति प्रयोगस्यौचित्यं प्रतिभाति । [2] सप्तधान्यकृताधारमुदगग्रं भद्रपीठमिति **प्रतिष्ठासंग्रहे** अत्र केचिद् ( मयूखानुसारिणो ) विश्वकर्मणो ध्यानं पूजनं च चिकीर्षन्ति । ध्यानं यथा-विश्वकर्मा तु कर्तव्यः श्मश्रुलो मांसलाधरः । संदंशपाणिर्द्विभुजस्तेजोमूर्तिः प्रतापवान् ॥ इति **प्रतिष्ठामयूखे** लिखितम् ।

वेद्याः ) परितोऽष्टौ कलशान् पूर्वादिक्रमेण क्षारोदक-क्षीर-दधि-सर्पि-इक्षुरस-मधु-दूर्वोदकदर्भोदक-युतान् हिरण्यगर्भाद्यैर
ष्टभिर्मन्त्रैर्विन्यसेत् ॥ ततोऽन्ये च वेद्याः पश्चिमभागे मृत्तिका-गोमय-गोमूत्र-भस्म-मिलितपञ्चगव्य-क्षीर-दधि-घृत-मधु-शर्करा-युता दश कलशाः
स्थाप्यास्तत्रैव चतुर्दश शुद्धजलकलशाः स्थाप्याः । अथान्यान्पञ्चत्रिंशत्कलशानासादयेत् । तेषु पञ्चत्रिंशत्कलशेषु मध्ये पञ्चसु पृथक्
पञ्चामृतानि ॥ ५ ॥ पञ्चसु जलम् ॥ ५ ॥ पञ्चसु पल्लवकषायः ॥ ५ ॥ पुनर्दश क्रमात् ॥ पुष्पैः ॥ १ ॥ फलैः ॥ २ ॥ सौवर्णजलेन ॥ ३ ॥
गोशृंगोदकेन ॥ ४ ॥ धान्यैः ॥ ५ ॥ सहस्राच्छिद्रैः ॥ ६ ॥ सर्वौषधिभिः ॥ ७ ॥ पञ्चपल्लवैः ॥ ८ ॥ दूर्वाभिः ॥ ९ ॥ नवरत्नैः ॥ १० ॥
युताः कार्याः । अवशिष्टेषु दशसु शुद्धजलमापूर्य कदम्बादिपल्लवैः शोभितान् कृत्वा लोकपालानावाह्य सर्वेऽपि ॐ आजिघ्रकलशमित्यनेन
स्थाप्याः ॥ अथ दश पल्लवानि ॥ १० ॥ कदम्बपल्लवम् ॥ १ ॥ शाल्मलीपल्लवम् ॥ २ ॥ जम्बूपल्लवम् ॥ ३ ॥ अशोकपल्लवम् ॥ ४ ॥ प्लक्षपल्लवम् ॥५॥
उदुम्बरपल्लवम् ॥ ६ ॥ वटपल्लवम् ॥ ७ ॥ बिल्वपल्लवम् ॥ ८ ॥ नागपल्लवम् ॥ ९ ॥ पलाशपल्लवम् ॥ १० ॥ एतानि दश पर्णानि ॥ ततोऽन्या
न्यपि वस्तूनि, यथा--सूक्ष्मवस्त्रम् । सुगन्धितैलम् । यवाद्युद्वर्त्तनचूर्णम् । सुगन्धामलकचूर्णम् । जटामांसीमित्यासादयेत् । ततः प्रथमवेदिकायाः
पश्चात्स्थापितेषु ( द्वादश ) कलशेषु मध्ये अन्तिमं स्थपतिसंज्ञकं तीर्थोदककलशं देवसमीपे कृत्वा तस्मिन्कलशे तीर्थान्यावाहयेत् ॥ सर्वे समुद्राः
सरितस्तीर्थानि जलदा नदाः । आयान्तु देवपूजार्थं दुरितक्षयकारकाः ॥ १ ॥ ॐ काशी कुशस्थली मायाऽवन्त्ययोध्या मधोः पुरी ॥ शालि
ग्रामं सगोकर्णं नर्मदा च सरस्वती ॥ २ ॥ तीर्थान्येतानि कुम्भेऽस्मिन्विशन्तु ब्रह्मशासनात् ॥ झषारूढा सरोजाक्षी पद्महस्ता शशिप्रभा ॥ ३ ॥

---

१ एषु कलशेषु मृत्तिकादीनां प्रमाणं त्वित्थं वेदितव्यम् ( **प्रतिष्ठासंग्रहोक्तम्** ) मृत्तिका षट्पलपरिमाणा । गोमयं दशपलपरिमितम् । तावदेव गोमूत्रम् । यज्ञियं भस्म-मुष्टिमितम् । त्रिपलं-पञ्चगव्यम् । गोः क्षीरं षोडशपलम् । पञ्चविंशतिपलं दधि । घृतं-सप्तपलम् । मधुनश्च पलत्रयम् । त्रिपलं पुनः शर्करापरिमाणम् । इति ॥

आगच्छतु सरिज्ज्येष्ठा गङ्गा पापप्रणाशिनी ॥ नीलोत्पलदलश्यामा पद्महस्ताम्बुजेक्षणा ॥ ४ ॥ आयातु यमुना देवी कूर्मयानस्थिता सदा ॥ प्राची सरस्वती पुण्या पयोष्णी गौतमी तथा ॥ ५ ॥ ऊर्मिला चन्द्रभागा च सरयू गण्डकी तथा ॥ जम्बुका च शतद्रुश्च कलिका सुप्रभा तथा ॥ ६ ॥ वितस्ता च विपाशा च शर्मदा च पुनः पुनः ॥ गोदावरी महावर्ता शर्करावर्तमार्जनी ॥ ७ ॥ कावेरी कौशिकी चैव तृतीया च महानदी ॥ विटङ्का प्रतिकूला च सोमनन्दा च विश्रुता ॥ ८ ॥ करतोया वेत्रवती देविका वेणुका च या ॥ आत्रेयगङ्गा वैतरणी काश्मिरी ह्लादिनी च या ॥ ९ ॥ प्लाविनी च सवित्रा सा कल्माषाशंसिनी तथा ॥ वसिष्ठा च अपापा च सिन्धुवत्यारुणी तथा ॥ १० ॥ ताम्रा चैव त्रिसन्ध्या च तथा मन्दाकिनी परा ॥ तैलकाद्री च पारा च दुन्दुभिर्नाकुली तथा ॥ ११ ॥ नीलगन्धा च बोधा च पूर्णचन्द्रा शशिप्रभा ॥ अमरेशं प्रभासं च नैमिषं पुष्करं तथा ॥ १२ ॥ आषाढी डिंडिभा रत्नं भारभूतं बलाकुलम् ॥ हरिश्चन्द्रं परं गुह्यं मध्यं मध्यमकेश्वरम् ॥ १३ ॥ श्रीपर्वतं समाख्यातं जलेश्वरमतः परम् ॥ आम्रातकेश्वरं चैव महाकालं तथैव च ॥ १४ ॥ केदारमुत्तमं गुह्यं महाभैरवमेव च ॥ गया चैव कुरुक्षेत्रं गुह्यं कनखलं तथा ॥ १५ ॥ विमलं चन्द्रहासं च माहेन्द्रं भीममष्टमम् ॥ वस्त्रापदं रुद्रकोटिमविमुक्तं महालयम् ॥ १६ ॥ गोकर्णं भद्रकर्णं च हेमासस्थानमष्टमम् ॥ छागलाद्दं द्विरण्डं च कर्कोटं मण्डलेश्वरम् ॥ १७ ॥ कालंजरवनं चैव देवदारुवनं तथा ॥ शङ्कुकर्णं तथैवेह स्थलेश्वरमतः परम् ॥ १८ ॥ एता नद्यश्च तीर्थानि गुह्यक्षेत्राणि सर्वशः ॥ तानि सर्वाणि कुम्भेऽस्मिन्विशन्तु ब्रह्मशासनात् ॥ १९ ॥ इति तीर्थान्यावाह्य कलशस्य मुखे विष्णुरित्यभिमन्त्रणं कृत्वा । देवदानवसंवादे इति प्रार्थ्य गीतवादित्रनिनदैर्देवं स्नापयेत् ॥ ततो यजमानः शिल्पिवर्गं तत्परिचारकांश्च वस्त्रालङ्कारैः संतोष्य क्षमध्वमिति तान्प्रति ब्रूयात् ॥ अथाचार्यः ॥ बहिर्निर्गत्य सिद्धार्थघृतपायसैः ॥ ॐ त्र्यंबकं यजामहे इति मन्त्रेण शङ्खदुन्दुभिघण्टानिनादैः प्रागादिदिक्षु स्वस्वनाममन्त्रेण दिक्पालेभ्यो बलिं दद्यात् । तद्यथा ॥ ( पूर्वे ) इन्द्राय साङ्गाय,इमं बलिं समर्पयामि । भो इन्द्र दिशं

१ प्रतिष्ठासंग्रहे तु बलिदानं समन्त्रकमस्ति ।

रक्ष बलिं भक्ष यजमानस्याभ्युदयं कुरु ॥१॥ (आग्नेय्याम्) अग्नये साङ्गाय इमं बलिं समर्पयामि। भो अग्ने दिशं रक्ष बलिं भक्ष यजमानस्याभ्युदयं कुरु ॥२॥ (दक्षिणे) यमाय साङ्गाय इमं० भो यम दिशं० ॥ ३ ॥ (नैर्ऋत्ये) निर्ऋतये साङ्गाय० इमं बलिं०॥४॥ (पश्चिमे) वरुणाय साङ्गाय इमं बलिं० ॥५॥ (वायव्याम्) वायवे साङ्गाय इमं बलिं समर्प० ॥ ६ ॥ (उत्तरे) कुबेराय साङ्गाय इमं० ॥७॥ (ऐशाने) ईशानाय साङ्गाय इमं बलिं० ॥८॥ एवं बलिं दत्त्वा आचम्य देवसमीपमागत्य ॐ त्रातारमिन्द्रमित्याद्यैर्दशभिर्मन्त्रैर्मण्डपान्तर्दिक्षु रक्षां कृत्वा देवस्य पुरतश्चतुरो ब्राह्मणानुपवेश्य स्वस्ति वाचयित्वा तेभ्यो दक्षिणां दत्त्वा देवं स्नापयेत् ॥ तद्यथा। ॐ अग्निर्मूर्द्धेति मृदा। ॐ अग्निमूर्द्धादिवऽङ्ककुत्पतिं॑ पृथिव्याऽअयम् ॥ अपाꣳरेताꣳसिजिन्वति ॥ १ ॥ ततः शुद्धोदकस्नानं यज्ञा यज्ञा व इति कषायैः। ॐ युज्ञायंज्ञावोऽअग्नयेंगिरागिराचुदक्षंसे ॥ प्रप्प्रंवयममृतंञ्जातवेंदसम्प्रियम्मित्रन्नशꣳसिषम् ॥ २ ॥ ततः शुद्धोदकस्नानम्। गायत्र्या गोमूत्रेण ॐ भूर्भुवः स्वः॑ तत्संवितुर्वरेण्यं भर्गोदेवस्यं धीमहि ॥ धियो यो नः॑ प्रचोदयात् ॥ ३ ॥ ततः शुद्धोदकेन। गन्धद्वारामिति गोमयेन। ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ४ ॥ मन्त्रान्ते सर्वत्र शुद्धोदकस्नानम्। मानस्तोक इति भस्मना। ॐ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः॑ ॥ मानोंवीरान्रुद्रभामिनोंवधीर्हविष्मन्तःसदमित्वाहवामहे ॥ ५ ॥ तत्सवितुरिति गन्धतोयेन। ॐ तत्संवितुर्वरेण्यम्भर्गो देवस्यं धीमहि ॥ धियो यो नः॑ प्प्रचोदयात् ॥ ६ ॥ ततः पञ्चकलशैः पञ्चदैवत्यैः स्नापयेत् ॥ तत्र क्रमः ॥ ॐ नमः शं भवाय इति प्रथमेन। ॐ नमः॑ शंभवायंचमयोभवायंचनमः॑ शङ्करायंचमयस्करायंचनमः॑ शिवायंचाशिवतंरायच ॥ १ ॥ ॐ हꣳसरिति द्वितीयेन। ॐ हꣳसःशुचिषद्वसुरन्तरिक्षसद्धोतांवेदिषदतिंथिर्दुरोणसत्। नृषद्वंरसदृतसद्व्योमसदब्जागोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत् ॥ २ ॥ या ते रुद्रेति तृतीयेन। ॐ यातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि ॥ ३ ॥ विष्णोरराटमसीति चतुर्थेन। ॐ विष्णोरराटमासिविष्णोः

ष्णोः श्नप्त्रैस्थोविष्णोःस्यूरसिविष्णोर्धुवोसि ॥ वैष्णवमसिविष्णवेत्वा ॥ ४ ॥ ब्रह्मयज्ञानमिति पञ्चमेन । ॐ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ ५ ॥ ततः शुद्धोदकस्नानम् । एवं देवं संस्नाप्य । शतं जीवेति मन्त्रेण दूर्वाक्षतसितपुष्पैः संपूज्य । ॐ शतंजीवशरदोवर्धमानःशतंहेमन्ताञ्छतमुवसन्तान् ॥ शतमिन्द्राग्नीसविताबृहस्पतिः शतायुषाहविषेमंपुनर्दुः ॥ १ ॥ पीतवस्त्रेणाच्छाद्य द्वितीयवेद्याम् । ॐ भद्रंकर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाᳬसस्तनूभिर्व्यशेमहि देवहितं यदायुः । इति मन्त्रेण भद्रासनं निधाय । ॐ स्तीर्णबर्हिःसुष्टरीमाजुषाणोरुपृथप्रथमानम्पृथिव्याम् ॥ देवेभिर्युक्तमदितिः सजोषाःस्योनंकृण्वानासवितेदधातु ॥ इति मन्त्रान्ते प्रागग्रान्कुशानास्तीर्य तत्र प्रणवेन देवं निधायाचार्यः उत्तराभिमुखो भूत्वा कुङ्कुमाक्तेन सूत्रेण लिङ्गमावेष्टय नेत्रोन्मीलनं कुर्यात् । तद्यथा ॐ हिरण्यगर्भ इति मन्त्रेण पूर्वकल्पितं सुवर्णपात्रं ताम्रपात्रं वाऽऽदाय तत्र मधुघृतं मेलयित्वा । ॐ मधुवाताऋतायते मधुक्षरन्ति सिन्धवः ॥ माध्वीर्नः सन्त्वोषधीः ॥ १ ॥ घृतवतीभुवनानामभिश्रियोर्वीपृथ्वी मधुदुघेसुपेशसा ॥ द्यावापृथिवीवरुणस्यधर्म्मणाविष्कभितेअजरेभूरिरेतसा ॥ २ ॥ इति मन्त्रद्वयेनाभिमन्त्रयेत् । ततो मधुघृताक्तां सुवर्णशलाकां कृत्वा तया प्रतिमाया मुखं लिङ्गस्य च नेत्राणि कल्पयेत् । तद्यथा । ॐ चित्रंदेवानामुदगादनीकञ्चक्षुर्मित्रस्यवरुणस्याग्नेः इत्यर्धर्चेन ॥ ॐ अग्निर्ज्योतिर्ज्योतिरग्निःस्वाहासूर्य्योज्योतिर्ज्योतिःसूर्य्यःस्वाहा ॥ अग्निर्वर्च्चोज्योतिर्वर्च्चःस्वाहासूर्य्योवर्च्चोज्योतिर्वर्च्चःस्वाहा ॥ ज्योतिः सूर्य्यःसूर्य्योज्योतिःस्वाहा ॥ इत्यनेन च नेत्रद्वयं कल्पयित्वा । ॐ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतम्मर्त्यञ्च ॥ हिरण्ययेनसविता रथेनादेवोयातिभुवनानिपश्यन् ॥ इति मन्त्रेण ऊर्ध्वाधः पृथग्भूतं पद्मपुटद्वयं कल्पयित्वा नेत्रमध्ये नेत्रत्रिभागेन वर्तुलां कनीनिकां कुर्यात् । अत्र नेत्रोन्मीलनसमये मुहूर्त्तमात्रं घटीद्वयं देवस्य पुरतो न कोऽपि तिष्ठेत् । प्रथमं सुवर्णे पायसं भक्ष्यभोज्यमादर्शं फलं च शीघ्रं दर्शयेत् ॥ एवं

कृते सौम्या शुभा दृष्टिर्भवति । ततः शिल्पिशस्त्रेण रेखामुल्लेखयेत् । ततो गुरुर्मधुसर्पिर्भ्यामभ्यज्य । ॐ इमंमेंगंगेयमुनेसरस्वतिशतुद्रिस्तोमंसचतापरुष्ण्या ॥ असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ १ ॥ इति मन्त्रेणाभ्युक्ष्य पुनर्मृद्गोमयाभ्यां शिल्पिशस्त्रदोषनिवृत्त्यर्थं स्नापयेत् ॥ ( मृद्गोमयाभ्यामिति दक्षिणवेदीवत्पूर्वोक्तमन्त्रैः स्नपनं कार्यम् ॥ एकादशकलशैरित्यर्थः ) अत्र प्रतिमाबहुत्वे पूर्वोक्तं स्नपनादिकं नेत्रोन्मीलनं च सर्वेषामेव कुर्यात् । ततो यजमानः सुवर्णपात्रं शलाकां स्नानवस्त्राणि च प्रतिमाकर्त्रे शिल्पिने गुरवे वा दद्यात् । सहिरण्यां गां च गुरवे दद्यात् । ( इति मध्यवेदिविधिः ) पश्चात् । कुण्डसमीपमागत्य । ॐ त्र्यम्बकं यजामहे इति मन्त्रेण अष्टोत्तरशतमष्टाविंशतिर्वा होमं कृत्वा दिक्पालेभ्यो बलिं दत्त्वा आचामेत् । ततो मंडपं प्रविश्य प्राणानायम्य देवस्य पुरतः चतुरो ब्राह्मणान् पूर्ववयस्कान्भोजयित्वा दक्षिणाभिः संतोष्य तेभ्य आशिषं गृहीत्वा विसर्जयेत् । इति नेत्राञ्जनम् । अथ आचार्यो देशकालौ संकीर्त्य अस्यां मूर्तौ लिङ्गे वा एतद्देवताधिष्ठानयोग्यतासिद्ध्यर्थं नानाद्रव्योदककलशैः महास्नानशुद्धिमहं करिष्ये । इति संकल्प्य यत्र स्नानं देवेन कृतं तस्माद्भद्रासनाद्देवमुत्थापयेत् । तत्र मन्त्रः। ॐउत्तिष्ठब्रह्मणस्पते देवयन्तंस्त्वेमहे ॥ उपप्रयन्तुमरुतंः सुदानंवइन्द्रंप्प्राशूर्भवासचा ॥ इति मन्त्रेण देवमुत्थाप्य ॥ ॐ भद्रंकर्णेभिःशृणुयामदेवाभद्रंपंश्येमाक्षभिर्यजत्राः॥ स्थिरैरङ्गैस्तुष्टुवाॐसस्तनूभिर्व्यशेमहिदेवहितंयदायुः ॥ इति मन्त्रेण उत्तरस्यां वेद्यां भद्रासने स्थापयित्वा ॐ त्रिपादूर्ध्वेति मन्त्रेण स्नानाय पादपीठं कल्पयेत् ॥ ॐ त्रिपादूर्ध्वऽउदैत्पुरुषःपादोस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥ १ ॥ पुरुषऽएवेदꣳ इति निवेद्य ॐ पुरुषऽएवेदꣳसर्व्वंयद्भूतंयच्चभाव्यम् ॥ उतामृतत्त्वस्येशानोयदन्नेनातिरोहति ॥ १ ॥ ततः अव्यङ्गावयवादिभिर्जीवत्पुत्रादिभिः सुन्दरीभिः सुवासिनीभिः लौकिकैः गीतैः सह समुद्रज्येष्ठा इत्यादिचतुर्भिर्मन्त्रैश्चतुर्भिः कलशैर्देवं स्नापयेत् ॥ ॐ समुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायन्त्यनिविशमानाः ॥ इन्द्रोयावज्रीवृषभोरराददताआपोदेवीरिहमामवन्तु ॥ १ ॥ ॐ याआपोदिव्याउतवास्रवन्तिखनित्रिमाउतवायाः

स्वयंजाः ॥ समुद्रार्थायाःशुचयः पावकास्ताआपोदेवीरिहमामवन्तु ॥ २ ॥ ॐ यासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानाम् ॥ मधु
श्च्युतः शुचयोयाः पावकास्ताआपोदेवीरिहमामवन्तु ॥ ३ ॥ ॐ यासुराजावरुणो यासुसोमोविश्वे देवायासूर्जमदन्ति ॥ वैश्वानरोयास्वग्निः प्रविष्ट
स्ताआपोदेवीरिहमामवन्तु ॥ ४ ॥ इति संस्नाप्य दधिदूर्वाहरिद्राकुङ्कुमाक्तैरक्षतैरभ्यर्च्य कृतमङ्गलं सौभाग्यद्रव्यार्प्पणपुरःसरं शालिपिष्टोद्भवैः
पञ्चभिर्नवभिर्वा नीराजितैः देवं पूजयेत् ॥ अन्नात्परिस्रुतेति मंत्रेणाक्षतान् ॐ अन्नात्परिस्रुतोरसंब्रह्मणाव्यपिबत्क्षत्रम्पयःसोमंप्रजापतिः ॥ ऋते
नसत्यमिन्द्रियंविपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ १ ॥ ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्या
त्तम् ॥ इष्णन्निषाण मुम्मऽइषाणसर्वलोकंमइषाण । इतिमन्त्रेण पुष्पाणि । धूरसीति धूपं कृत्वा ॐ धूरसिधूर्वधूर्वन्तंधूर्वतंयोऽस्मान्धूर्वतितंधूर्वयं
वयं धूर्वामः ॥ देवानामसिवह्नितमꣳ सस्नितमम्पप्रितमञ्जुष्टतमंदेवहूतमम् ॥ १ ॥ ( प्रार्थयेत् ) नमस्तेऽर्चे सुरेशानि प्रकृते विश्वकर्मणः ॥ प्रभावि
ताशेषजगद्धात्रि तुभ्यं नमो नमः ॥१॥त्वयि संपूजयामीशं नारायणमनामयम् ॥ रहिताशेषदोषैश्च ऋद्धियुक्ता सदा भवेति ॥२॥ ततो देवस्य दक्षिणे
हस्ते सितोर्णापट्टसूत्रमाचार्यवितस्तिमात्रं प्रतिमावितस्तिमात्रं वा मूलमन्त्रेण । ॐ यदाबध्नन्दाक्षायणाहिरण्यꣳशतानीकायसुमनस्यमानाः ॥
तन्मु आबध्नामिशतशारदायायुष्म्मानजरदष्टिर्यथासम् ॥ १ ॥ इतिमन्त्रेण वा बध्नीयात् ॥ सर्वसत्त्वमयं शान्तं परं ब्रह्म सनातनम्॥ त्वामेवालंकरि
ष्यामि त्वं वन्द्यो भवते नमः ॥ १ ॥ इति पठेत् । ततश्चतुर्भिः कलशैः पुनर्देवं स्नापयेत् । इदमाप इत्याद्येन । ॐ इदमापःप्रवहतावद्यञ्चमलंञ्चयत ॥
यच्चाभिदुद्रोहानृतंयच्चशेपेऽअभीरुणम् ॥ आपोमातस्मादेनसःपवमानश्चमुञ्चतु ॥ १ ॥ आपोदेवीरिति द्वितीयेन । ॐ आपोदेवीःप्रतिगृ
भ्णीतमस्म्मैतत्स्योनेकृणुध्वꣳसुरभाऽउलोके ॥ तस्म्मैनमन्ताजनयःसुपत्नीर्म्मातेवपुत्रम्बिभृतास्वेनत ॥ २ ॥ इमं मे इति तृतीयेन । ॐ इमम्मे
वरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥ ३ ॥ तत्त्वायामीति चतुर्थेन । ॐ तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥

अहेडमानोवरुणेहबोद्ध्युरुशꣳसमानऽआयुꣳप्रमोषीः ॥ ४ ॥ ततोऽग्निर्मूर्द्धेति मन्त्रेणाष्टपलमितेन मृत्तिकाकलशे देवं स्नापयेत्। ॐ अग्निर्मूर्द्धा दिवःककुत्पतिः पृथिव्याऽअयम् ॥ अपाꣳरेताꣳसिजिन्वति ॥ १ ॥ समुद्रादूर्मिरिति शुद्धोदकेन । ॐ समुद्रादूर्म्मिर्म्मधुमाँ२ऽउदार दुपाꣳशुनासमंमृतत्त्वमानट् ॥ घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ २ ॥ ॐ गन्धद्वारामिति सप्तपलमितेन गोमयकलशेन । ॐ गन्धद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीम् ॥ ईश्वरीꣳसर्वभूतानांतामिहोपह्वयेश्रियम् ॥ वरुणस्योत्तम्भनमसीति शुद्धोदकेन । ॐ वरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनीस्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ १ ॥ तत्सवितुरिति द्वादशपल गोमूत्रकलशेन । ॐ तत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि ॥ धियोयोनः प्रचोदयात् ॥ १ ॥ आपो हि ष्ठेति शुद्धोदकेन। ॐ आपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन ॥ महेरणायचक्षसे ॥ २ ॥ प्रसद्येति मुष्टिसंमितभस्मकलशोदकेन ॥ ॐ प्रसद्यभस्मनायोनिमपश्चपृथिवीमग्ने ॥ सꣳसृज्यमातृभिष्ट्वञ्ज्योतिष्मान्पुनरासदः ॥ १२ ॥ ३८ ॥ यो व इति शुद्धोदकेन । ॐ योवः शिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ १ ॥ पयःपृथिव्यामिति त्रिपलसम्मितपञ्चगव्यकलशोदकेन । ॐ पयः पृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः ॥ पयस्वतीःप्रदिशःसन्तुमह्यम् ॥ देवीराप इति शुद्धोदकेन ॥ ॐ देवीरापोअपान्नपाद्योवऽऊर्म्मिर्हविष्यऽइन्द्रियावान्मदिन्तमः ॥ तन्देवेभ्योदेवत्रादत्तशुक्रपेभ्यो येषाम्भागस्थस्वाहा ॥ १ ॥ आप्यायस्वेति षोडशपलक्षीरकुम्भेन । ॐ आप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यम् ॥ भवावाजस्यसंगथे ॥ २ ॥ तस्माऽअरं गमाम व इति शुद्धोदकेन । ॐ तस्माऽअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ १ ॥ दधिक्राव्ण इति पञ्चविंशतिपलदधिकुम्भेन । ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयूꣳषितारिषत् ॥ १ ॥ युंजान इति शुद्धोदकेन । ॐ युञ्जानःप्रथमम्मनस्तत्त्वायसविताधियः ॥ अग्नेर्ज्योतिर्निचाय्यपृथिव्याऽअध्याभरत् ॥ १ ॥ ॐ घृतवतीति सप्तपलघृतकु

म्भेन । ॐ घृतवंतीभुवनानामभिश्रियोर्वीपृथ्वीमधुदुघेसुपेशसा ॥ द्यावापृथिवीवरुणस्यधर्मणाविष्कंमितेऽअजरेभूरिरेतसा ॥ १ ॥ देवस्येति
जलेन ॥ ॐ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम् ॥ सरस्वत्यैवाचोयन्तुर्यन्त्रेणाग्ने ÷ साम्राज्येनाभिषिंचामि ॥ २ ॥
मधुवाता इति त्रिपलमधुकुम्भेन । ॐ मधुवाताऽऋतायतेमधुक्षरन्तिसिन्धवः ॥ माध्वीर्नःसन्त्वोषधीः ॥ १ ॥ आपो अस्मानिति जलेन ।
ॐ आपोऽअस्मान्मातरः÷ शुन्धयन्तुघृतेननोघृतप्व÷ पुनन्तु ॥ विश्वꣳहिरिप्रंवहन्तिदेवीरुदिदाभ्यःशुचिरापूतऽएमि ॥ २ ॥ आयङ्गौरि
ति त्रिपलशर्कराकुम्भेन । ॐ आयङ्गौःपृश्निरक्रमीदसदन्मातरम्पुरः ॥ पितरंचप्रयन्त्स्वः ÷ ॥ १ ॥ आपोह यद् बृहती इत्युदकेन प्रक्षा
ल्य ॥ ॐ आपोहयद्बृहतीर्विश्वमायन्गर्भन्दधानाजनयन्तीरग्निम् ॥ ततोदेवानाꣳसमवर्त्ततासुरेकःकस्मैदेवायहविषाविधेम ॥ २ ॥ यज्ञा
यज्ञा वं इति सूक्ष्मतन्तुवस्त्रेण संमार्ज्य ॥ ॐ यज्ञायज्ञावोऽअग्नयेगिरागिराचदक्षसे ॥ प्रप्रवयममृतञ्जातवेदसम्प्रियम्मित्रन्नशꣳसितम् ॥ १ ॥
सुगन्धतैलेनाभ्यज्य । ॐ द्रुपदादिवमुमुचानःस्विन्नःस्नातोमलादिव ॥ पूतम्पवित्रेणेवाज्यमापः÷शुन्धन्तुमैनसः ॥ इति मन्त्रेण यव--शालि-
गोधूम-मसूर-बिल्व-चूर्णैरुद्वर्त्य कोष्णोदकेन स्नापयित्वा पुनः शीतवारिणा स्नापयेत् ततः । ॐ या ते रुद्र शिवा तनूरिति यक्षकर्दमेनानु
लिम्पयेत ॥ ( यक्षकर्दमस्तु । कस्तूरिकाया द्वौ भागौ द्वौ भागौ कुङ्कुमस्य च ॥ चन्दनस्य त्रयो भागाः शशिनस्त्वेकं एव हीत्युक्तः ) ॥ ॐ या
तेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि ॥ १ ॥ ततो जटामांस्यानुलिप्य । मानस्तोक इति
प्रतद्विष्णुरिति मन्त्रद्वयेन कलशद्वयाभ्यां देवं स्नापयेत ॥ ॐ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः ॥ मानोवीरान्रुद्रभामि
नोवधीर्हविष्मन्तःसदमित्वाहवामहे ॥ ॐ प्रतद्विष्णुस्तवतेवीर्य्येणमृगोनभीमः कुचरोगिरिष्ठाः ॥ यस्योरुषुत्रिषुविक्रमणेष्वधिक्षियन्तिभुवना
निविश्वा ॥ ततः पंच नद्य इति पंचामृतेन । ॐ पंचनद्यः÷सरस्वतीमपियन्तिसस्रोतसः ॥ सरस्वतीतुपंचधासोदेशेभवत्सरित ॥ १ ॥ ततः

पृथक् पृथग्दुग्धादिद्रव्यैर्देवं स्नापयेत् ॥ ॐ पयः पृथिव्यामिति दुग्धेन । ॐ पयः पृथिव्यांपयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः । पयस्वतीः प्रदिशःसन्तुमह्यम् ॥ ततः शुद्धोदकेन । ॐ वरुणस्योत्तम्भनमसीति ॥ दधिक्राव्ण इति दध्ना । ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्य वाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयूंषितारिषत् ॥ २ ॥ पुनः शुद्धोदकेन ॥ ॐ सन्तेपयांसि समुयन्तुवाजाःसंवृष्ण्यान्यभिमातिषाहः । आप्यायमानोऽअमृतायसोमदिविश्रवांस्युत्तमानिधिष्व इति । ॐ घृतंघृतपावान इति घृतेन । ॐ घृतंघृतपावनःपिबतवसांवसापावानः पिबतान्तरिक्षस्यहविरसिस्वाहा । दिशःप्रदिशऽआदिशोविदिशऽउद्दिशोदिग्भ्यःस्वाहा ॥ ३ ॥ पुनः शुद्धोदकेन । आप्यायस्वमदिन्तमसोमविश्वेभिरंशुभिः ॥ भवानःसुश्रवस्तमःसखावृधे ॥ ४ ॥ ॐ मधुवातेति मधुना । ॐ मधुवाताऽऋतायतेमधुक्षरन्तिसिन्धवः ॥ माध्वीर्नःसन्त्वोषधीः ॥ ५ ॥ पुनः शुद्धोदकेन । ॐ तत्त्वायामि० इत्यनेन अपांरसमिति शर्करोदकेन । ॐ अपांरसमुद्वयसꣳसूर्य्येसन्तꣳसमाहितम् ॥ अपांरसस्ययोरसस्तंवोगृह्णाम्म्युत्तममुपयामगृहीतोसीन्द्रायत्वाजुष्टंगृह्णाम्म्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् ॥ पुनः शुद्धोदकेन ॥ ॐ अप्स्वग्नेसधिष्टवसौषधीरनुरुध्यसे । गर्भेसंजायसेपुनः । ततो गन्धद्वारामिति गन्धोदकेन । ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ १ ॥ यज्ञा यज्ञा य इति पंच पल्लवकषायकलशेन । ॐ यज्ञायज्ञावोऽअग्नयेगिरागिराचदक्षसे ॥ प्रप्रवयममृतंजातवेदसम्प्रियम्मित्रन्नशꣳसिषम् ॥ १ ॥ याऽओषधीरिति ओषधीकलशेन । ॐ याऽओषधीःपूर्वाजातादेवेब्भ्यस्त्रियुगम्पुरा ॥ मनैनुबब्भ्रूणामहꣳशतन्धामानिसप्तच ॥ २ ॥ द्यौः शान्तिरिति कलशोदकेन । ॐ द्यौः शान्तिरन्तरिक्षꣳशान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳशान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि । ओषधीरिति सितपुष्पोदकेन । ॐ ओषधीरितिमातरस्तद्वोदेवीरुपब्रुवे ॥ सनेयमश्वङ्गाम्वा

सऽआत्मानुन्तवंपूरुष ॥ १ ॥ याः फलिनीरित्यष्टफलकलशेन । ॐ याःफलिनीर्य्याऽअफलाऽअपुष्पाय्याश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुञ्च
त्वंहसः ॥ २ ॥ हिरण्यगर्भ इति सुवर्णोदककलशेन । ॐ हिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातःपतिरेकऽआसीत् ॥ सदाधारपृथिवीन्द्यामुतेमा
ङ्कस्मैदेवायहविषाविधेम ॥ ३ ॥ हविष्मतीरिति गोशृङ्गोदकेन । ॐ हविष्मतीरिमाऽआपो हविष्माँ २ऽआविवासति ॥ हविष्मान्देवोऽअध्वरोह
विष्माँ २ऽअस्तुसूर्य्यः ॥ ४ ॥ धान्यमसीति धान्योदकेन । ॐ धान्यमसिधिनुहिदेवान्प्राणायत्वोदानायत्वाव्यानायत्वा ॥ दीर्घामनुप्रसितिमा
युषेधान्देवोवः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेणपाणिनाचक्षुषेत्वामहीनाम्पयोसि ॥ ५ ॥ सहस्राणि इति सहस्रधाराकलशेन । ॐ
सहस्राणिसहस्रशोबाह्वोस्तवहेतयः।तासामीशानोभगवःपराचीनामुखाकृधि ॥ ६ ॥ या ओषधीरिति सर्वौषधिजलेन ॥ ७ ॥ नमोऽस्तु
सर्प्पेभ्य इति पञ्चपल्लवोदकेन । ॐ नमोस्तुसर्पेभ्योयेकेचपृथिवीमनु ॥ येऽअन्तरिक्षेयेदिवितेभ्यःसर्प्पेभ्योनमः ॥ ८ ॥ काण्डात्काण्डादिति
दूर्वोदकेन ॥ ॐ काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि । एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ ९ ॥ अष्टौव्यख्यादिति रत्नोदकेन । ॐ अष्टौव्य
ख्यत्ककुभःपृथिव्यास्त्रीधन्वयोजनासप्तसिन्धून् ॥ हिरण्याक्षःसवितादेवऽआगाद्दधद्रत्नादाशुषेवार्य्याणि ॥ १० ॥ इमंमे इति तीर्थोदकेन
ॐ इमंमेगङ्गेयमुनेसरस्वतिशुतुद्रिस्तोमंसचता परुष्ण्या ॥ असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ १ ॥ पुनरष्टभिः कलशैः
पूर्वकल्पितैः समुद्रसंज्ञितैः स्नापयेत् । कयानश्चित्रेति क्षारसमुद्रोदकेन क्षारोदकेन वा । ॐ कयानश्चित्रऽआभुवदूतीसदावृधःसखा ॥ कयाश
चिष्ठयावृता ॥ १ ॥ आप्यायस्वेति क्षीरकुम्भेन ॥ ॐ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् ॥ भवावाजस्यसङ्गथे ॥ २ ॥ दधिक्राव्ण
इति दधिकुम्भेन । ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयुंषितारिषत् ॥ ३ ॥ घृतवतीति घृतकु
म्भेन । ॐ घृतवतीभुवनानामभिश्रियोर्वीपृथ्वीमधुदुघेसुपेशसा ॥ द्यावापृथिवीवरुणस्यधर्म्मणाविष्कभितेऽअजरेभूरिरेतसा ॥ ४ ॥ पयःपृथि

व्यामिति इक्षुरसकुम्भेन । ॐ पयः पृथिव्याम्पयऽओषधीषुपयोदिव्युन्तरिक्षेपयोधाः ॥ पयस्वतीःप्प्रदिशः सन्तुमह्यम् ॥ ५ ॥ देवं बर्हिरिति मधुकुम्भेन ॥ ॐ देवम्बर्हिर्वारितीनान्देवमिन्द्रमवर्द्धयत् ॥ स्वासुस्थमिन्द्रेणासंन्नमुन्याबर्हीं ष्युब्भ्यभूद्वसुवनेवसुधेयस्यवेतुयज ॥ ६ ॥ स्वादिष्ठयेति स्वादूदकेन । ॐ स्वादिष्ठयामदिष्ठयापवस्वसोमधारया ॥ इन्द्रायुपातवेसुतः ॥ ७ ॥ सरस्वतीयोन्यामिति नालिकेरजलेन दर्भोदकेन वा । ॐ सरस्वतीयोन्यांगर्भमुन्तरुश्विभ्याम्पत्नीसुकृतम्बिभर्ति ॥ अपांरसेनवरुणोनसाम्नेन्द्रश्रियैजनयन्नप्सुराजा ॥ ८ ॥ ततः पश्चात्रिंशत्कलशेषु मध्ये ये अन्तिमा दश पल्लवान्विता लोकपालकलशास्तैर्देवं स्नापयेत् ॥ तत्र । त्रातारमिन्द्रमिति कदम्बपल्लवकुम्भेन । ॐ त्रातारमिन्द्रमवितारमिन्द्रहवेहवेसुहवशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रस्वस्तिनोमघवाधात्विन्द्रः ॥ १ ॥ त्वन्नोऽअग्न इति शालमलीपल्लवोदकेन ॥ ॐ त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमः शोशुचानोविश्वाद्वेषांसिप्रमुमुग्ध्यस्मत ॥ २ ॥ सुगंनःपन्थेति जम्बूपल्लवोदकेन । ॐ सुगन्नःपन्थाम्प्रदिशन्नएहिज्ज्योतिष्मध्येह्यजरन्नआयुः॥अपैतुमृत्युरमृतम्मऽआगाद्वैवस्वतोनोऽअभयङ्कृणोतु ॥ ३ ॥ असुन्वन्त इति अशोकपल्लवोदकेन । ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसात्ऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ ४ ॥ तत्त्वायामीति प्लक्षपल्लवोदकेन । ॐ तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशःसमानऽआयुःप्प्रमोषीः ॥ ५ ॥ आनोनियुद्भिरिति चूतपल्लवोदकेन । ॐ आनोनियुद्भिः शतिनीभिरध्वरःसहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिःसदानः ॥ ६ ॥ वयःसोमेति वटपल्लवोदकेन । ॐ वयःसोमव्व्रतेतव मनस्तनूषुबिभ्रतः । प्रजावन्तःसचेमहि ॥ ७ ॥ तमीशानमिति बिल्वपल्लवोदकेन । ॐ तमीशानंजगतस्तस्थुषस्पतिंधियञ्जिन्वमवसेहूमहेव्वयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ८ ॥ नमोस्तु सर्प्पेभ्य इति नागपल्लवोदकेन । ॐ नमोस्तुसर्पेभ्योयेकेचपृथिवीमनु ॥

येऽअंतरिक्षेयेदिवितेब्भ्यः सर्प्पेभ्योनमः ॥ ९ ॥ ब्रह्मयज्ञानमिति पलाशपल्लवोदकेन । ॐ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोव्वेनऽआवः ॥
सब्बुध्न्याऽउपमाऽअस्यव्विष्ठाः सतश्चयोनिमसतश्चव्विवः ॥ १० ॥ त्र्यम्बकं यजामहे इति रुद्राक्षोदकेन । ॐ त्र्यम्बकं ऽयजामहेसुगन्धिम्पुष्टिवर्द्ध
नम् । उर्व्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ १ ॥ एभिर्मन्त्रैः संस्नाप्य ॥ ॐ सहस्रशीर्षेति पुरुषसूक्तेन यथासम्भवकलशैः भेरीशंखतूर्यको
लाहलध्वनिपुण्यस्त्रीमङ्गलगीतैः ब्रह्मघोषैः षोडशाष्टचतुरादिभिर्देवं स्नापयित्वा सुगन्धिना सितवस्त्रेण परिमृज्य ॥ ॐ विश्वतश्चक्षुरुतव्विश्वतो
मुखोव्विश्वतोबाहुरुतव्विश्वतस्पात् ॥ सम्बाहुभ्यांधमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवएकः ॥ इति मन्त्रेण संकलीकृत्य देवमावाहयेत् ॥ एह्येहि
भगवन्विष्णो लोकानुग्रहकाम्यया ॥ यज्ञभागं गृहाणेमं वासुदेव नमोऽस्तुते ॥ १ ॥ देवभेदेन मन्त्रोहः कर्तव्यः । इत्यावाह्य हिरण्यवर्णेति हिरण्य
पात्रेण पाद्यमर्घ्यं च दद्यात् । ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ॥ चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो मुमावह ॥ १ ॥ ततो विभ्राडित्या
चमनम् ॥ ॐ व्विभ्राड्बृहत्पिबतु सोम्यंमध्वायुर्दधद्यज्ञपतावविन्हुतम् ॥ व्वातजूतोयोऽअभिरक्षतित्मनाप्प्रजाः पुपोषपुरुधाव्विराजति ॥ २ ॥ त्र्यम्बक
मिति चन्दनानि विलेपयेत् । ॐ त्र्यम्बकय्यजामहेसुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्व्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ ३ ॥ वेदाहमित्युपवीतम्
ॐ व्वेदाहमेतम्पुरुषम्महान्तमादित्यवर्णन्तमसः परस्तात् ॥ तमेवव्विदित्वातिमृत्युमेतिनान्यः पन्थाव्विद्यतेयनाय ॥ ४ ॥ युवा सुवासेति वस्त्रम् ॥
ॐ युवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः ॥ तन्धीरासःकवयउन्नयन्तिस्वाध्योमनसादेवयन्तः ॥ ५ ॥ ततो व्वेदाहमेत
मित्युत्तरीयम् ॥ ६ ॥ आचमनम् ॥ इदंविष्णुरिति पुष्पम् । ॐ इदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाꣳसुरे ॥ ७ ॥
धूरसीति धूपम् । ॐ धूरसिधूर्वधूर्वन्तन्धूर्वतंय्योऽस्मान्धूर्वतितन्धूर्वयम्वयन्धूर्वामः ॥ देवानामसिवह्नितमꣳसस्नितमम्पप्रितमञ्जुष्टतमंदेवहूत
मम् ॥ ८ ॥ चन्द्रमा मनस इति दीपम् । ॐ चन्द्रमामनसोजातश्चक्षोः सूर्य्योऽअजायत ॥ श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत ॥ ९ ॥

अन्नपते इति नैवेद्यम् ॥ ॐ अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणं ÷ ॥ प्रप्रदातारन्तारिषऽऊर्ज्जन्नोधेहिद्विपदेचतुष्पदे ॥ १० ॥ आचमनीयं करोद्वर्त्तनं ताम्बूलं फलादि समर्प्य कर्पूरगर्भितबहुवर्त्तिभिः नीराजनं कृत्वा । ॐ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकम्महिमानं ÷ सचंतयत्र पूर्वेसाद्ध्याऽसन्तिदेवाः ॥ इति पुष्पाञ्जलिं दत्त्वा पुरुषसूक्तेन ज्येष्ठसाम्ना वैराजगायत्रसामभिः स्तुत्वा तैलपात्रस्नानवस्त्रासननैवेद्यादिकं शिल्पिने दद्यात् । एतत्संक्षेपतः प्रोक्तं स्नानकर्म जगत्पते ॥ एतद्वै साधकः कृत्वा सर्वान्कामान्समश्नुते ॥ १ ॥ इति देवस्नपनविधिः ॥ अथाऽन्नाधिवासनम् ॥ तच्च मण्डपस्य यथोक्तकोणे धान्यराशिषु सप्तसु सर्वेषां देवानामुपवेशनं कृत्वा व्रीहिभिर्यवैर्वा देवमाच्छादयेत् यावद्धान्येषु प्रतिमा प्रतिष्ठिता तावत् पुरुषसूक्तं पठेत्ततः शय्यायां देवमधिवासयेत् ॥ अधिवासनावसरे द्वादश १२ ब्राह्मणान् पायसान्नेन देवो नः प्रीयताम् इति भोजयेत् ॥ ततः समलंकृताश्वतस्रो गाः सदक्षिणाः सवत्साः आचार्यादिभ्यो दत्त्वा देवम् अधिवासयेत् । ( पूर्वमुखे प्रासादे आग्निकोणे शय्या । पश्चिममुखे प्रासादे वायुकोणे शय्या । उत्तरमुखे प्रासादे ईशानकोणे शय्या । दक्षिणमुखे प्रासादे नैर्ऋत्यकोणे शय्या ) तत्रादौ पुरुषसूक्तेन देवं स्तुत्वा ॥ ॐ उत्तिष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे ॥ उपप्प्रयन्तुमरुतः सुदानवऽइन्द्रप्प्राशूर्भवासचा ॥ १ ॥ उत्तिष्ठोत्तिष्ठ गोविन्द उत्तिष्ठ गरुडध्वज ॥ उत्तिष्ठ कमलाकान्त त्रैलोक्यं मंगलं कुरु ॥२॥ उत्तिष्ठोत्तिष्ठ संसारे त्यज निद्रां जगत्पते ॥ साधवः संप्रतीक्षन्ते त्वद्दर्शनमहोत्सवाः॥३॥ त्वयि सुप्ते जगत्सुप्तमुत्थिते चोत्थितं जगत् ॥ इत्युत्थाप्य । रथे तिष्ठन्निति रथमारोपयेत् । ॐ रथेतिष्ठन्नयतिवाजिनः पुरोयत्रयत्रकामयतेसुषारथिः ॥ अभीशूनाम्महिमानम्पनायतमनः पश्चादनुयच्छन्तिरश्मयः ॥ १ ॥ ततो जयशब्दैर्वेदध्वनिभिः सुवासिनीमङ्गलगीतैः मृदङ्गादिघोषैः प्रासादप्रादक्षिण्येनानीय यागमण्डपपश्चिमद्वारि । ॐ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतम्मर्त्यञ्च ॥ हिरण्ययेनसवितारथेनादे

१ इमानि सूक्तानि सूक्तप्रकरणे द्रष्टव्यानि ।

वोयाँतिभुवनानिपश्यन् इति मन्त्रेण प्रवेश्य तदनन्तरं मध्यवेद्याः पश्चिमभागस्थितपीठे पूर्वाभिमुखं देवं निधाय मधुपर्कं कुर्यात् ॥ तत्र मन्त्रः ॥
ॐ पुरुषऽएवेदꣳ सर्व्वंय्यद्भूतंय्यच्चभाव्यम् ॥ उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ इति पाद्यम् ॥ १ ॥ ॐ एतावानस्यमहिमातोज्ज्यायाँश्च पुरुषः ॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतन्दिवि ॥ इत्यर्घ्यम् ॥ २ ॥ ॐ अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः ॥ प्रप्रदातारन्तारिषऽऊर्ज्जन्नोधेहिद्विपदेचतुष्पदे ॥ इति मधुपर्कं च दद्यात् ॥ ततो मण्डपमध्यवेद्यां सर्वतोभद्रे धान्यपुञ्जोपरि सारकाष्ठभूतां प्राक्शिरां सुपट्टां शय्यां निधाय, तदुपरि चन्द्रकलिकां शुभ्रास्तरणामुपधानद्वयवतीमास्तीर्य तत्राक्षतैः स्वस्तिकमालिख्य प्रागग्रान् कुशानास्तीर्य पुष्पाणि च विन्यस्य गन्धतोयेन संमार्ज्य मलयागुरुधूपेन धूपयित्वा पुष्पमालाभिर्वितानेन च सुशोभितां च कृत्वा शय्यायाः परितः पूर्वादिदिक्षु एतान् पूजयेत् ॥ ( पूर्वे ) ॐ विष्णवे नमः ॥ १ ॥ ( दक्षिणे ) ॐ मधुसूदनाय नमः ॥ २ ॥ ( पश्चिमे ) ॐ त्रिविक्रमाय नमः ॥ ३ ॥ ( उत्तरे ) ॐ वामनाय नमः ॥ ४ ॥ ( आग्नेय्याम् ) ॐ श्रीधराय नमः ॥ १ ॥ ( निर्ऋतौ ) ॐ हृषीकेशाय नमः ॥ २ ॥ ( वायव्ये ) ॐ पद्मनाभाय नमः ॥ ३ ॥ ( ऐशान्याम् ) ॐ दामोदराय नमः ॥ ४ ॥ इति संपूज्य त्रिः परिक्रमेत् । शिवप्रतिष्ठायां तु । शर्वादीन् पूर्वादिदिक्षु नाममन्त्रैः क्रमेण पूजयेत् । ( पूर्वे ) ॐ शर्वाय नमः ॥ १ ॥ ( दक्षिणे ) ॐ पशुपतये नमः ॥ २ ॥ ( पश्चिमे ) ॐ उग्राय नमः ॥ ३ ॥ ( उत्तरे ) ॐ रुद्राय नमः ॥ ४ ॥ ( आग्नेय्याम् ) ॐ भवाय नमः ॥ १ ॥ ( निर्ऋतौ ) ॐ ईश्वराय नमः ॥ २ ॥ ( वायव्याम् ) ॐ महादेवाय नमः ॥ ३ ॥ ( ऐशान्याम् ) ॐ भीमाय नमः ॥ ४ ॥ इति संपूज्य शय्यायां मूलमन्त्रेण ॐ नमः शं भवायेति वा प्राक्शिरसं देवं निवेशयेत् ॥ ॐ नमः शंभवायचमयोभवायचनमः शंकरायचमयस्करायचनमः शिवायचशिवतरायच ॥ एवं देवं शय्यायां निवेश्य ॐ विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पात् ॥ संबाहुभ्यांधमतिसंपतत्रैर्द्यावाभूमीजनयन्देवऽएकः ॥ १ ॥ इति संकलीकृत्य त्रिभिः पट्टदुकूलैर्विचित्रैः कार्पासनिर्मितैर्वा

देवमाच्छाद्य देवस्य शिरोदेशे भूमावेव सवस्त्रं सहिरण्यं निद्राकलशम् । ॐ आपोदेवीत्प्रतिगृब्भ्णीतमस्मैतत्स्योनेकृणुध्वद्ध सुरभाउलोके ॥
तस्मैनमन्ताञ्जनयत्सुपत्नीर्म्मातेवपुत्रम्बिभृताप्स्वेनत् ॥ इति मन्त्रेण स्थापयित्वा । ॐ आपोऽअस्मान्मातरः शुन्धयन्तुघृतेननोघृतप्वः पुनन्तु ॥
विश्वहि रिप्प्रम्प्रवहन्तिदेवीरुदिदाभ्यःशुचिरापूतऽएमि ॥ दीक्षातपसोस्तनूरसितान्त्वाशिवा ७ शग्मामपरिदधेभद्रंवर्णम्पुष्यन् ॥ इति प्रति
ष्ठापयेत् ॥ ततः । ॐ आप्यायस्वेति मन्त्रेण मधुसर्पिर्भ्यां देवमभ्यञ्जयेत् ॥ ॐ आप्यायस्वमदिन्तमसोम विश्वेभिरशुभिः ॥ भवानसुप्रथ
स्तमुःसखावृधे ॥ १ ॥ ततः ॐ यातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि ॥ इति मन्त्रेण देवं तिल
सर्षपचूर्णैरुपलिम्पेत् । ततो गन्धपुष्पाद्यैर्देवमभ्यर्च्य । ॐ बृहस्पतेपरिदीयारथेनरक्षोहामित्राँऽअपबाधमानः ॥ प्रभञ्जन्त्सेनाः प्रमृणोयुधाजय
न्नस्माकमेद्ध्यविताराथानाम् ॥ इति मन्त्रान्ते सितं परिधानं दद्यात् ॥ ततो विचित्रैः कार्पासवस्त्रैर्दुकूलपट्टैश्च देवमाच्छाद्य शिरसि कौशेयं च
दद्यात् पुरतश्चतुरो दीपान् प्रज्वालयेत् ॥ ( अत्र देवस्य बृहस्पते इति पूर्वोक्तमन्त्रेण हस्ते कङ्कणबन्धनमित्येके )। ततो विश्वतश्चक्षुरिति मन्त्रेण
देवस्य पाद-नाभि-वक्षः-शिरःसु आलम्भनं कुर्यात् । ॐ विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पात् ॥ सम्बाहुभ्यान्धमतिसम्प
तत्रैर्द्यावाभूमीजनयन्देवऽएकः ॥ १ ॥ ततो देवस्य पुरतः पादुके पार्श्वयोः शान्तिकुम्भौ दक्षिणपार्श्वे छत्रं व्यजनं चामररत्नानि च आसन-दर्पण
घण्टा-भक्ष्य-भोज्य-जलपात्रादिकं च पुरतः स्थापयेत् ॥ ततो भूतेभ्यः भस्मना दर्भतिलैर्देवस्य समन्ताद्रक्षार्थं प्राकारत्रयं कृत्वा मण्डपाद्बहिर्गं
त्वा प्रतिदिशमिन्द्रादिलोकपालेभ्यो गन्धादिदानपूर्वकं पूर्ववत् बलिं दद्यात् । ततो भूतेभ्यो बलिदानं बलिमन्त्रस्तु ॥ पूर्वदिग्वासिभ्यो दि
क्पति-भूताधिपति-दिग्रुद्र-दिग्गणपति-दिङ्मातृ-दिक्क्षेत्रपालेभ्यो नमः ॥ ॐ त्र्यम्बकं यजामहे० । इति मन्त्रेण पूर्वादिदिक्षु प्रतिदिशं
बलिं दत्त्वा आचम्य होमं कुर्यात् ॥ ॥ ॐ पराय विष्णवात्मने नमः स्वाहा । इदं विष्णवे ॥ शिवादिप्रतिष्ठायां तु ॐ पराय शिवात्मने स्वाहा

इत्याद्यूहः ॥ अनेनाष्टोत्तरशतमष्टाविंशतिरष्टौ वा तिलयवैः प्रत्येकं हुत्वा प्रतिमायां न्यासं कुर्यात् ॥ तद्यथा-तत्रादौ स्वाङ्गे भूतशुद्धिं प्राणप्रतिष्ठाम् अन्तर्मातृकाबहिर्मातृकान्यासान् कृत्वा तत्तद्देवताकलान्यासांश्च कृत्वा पुनर्देवाङ्गे न्यासं कुर्यात् । अथ वा पुरुषसूक्तन्यासं कृत्वा देवाङ्गे न्यासं कुर्यात् । देवो भूत्वा देवं यजेदिति वाक्यात् एते सर्वे न्यासाः मत्कृतानुष्ठानप्रकाशे द्रष्टव्याः । अत्र विस्तरभयान्नोक्ताः ॥ अं ( पादयोः ) । उं ( हृदये ) । मं ( ललाटे ) । इति प्रणवं न्यसेत ॥ १ ॥ ॐ भूः ( पादयोः ) । ॐ भुवः ( हृदये ) ॐ स्वः ( ललाटे ) । इति व्याहृतीर्न्यसेत् ॥ २ ॥ ॐ अं ( तालुके ) । ॐ आं ( मुखे ) । ( प्रणवः सर्वत्रादौ निवेशनीयः ) इं ( दक्षिणनेत्रे ) । ईं ( वामनेत्रे ) । उं ( दक्षिणकर्णे ) । ऊं ( वामकर्णे ) । ऋं ( दक्षिणगण्डे ) । ॠं ( वामगण्डे ) । ऌं ( दक्षिणनासापुटे ) । ॡं ( वामनासापुटे ) । एं ( ऊर्ध्वौष्ठे ) । ऐं ( अधरोष्ठे ) । ओं ( ऊर्ध्वदन्तपङ्क्तौ ) । औं ( अधरदन्तपङ्क्तौ ) । अं ( ललाटे ) । अः ( जिह्वायाम् ) । यं ( त्वचि ) । रं ( चक्षुषोः ) । लं ( नासिकायाम् ) । वं ( दशनेषु ) । शं ( श्रोत्रयोः ) । षं ( उदरे ) सं ( कटौ ) । हं ( हृदये ) । क्षं ( नाभ्याम् ) ळं ( लिंगे ) पं फं बं भं मं ( दक्षिणबाहौ ) तं थं दं धं नं ( वामबाहौ ) । टं ठं डं ढं णं ( दक्षिणजङ्घायाम् ) । चं छं जं झं ञं ( वामजङ्घायाम् ) । कं खं गं घं ङं ( सर्वाङ्गुलिषु ) ॥ इति मातृकान्यासः ॥ ३ ॥ ॐ रविचन्द्राभ्यां नमः ( नेत्रयोः ) ॥ भौमाय नमः ( हृदये ) बुधाय नमः ( स्कन्धे ) ॥ "नम इति सर्वत्र" बृहस्पतये ( जिह्वायाम् ) । शुक्राय ( लिङ्गे ) । शनैश्चराय ( ललाटे ) । राहवे ( पादयोः ) । केतवे ( केशेषु ) । रोहिणीभ्यो ( हृदये ) । मृगशिरसे ( शिरसि ) । आर्द्रायै ( केशेषु ) । पुनर्वसवे ( ललाटे ) । पुष्याय ( मुखे ) । अश्लेषाभ्यो ( नासायाम् ) । मघाभ्यो ( दन्तेषु ) । पूर्वाफाल्गुनीभ्यो ( दक्षिणकर्णे ) । उत्तराफाल्गुनीभ्यो ( वामकर्णे ) । हस्ताय ( हस्तयोः ) । चित्रायै ( दक्षिणभुजे ) । स्वात्यै ( वामभुजे ) । विशाखानुराधाभ्यां ( स्तनयोः ) । ज्येष्ठाभ्यो ( दक्षिणकुक्षौ ) । मूलाय ( वामकुक्षौ ) । पूर्वाषाढाभ्यः ( कटिपार्श्वयोः ) ।

उत्तराषाढाभ्यो ( लिंगे )। श्रवणधनिष्ठाभ्यो ( वृषणयोः )। शतभिषग्भ्यो ( नेत्रे ) पूर्वाभाद्रपदोत्तराभाद्रपदाभ्याम् ( ऊर्वोः )। रेवतीभ्योऽश्विनीभ्यो ( जंघयोः )। भरणीकृत्तिकाभ्यः ( पादयोः ) ध्रुवाय ( नाभ्याम् ) सप्तर्षिभ्यः ( कण्ठे )। मातृकामण्डलाय नमः ( कटिदेशे )। विष्णुपदेभ्यः ( पादयोः ) नागवीथ्यै अंगवीथ्यै ( वनमालायाम् )। ताराभ्यो ( रोमकूपेषु )। अगस्त्याय ( कौस्तुभे ) इति ग्रहादिन्यासः ॥ ४ ॥ चैत्राय नमः ( शिरसि )। वैशाखाय ( मुखे )। ज्येष्ठाय ( हृदये )। आषाढाय श्रावणाय ( स्तनयोः )। भाद्रपदाय ( उदरे )। आश्विनाय ( कट्याम् )। कार्तिकाय मार्गशीर्षाय ( ऊर्वोः )। पौषाय माघाय ( जङ्घयोः )। फाल्गुनाय ( पादयोः )। संवत्सराय परिवत्सराय इडावत्सराय वत्सराय नमः इति दक्षिणोर्ध्वात्, ( प्रादक्षिण्येन चतुर्षु बाहुषु )। पर्वभ्यो नमः ( सन्धिषु )। ऋतुभ्यो ( लिङ्गे )। अहोरात्रेभ्यः ( अस्थिषु )। क्षणाय लवाय काष्ठायै ( रोमसु )। कृताय ( मुखे )। त्रेताय ( हृदये )। द्वापराय ( नितम्बे )। कलियुगाय नमः ( पादयोः )। मन्वन्तरेभ्यो नमो ( बाहवे )। पराय परार्धाय ( जङ्घयोः )। महाकल्पाय ( शरीरे )। उदगयनाय दक्षिणायनाय ( पादयोः )। विषुवते ( सर्वाङ्गुलीषु )॥ इति कालन्यासः ॥ ५ ॥ ब्राह्मणाय ( मुखे )। क्षत्रियाय ( बाह्वोः ) वैश्याय ( ऊर्वोः )। शूद्राय ( पादयोः )। सङ्करजेभ्यो नमः ( पादाग्रे )। अनुलोमजेभ्यो नमः ( सर्वाङ्गसन्धिषु )। गोभ्यो नमः ( मुखे )। अजाविकाभ्यो नमः ( हस्तयोः )। ग्राम्यारण्यपशुभ्यो नमः ( सर्वत्र )॥ इति वर्णन्यासः ॥ ६ ॥ मेघेभ्यो नमः ( केशेषु ) अभ्रेभ्यो नमः ( रोमसु )। नदीभ्यो नमः ( सर्वगात्रेषु )। समुद्रेभ्यो नमः ( कुक्षिदेशे ) इति तोयन्यासः ॥ ऋग्वेदाय नमः ( शिरसि )। यजुर्वेदाय नमो ( दक्षिणभुजे )। सामवेदाय नमो ( वामभुजे )। सर्वोपनिषद्भ्यो नमः ( हृदये )। इतिहासपुराणेभ्यो नमः ( जङ्घयोः )। अथर्वांगिरसेभ्यो नमः ( नाभौ )। कल्पसूत्रेभ्यो नमः

१ ॐ ग्राम्यपशुभ्यो नमः ( कट्याम् )। अरण्यपशुभ्यो नमः ( ऊर्वोः ) इति प्रतिष्ठामयूखे विषयः ॥

( पादयोः )। व्याकरणाय नमो ( वक्त्रे )। तर्केभ्यः ( कण्ठे )। मीमांसायै निरुक्ताय ( हृदये )। छन्दोज्योतिःशास्त्रेभ्यो नमः ( नेत्रयोः ) गीतभूतशास्त्रेभ्यो नमः ( श्रोत्रयोः )। आयुर्वेदाय ( दक्षिणभुजे )। धनुर्वेदाय नमो ( वामभुजे )। योगशास्त्रेभ्यो नमः ( हृदये )। नीतिशास्त्रेभ्यो नमः ( पादयोः )। वश्यतन्त्राय नमः ( ओष्ठयोः ) ॥ इति विद्यान्यासः ॥ ८ ॥ दिवे नमः ( मूर्ध्नि )। सूर्यचन्द्रलोकाभ्यां नमो ( नेत्रयोः ) अनिललोकाय नमो ( घ्राणे ) व्योम्ने नमो ( नाभ्याम् )। समुद्रेभ्यो नमो ( बस्तिदेशे )। पृथिव्यै नमः ( पादयोः ) ॥ इति वैराजन्यासः ॥ ९ ॥ हिरण्यगर्भाय नमः ( शिरसि )। कृष्णाय नमः ( केशेषु )। रुद्राय नमो ( ललाटे )। यमाय नमो ( भ्रुकुट्याम् )। अश्विभ्यां नमः ( कर्णयोः )। वैश्वानराय नमो ( मुखे )। महद्भ्यो नमो ( घ्राणे )। वसुभ्यो नमः ( कण्ठे )। रुद्रेभ्यो नमो ( दन्ते )। सरस्वत्यै नमः ( जिह्वायाम् )। इन्द्राय नमः ( दक्षिणभुजे )। बलये नमो ( वामभुजे )। प्रह्लादाय नमः ( दक्षिणस्तने )। विश्वकर्म्मणे० ( वामस्तने )। नारदाय० ( दक्षिणकुक्षौ )। अनन्तादिभ्यो नमः ( वामकुक्षौ )। वरुणाय नमः ( हस्तयोः )। मित्राय नमः ( पादयोः )। विश्वेभ्यो देवेभ्यो नमः ( ऊरुमध्ये )। पितृभ्यो नमः ( जानुमध्ये )। यक्षेभ्यो नमः ( जङ्घयोः )। राक्षसेभ्यो नमः ( गुल्फयोः )। पिशाचेभ्यो नमः ( दक्षिणपादे )। असुरेभ्यो नमः ( वामपदे )। विद्याधरेभ्यो नमः ( पादयोः )। ग्रहेभ्यो नमः ( पादतलयोः )। गुह्यकेभ्यो नमो ( गुदे )। पूतनादिभ्यो नमः ( नखेषु )। गन्धर्वेभ्यो नमः ( ओष्ठयोः )। कार्तिकेयाय गणेशाय ( कटिपार्श्वयोः ) ॥ इति देवयोनिविशेषन्यासः ॥ १० ॥ मत्स्याय नमः ( मूर्द्धनि )। कूर्माय नमः ( पादयोः )। नृसिंहाय नमः ( ललाटे ) वराहाय०। ( जङ्घयोः ) वामनाय० ( मुखे )। परशुरामाय० ( हृदि )। रामाय० ( बाहुषु )। कृष्णाय० ( नाभ्याम् )। बुद्धाय० ( बुद्धौ )। कल्किने० ( जान्वोः )। केशवाय० ( शिरसि )। नारायणाय० ( मुखे )। माधवाय० ( ग्रीवायाम् )। गोविन्दाय० ( बाह्वोः )। विष्णवे० ( हृदये )। मधुसूदनाय० ( पृष्ठे )। त्रिविक्रमाय० ( कट्याम् )। वामनाय नमः

( जठरे )। श्रीधरहृषीकेशाभ्यां नमः ( जङ्घयोः )। पद्मनाभाय नमो ( गुल्फयोः ) । दामोदराय नमः ( पादयोः ) ॥ इति मूर्तिन्यासः ॥ ११ ॥
अश्वमेधाय नमः ( मूर्ध्नि )। नरमेधाय नमः ( ललाटे ) राजसूयाय नमः ( मुखे ) । गोसवाय नमः ( कण्ठे ) द्वादशाय नमः ( हृदि )।
आधीनेभ्यो नमः ( नाभौ )। सर्वजितेभ्यो० ( दक्षिणकट्याम् ) । सर्वमेधाय० ( वामकट्याम् ) । अग्निष्टोमाय० ( लिङ्गे )। अतिरात्राय०
( वृषणयोः )। आप्तोर्यामाय० ( ऊर्वोः )। षोडशिने० ( जान्वोः ) । उतथ्याय० ( दक्षिणजंघायाम् ) । वाजपेयाय नमः ( वामजंघायाम् )
अत्यग्निष्टोमाय० ( दक्षिणबाहौ )। चातुर्मास्याय० ( वामबाहौ )। सौत्रामणये० ( हस्तेषु ) । पश्विष्टिभ्यो० ( अङ्गुलिषु )। दर्शपौर्णमासाभ्यां०
( नेत्रयोः )। सर्वेष्टिभ्यो० ( रोमकूपेषु ) स्वाहाकाराय० वषट्काराय० ( स्तनयोः )। पञ्चमहायज्ञेभ्यः ( पादाङ्गुलीषु )। दक्षिणाग्नये०
( हृदये )। आहवनीयाय० ( मुखे )। गार्हपत्याय० ( नाभौ ) वेद्यै० ( उदरे ) । प्रवर्ग्याय० ( भूषणेषु )। सवनेभ्यः० ( पादयोः )। एधोभ्यो०
( बाहुषु )। दर्भेभ्यो० ( केशेषु )। इति क्रतुन्यासः ॥ १२ ॥ अथ मूलन्यासः। शक्तिन्यासः । अङ्गन्यासः। इति साधारणः सर्वत्र। अथ वैष्णव
मधिकृत्य उच्यते विष्णुप्रतिष्ठायाम् ॥ ॐ धर्माय० ( मूर्ध्नि )। ज्ञानाय० ( हृदये ) । वैराग्याय० ( गुह्ये )। ऐश्वर्याय० ( पादयोः )। खड्गाय०
( शिरसि )। शार्ङ्गाय० ( मस्तके )। मुशलाय० ( दक्षिणभुजे )। हलाय० ( वामभुजे ) । चक्राय० ( नाभ्यां, जठरे, पृष्ठे च )। शङ्खाय०
( लिङ्गे वृषणे च )। गदायै० ( जङ्घयोः जान्वोश्च )। पद्माय० ( गुल्फयोः पादयोः )। शिवप्रतिष्ठायां तु । वज्राय० ( शिरसि ) । दण्डाय०
( मस्तके )। खड्गाय० ( दक्षिणभुजे )। पाशाय० ( वामभुजे )। ध्वजाय० ( नाभ्याम् )। अङ्कुशाय० ( लिङ्गे वृषणे च )। त्रिशूलाय० ( जङ्घ
योर्जान्वोश्च )। पद्माय० ( गुल्फपादयोः )। इत्यायुधन्यासः ॥ सूर्यस्य आयुधन्यासः शिववत् ॥ अथ दुर्गायाः। ॐ त्रिशूलाय नमः ( शिरसि )
१ ॐ खड्गाय नमो ( मस्तके ) २ ॐ चक्राय नमो ( दक्षिणभुजे ) ३ ॐ बाणाय नमो ( वामभुजे ) ४ ॐ शक्तये नमः ( नाभौ ) ५ ॐ खेटकाय

नमो ( गुह्ये ) ६ ॐ चापाय नमो ( जङ्घयोः ) ७ ॐ पाशाय नमो ( जानुनोः ) ८ॐ अङ्कुशाय नमो ( गुल्फयोः ) ९ ॐ परशवे नमः ( पादयोः ) १० इति दुर्गायाः आयुधन्यासः ॥ अथ गणेशस्यायुधन्यासः ॥ ( शिरसि ) बीजपूराय नमः । ( मस्तके ) गदायै० । ( वामभुजे ) धनुषे० । ( दक्षिणभुजे ) त्रिशूलाय० । ( नाभ्याम् ) चक्राय० । ( जठरे ) कमलाय० । ( पृष्ठे ) पाशाय० । ( लिङ्गे वृषणे च ) उत्पलाय० । ( जंघयोः ) बाणाय० । ( जानुनोः ) अङ्कुशाय० । ( गुल्फयोः ) विषाणाय० । ( पादयोः ) रत्नकलाय० ॥ इति गणेशस्यायुधन्यासः ॥ अथ शक्तिन्यासः । लक्ष्म्यै नमो ( ललाटे ) । सरस्वत्यै नमो ( मुखे ) । रत्यै नमो ( गुह्ये ) । प्रीत्यै नमः ( कण्ठे ) । कीर्त्यै नमो ( दिक्षु ) । शक्त्यै नमो ( हृदि ) । तुष्ट्यै नमो ( जठरे ) । पुष्ट्यै नमः ( सर्वत्र ) । इति विष्णोः शक्तिन्यासः ॥ अथ शिवस्य शक्तिन्यासः । ॐ वामायै नमो ( ललाटे ) । ज्येष्ठायै० ( मुखे ) । रुद्राण्यै० ( गुह्ये ) । काल्यै० ( कण्ठे ) । कलविकरणायै० ( दन्तेषु ) । बलायै० ( हृदये ) । बलप्रमथनायै० ( जठरे ) । सर्वभूतदमनायै० ( नाभौ ) । उन्मनायै० ( सर्वाङ्गेषु ) इति ॥ अथ सूर्यस्य शक्तिन्यासः ॥ दीप्तायै नमो ( ललाटे ) । सूक्ष्मायै० ( मुखे ) । विजयायै० ( गुह्ये ) । भद्रायै० ( कण्ठे ) । विभूत्यै० ( दन्तपङ्क्तिषु ) । विमलायै० ( हृदये ) । अमोघायै० ( नाभौ ) । विद्युतायै० ( उदरे ) । सर्वतोमुख्यै० ( सर्वाङ्गे ) इति ॥ अथ देव्याः शक्तिन्यासः ॥ प्रभायै० ( ललाटे ) । उमायै० ( मुखे ) । जयायै० ( गुह्ये ) । सूक्ष्मायै० ( कण्ठे ) । विशुद्धायै० ( दन्तेषु ) । नन्दिन्यै० ( हृदये ) । सुप्रभायै० ( नाभौ ) । विजयायै० ( उदरे ) । सर्वसिद्धिप्रदायिन्यै नमः ( सर्वाङ्गेषु ) इति ॥ अथ गणेशस्य शक्तिन्यासः । ॐ तीव्रायै० ( ललाटे ) । ज्वालिन्यै० ( मुखे ) । नन्दायै० ( गुह्ये ) । भोगदायै० ( कण्ठे ) । कामरूपिण्यै० ( दन्तेषु ) । उग्रायै० ( हृदये ) । तेजोवत्यै० ( नाभौ ) । सत्यायै० ( उदरे ) । सर्वविघ्नविनाशायै नमः ( सर्वाङ्गेषु ) । इति शक्तिन्यासः । अथाङ्गन्यासः ॥ तत्रादौ शिवस्यांगन्यासः । ॐ नमः ( हृदये ) । नं नमः ( शिरसि ) । मं नमः ( शिखायै वषट् ) । शिं नमः ( कवचाय हुम् ) । वां नमो ( नेत्र

याय वौषट् )। यं नमः ( अस्त्राय फट् ) इति॥ अथ सूर्यस्यांगन्यासः॥ ॐ नमो घृणये सूर्यायादित्याय सत्याय ( हृदयाय नमः ) १। ॐ नमो घृणये सूर्यायादित्याय ब्रह्मणे ( शिरसे स्वाहा ) २। ॐ नमो घृणये सूर्यायादित्याय विष्णवे ( शिखायै वषट् ) ३। ॐ नमो घृणये सूर्यायादित्याय रुद्राय ( कवचाय हुम् ) ४। ॐ नमो घृणये सूर्यायादित्याय अग्नये ( नेत्रत्रयाय वौषट् ) ५। ॐ नमो घृणये सूर्यायादित्याय सर्वाय ( अस्त्राय फट् ) इति। अथ देव्या अङ्गन्यासः॥ ॐ ह्रां दुर्गायै (हृदयाय नमः)। ॐ ह्रीं दुर्गायै (शिरसे स्वाहा)। ॐ ह्रूं दुर्गायै (शिखायै वषट्)। ॐ ह्रैं दुर्गायै ( कवचाय हुम् )। ॐ ह्रौं दुर्गायै ( नेत्रत्रयाय वौषट् )। ॐ ह्रः दुर्गायै ( अस्त्रायफट् ) इति॥ अथ गणपतेरङ्गन्यासः॥ ॐ श्रीं ह्रीं क्लीं ग्लौं गं षड्बीजस्य गां (हृदयाय नमः)। ॐ श्रीं ह्रीं क्लीं ग्लौं गं षड्बीजस्य गीं ( शिरसे स्वाहा )। ॐ श्रीं ह्रीं क्लीं ग्लौं गं षड्बीजस्य गूं ( शिखायै वषट् )। ॐ श्रीं ह्रीं क्लीं ग्लौं गं षड्बीजस्य गैं (कवचाय हुं)। ॐ श्रीं ह्रीं क्लीं ग्लौं गं षड्बीजस्य गौं (नेत्रत्रयाय वौषट्)। ॐ श्रीं ह्रीं क्लीं ग्लौं गं षड्बीजस्य गः ( अस्त्राय फट् )॥ इति गणपतेरंगन्यासः॥ अथ मूलमन्त्रन्यासः॥ तत्रादौ गुणन्यासः। गुणशब्देन अंगमुच्यते। ॐ हृदयं ( हृदये )। ॐ शिरः ( शिरसि )। ॐ शिखा ( शिखायां )। ॐ कवचं ( सर्वत्र )। ॐ नेत्रं ( नेत्रयोः )। ॐ अस्त्रं ( करयोः )। ॐ मुक्ताहाराय ( दक्षिणस्तने )। ॐ श्रीवत्साय ( वामस्तने )। कौस्तुभाय। ( उरसि )। वनमालायै ( कण्ठे )। इत्यंगन्यासः॥ अथ विष्णोर्द्वादशाक्षरन्यासः॥ ॐ ( पादयोः )। नं ( जानुनोः )। मों (गुह्ये)। भं (नाभौ)। गं (हृदये)। वं (कण्ठे)। तें (मुखे)। वां (नेत्रयोः)। सुं (भाले)। दें (मूर्ध्नि)। वां (दक्षिणपार्श्वे)। यं ( उत्तरपार्श्वे )। इति॥ अथ शिवस्य द्वादशाक्षरमन्त्रन्यासः। ॐ नमो भगवते शिवाय नमः। ॐ नमः ( पादयोः )। नं नमो ( जानुनि )। मों ( गुह्ये )। भं ( नाभौ )। गं ( हृदये )। वं ( कण्ठे )। तें ( मुखे )। शिं (नेत्रयोः)। नां (ललाटे)। यं (शिरसि)। नं (दक्षिणपार्श्वे)। मं (वामपार्श्वे)। इति॥ अथ सूर्यस्य देहे सूर्यमन्त्रन्यासः। ॐ (पादयोः)। नं (जानुनोः)। मं (गुह्ये)। भं (नाभौ)। गं (हृदये)। वं (कण्ठे)। तें (मुखे)। सूं (नेत्रयोः)। र्यं (भाले)। यं ( मूर्ध्नि )। नं (दक्षिणपार्श्वे)। मं

( वामपार्श्वे) इति । अथ देव्या मन्त्रन्यासः॥ॐ नमो (मूर्ध्नि) । ह्रीं (मुखे) । क्लीं (कण्ठे) । चां (हृदि) । मुं (दक्षिणपार्श्वे) । डां (वामपार्श्वे) । यैं (नाभौ) । विं (गुह्ये) । च्चें (पादयोः)। इति ॥ अथ गणपतेर्मंत्रन्यासः ॥ ॐ (मूर्ध्नि) । ॐ नमः (शिखायाम् ) । ॐ श्रीं (ललाटे)। ॐ ह्रीं ( दक्षभ्रुवि) । ॐ क्लीं ( वामभ्रुवि ) । ॐ ग्लौं (दक्षिणनेत्रे)। ॐ गं (बामनेत्रे)।ॐ णं (दक्षिणश्रोत्रे)। ॐ पं (वामश्रोत्रे) । ॐ तं (दक्षनासापुटे)। ॐ यें (वामनासापुटे)। ॐ सं (ओष्ठयोः)। ॐ वं (तालुदेशे)। ॐ जं (नाभौ)। ॐ नं (उदरे)। ॐ मे (कट्याम्)। ॐ शं (लिंगे)। ॐ वं (वृषणे)। ॐ मां (ऊर्वोः)। ॐ नं (जंघयोः) ॐ यं (गुल्फयोः) ॐ स्वां (पादयोः) ॐ हां (अङ्गुलिषु) ॥ इति महागणपतिमन्त्रन्यासः ॥ अथ प्रतिमायां जीवन्यासः ॥ ॐ अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुःसामानि छन्दांसि चैतन्यदेवता आं बीजम् ह्रीं शक्तिः क्रौं कीलकममुकदेवप्रतिमायाः प्राणप्रतिष्ठायां जीवन्यासे विनियोगः । ॐ ब्रह्मविष्णुरुद्रऋषिभ्यो नमः ( शिरसि ) । ऋग्यजुःसामछन्दोभ्यो नमः (मुखे)। प्राणाख्यदेवतायै नमो ( हृदि )। आं बीजाय नमो ( गुह्ये ) । ह्रीं शक्त्यै नमः ( पादयोः ) । क्रौं कीलकाय नमः इति (सर्वांगे ) । ॐ कं खं गं घं ङं अं पृथिव्यप्तेजोवाय्वाकाशात्मने आं ( हृदयाय नमः ) । ॐ चं छं जं झं ञं इं शब्दस्पर्शरूपरसगन्धात्मने ईं ( शिरसे स्वाहा )। ॐ टं ठं डं ढं णं उं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊं ( शिखायै वषट् ) । ॐ तं थं दं धं नं एं वाक्पाणिपादपायूपस्थात्मने ऐं ( कवचाय हुम् ) । ॐ पं फं बं भं मं ओं वचनादानविहरणोत्सर्गानन्दात्मने औं ( नेत्रयाय वौषट् )। ॐ यं रं लं वं शं षं सं हं क्षं मनोबुद्ध्यहङ्कारचित्तात्मने अः ( अस्त्राय फट् )। ॐ आं ह्रीं क्रौं य रं लं वं शं षं सं हं हं सः विष्णोर्वा अमुकदेवस्य प्राणा इह प्राणाः । ॐ आं० विष्णोर्वा अमुकदेवस्य जीव इह स्थितः । ॐ आं अमुकदेवस्य सर्वेन्द्रियाणि । ॐ आं० । ह्रीं० देवस्य वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणप्राणा इहागत्य स्वस्तये सुखेन चिरान्तिष्ठन्तु स्वाहा । इति मन्त्रं वारत्रयं पठेत् । ततः प्रतिमायाः हृद्यङ्गुष्ठं दत्त्वा जपेत् । ॐ अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाश्चरन्तु च ॥ अस्यै देवत्वमर्चायै मामहेति च कश्चन

। १ । इति पुरुषभावं सम्भावयित्वा ॐ इति प्रणवेन सन्निरुध्य सजीवं ध्यात्वा ध्रुवसूक्तं मूलमन्त्रं गायत्रीमन्त्रं च देवकर्णे जपित्वा । स्वागतं देवदेवेश मद्भाग्यात्त्वमिहागतः ॥ प्राक्कृतं त्वमदृष्ट्वा मां बालवत्परिपालय ॥ इति जपेत् । अथ जीवन्यासे तत्त्वन्यासः । ॐ मं जीवात्मने नमः । ॐ भं प्राणात्मने नमः। ( शरीरव्यापकत्वेन न्यसेत् ) ॐ बं बुद्ध्यात्मने नमः । ॐ फं अहङ्कारात्मने नमः । ॐ पं मन आत्मने नमः ( हृदये )। ॐ नं शब्दतन्मात्रात्मने नमः ( शिरसि )। ॐ धं स्पर्शतन्मात्रात्मने नमः ( वक्त्रे )। ॐ दं रूपतन्मात्रात्मने नमः ( हृदये )। ॐ थं रसतन्मात्रात्मने नमः ( अंसयोः ) । ॐ तं गन्धतन्मात्रात्मने नमः ( पादयोः )। ॐ णं श्रोत्रात्मने नमः( श्रोत्रयोः) । ॐ ढं त्वगात्मने नमः ( त्वचि )। ॐ डं चक्षुरात्मने० ( चक्षुषोः )। ॐ ठं जिह्वात्मने० ( जिह्वायाम् )। ॐ टं घ्राणात्मने० ( घ्राणे )। ॐ ञं वागात्मने० ( वाचि )। ॐ झं पाण्यात्मने० ( पाण्योः )। ॐ जं पादात्मने० ( पादयोः )। ॐ छं पाय्वात्मने० ( पायौ )। ॐ चं उपस्थात्मने० ( उपस्थे )। ॐ ङं पृथिव्यात्मने० ( पादयोः )। ॐ घं अप्तत्त्वात्मने० ( बस्तौ )। ॐ गं तेजआत्मने० ( हृदये )। ॐ खं वायुतत्त्वात्मने० ( घ्राणे ) । ॐ कं आकाशात्मने० ( शिरसि )। ॐ शं पुण्डरीकाक्षाय नमः ( हृदि )। ॐ षं सूर्याय नमः ( हृत्पुण्डरीके )। ॐ सं सोमात्मने० ( स्तनमध्ये )। ॐ रं वह्न्यात्मने० ( स्तनयोः )। ततः ॐ बं बीजं स्वाभिमतमूर्त्यां स्वमन्त्रेण संयोज्य ॐ पुरुषात्मने नमः । इति पुरुषभावनीयं ध्यात्वा स्वमन्त्रेण संयोज्य ॐ तत्पुरुषात्मने नमः । ( पुरुषभावनीय ध्यात्वा )। ॐ पं परात्मने नमः । इति ( सर्वसाक्षिणं भावयित्वा ) । ॐ गं सर्वात्मने नमः । इति ( सर्वतोमुखम् ) ॐ वं अनुग्रहात्मने नमः । ( अनुग्रहकरणम् )। ॐ सं सर्वात्मने नमः ( इति संभूतिकरणम् )। ॐ लं सर्वसंहरणात्मने नमः । ( इति संहरणात्मकम् ) । ॐ क्षं कोपात्मने नमः इति सर्वसंयमकारकमिति ध्यात्वा सर्वेश्वरे तत्र तत्त्वाश्रयन्यासं न्यसेत् । ( ॐ कारमादौ अन्ते नम इति सर्वत्र ज्ञेयम् ) तत्रादौ तत्त्वत्रयहोमः । ॐ आत्मतत्त्वाय स्वाहा । ॐ आत्मतत्त्वादिपतये ब्रह्मणे स्वाहा । ॐ विद्यातत्त्वाय स्वाहा । विद्यातत्त्वाधिपतये विष्णवे स्वाहा ।

ॐ शिवतत्त्वाय० । शिवतत्त्वाधिपतये रुद्राय स्वाहा इति तत्त्वेभ्यो हुत्वा न्यसेत् । तद्यथा । ॐ आत्मतत्त्वाय० ( पादयोः ) ॐ । विद्यातत्त्वाय० ( हृदि ) । शिवतत्त्वाय० ( शिरसि ) ॥ इति त्रितत्त्वन्यासः ॥ ॐ पृथिवीतत्त्वात्मने नमः ( पादयोः ) । अप्तत्त्वात्मने० ( बस्तौ ) । तेजस्तत्त्वात्मने० ( हृदये ) । वायुतत्त्वात्मने० ( घ्राणे ) । आकाशतत्त्वात्मने० ( शिरसि ) । गन्धतत्त्वात्मने० ( पादयोः ) । रसतत्त्वात्मने० ( बस्तौ ) । रूपतत्त्वात्मने ( हृदये ) । स्पर्शतत्त्वात्मने नमः ( घ्राणे ) । शब्दतत्त्वात्मने नमः ( शिरसि ) । घ्राणतत्त्वात्मने० ( घ्राणे । जिह्वातत्त्वात्मने० ( जिह्वायाम् ) । चक्षुस्तत्त्वात्मने० ( चक्षुषोः ) । त्वक्तत्त्वात्मने० ( त्वचि )। श्रोत्रतत्त्वात्मने० ( कर्णयोः )। पायुतत्त्वात्मने० ( पायौ ) । उपस्थतत्त्वात्मने० ( उपस्थे ) । हस्ततत्त्वात्मने० ( हस्तयोः ) पादतत्त्वात्मने० ( पादयोः ) । वाक्तत्त्वात्मने० ( वाचि ) । मनस्तत्त्वात्मने० ( मनसि ) । बुद्धितत्त्वात्मने० ( बुद्धौ )। अहङ्कारतत्त्वात्मने नमः । सत्त्वाय नमः । रजसे नमः । तमसे नमः । पुरुषतत्त्वाय नमः ( हृदये ) रागतत्त्वाय नमः । तत्रैव विद्यातत्त्वाय नमः । नीतितत्त्वाय० तर्कतत्त्वाय० कालतत्त्वाय० मायातत्त्वाय० ईश्वरतत्त्वाय० सदाशिवतत्त्वाय० शक्तितत्त्वाय० शिवतत्त्वाय नमः । इति बीजन्यासः । इति षोडशन्यासाः । सर्वार्चासु साधारणाः ॥ अथ गायत्रीन्यासः ॥ सूर्यस्य । तत ( पादाङ्गुष्ठयोः ) । सं ( गुल्फयोः ) । विं ( जङ्घयोः ) । तुं ( जानुनोः ) । वं ( ऊर्वोः ) रें ( गुदे ) । णिं ( वृषणे ) । यं ( कटौ ) । भं ( नाभौ ) । गं ( जठरे ) । दें ( स्तनयोः )। वं ( हृदि ) । स्यं ( कंठे ) । धीं ( वक्त्रे ) । मं ( तालुदेशे ) । हिं ( नासिकाग्रे ) । धिं ( चक्षुषोः ) । यों ( भ्रूमध्ये ) । यों ( ललाटे ) । नः (पूर्वे)। प्रं ( दक्षिणे ) । चों ( पश्चिमे ) । दं ( उत्तरे ) । यां ( मूर्ध्नि ) । त ( सर्वत्र ) । तत्सवितुं ( हृदि ) । वरेण्यं ( शिरसि ) । भर्गो देवस्य धीमहि ( कवचे ) धियो यो नः ( नेत्रयोः ) । प्रचोदयात (अस्त्रे)।इति गायत्रीन्यासः॥अथ मन्त्रन्यासः॥ अग्निमीळे इति ( पादयोः) । ॐ अ॒ग्निमी॑ळे पु॒रोहि॑तं य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म् । होता॑रं रत्न॒धात॑मम्॥ १ ॥ इषेत्वेति ( गुल्फयोः ) । ॐ इ॒षे त्वो॒र्जे त्वा॑ वा॒यव॑स्थ दे॒वो वः॑ सवि॒ता प्रार्प॑यतु॒ श्रेष्ठ॑तमाय॒ कर्म॑ण॒ऽआप्या॑यध्वमघ्न्या॒ऽइन्द्रा॑य भा

गम्भुजावंतीरनमीवाऽअयक्ष्मामावस्तेनऽईशतमाघशꣳसोध्रुवाऽअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि ॥ २ ॥ ॐ अग्नआयाऽइति ( जंघयोः )
ॐअग्नआयाहिवीतयेगृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ इति जङ्घयोः ॥ शन्नोदेवीति जानुनोः । ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तु
पीतये । शंय्योरभिस्रवन्तुनः ॥ ३ ॥ सुपर्णोसीति ( ऊर्वोः ) । ॐ सुपर्णोसिगरुत्माँस्त्रिवृत्तेशिरोगायत्रञ्चक्षुर्बृहद्रथंतरपक्षौ ॥ स्तोमऽआत्माछ
न्दाꣳस्यङ्गानियजूꣳषिनाम ॥ सामतेतनूर्वामदेव्यंयज्ञायज्ञियम्पुच्छन्धिष्ण्याःशफाः ॥ सुपर्णोऽसिगरुत्मान्दिवङ्गच्छस्वःपत ॥ ४ ॥ स्व
स्तिन इति ( जठरे ) ॥ ॐ स्वस्तिनऽइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु
॥ ५ ॥ दीर्घायुत्वा इति ( हृदये ) ॐ दीर्घायुत्त्वायबलायवर्च्चसेसुप्रजास्त्वायसहसाऽअथोजीवशरदः शतम् ॥ ६ ॥ श्रीश्च ते इति ( कण्ठे )
ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मऽइषाण ॥ ७ ॥ त्रातारमिति
( वक्रे ) । ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवे सुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः ॥ ८ ॥ त्र्य
म्बकमिति ( स्तनयोर्नेत्रयोश्च ) ॥ ॐ त्र्यंबकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ त्र्यम्बकंयजा
महेसुगन्धिम्पतिवेदनम् ॥ उर्वारुकमिवबन्धनादितोमुक्षीयमामुतः ॥ ९ ॥ मूर्धानमिति ( मूर्ध्नि ) । ॐ मूर्द्धानन्दिवोऽअरतिम्पृथिव्यावै
श्वानरमृतऽआजातमग्निम् ॥ कविꣳसम्राजमतिथिञ्जनानामासन्नापात्रंजनयन्तदेवाः ॥ १० ॥ अथ द्वादशाक्षरनारायणस्य मूर्तिन्यासः ॥ ॐ
केशवाय नमः ( शिरसि ) । ॐ नं नारायणायेति ( मुखे ) । ॐ मो माधवायेति ( ग्रीवायाम् ) । ॐ भं गोविन्दायेति ( कण्ठे ) । ॐ गं वि
ष्णवे इति ( पृष्ठे ) । ॐ वं मधुसूदनाय ( कुक्षौ ) । ॐ तें त्रिविक्रमाय ( कट्याम् ) । ॐ वां वामनाय ( जङ्घयोः ) ॐ सुं श्रीधराय ( वामगुल्फे ) ।
ॐ दें हृषीकेशाय ( दक्षिणगुल्फे ) । ॐ वां पद्मनाभाय ( वामपादे ) । ॐ यं दामोदराय ( दक्षिणपादे ) ॥ इति नारायणद्वादशाक्षरन्यासः ॥ ॐ

हुं हृदयाय नमः ( हृदये ) । ॐ विष्णवे नमः ( शिरसि ) । ॐ ब्रह्मणे नमः ( शिखायाम् ) । ॐ माधवाय नमः । ( कवचे ) । ॐ चक्रिणे नमः ( नेत्रयोः ) । ॐ चक्रिणे नमः ( अस्त्राय फट् ) । " अस्त्रं हस्तयोः " । ॐ शंभवे नमः । ॐ गायत्र्यै० । ( दक्षिणनेत्रे ) ॥ विजयाय नमः । सावित्र्यै० । ( वामनेत्रे ) ॥ चक्रिणे० चक्रनेत्रायै पिंगलास्त्रं ( सर्वदिक्षु ) ॥ इत्यष्टाङ्गविष्णुमन्त्रन्यासः ॥ अथ पुरुषसूक्तन्यासः । सहस्रशीर्षेति ( पादयोः ॥ १ ॥ पुरुष एवेति ( जङ्घयोः ) ॥ २ ॥ एतवानस्येति ( जानुनोः ) ॥ ३ ॥ त्रिपादूर्ध्वमिति ( ऊर्वोः ) ॥ ४ ॥ ततो विराडिति ( वृषणे ) ॥ ५ ॥ तस्माद्यज्ञादिति ( कट्याम् ) ॥ ६ ॥ तस्माद्यज्ञात्सर्वहुत इति ( नाभ्याम् ) ॥ ७ ॥ तस्मादश्वा इति ( हृदि ) ॥ ८ ॥ तंयज्ञमिति ( स्तनयोः ) ॥ ९ ॥ यत्पुरुषमिति ( बाह्वोः ) ॥ १० ॥ ब्राह्मणोऽस्येति ( मुखे ) ॥ ११ ॥ चन्द्रमा मनस इति ( चक्षुषोः ) ॥ १२ ॥ नाभ्या आसीदिति ( कर्णयोः ) ॥ १३ ॥ यत्पुरुषेणेति ( भ्रुवोः ) ॥ १४ ॥ सप्तास्येति ( भाले ) ॥ १५ ॥ यज्ञेन यज्ञमिति ( शिरसि ) ॥ १६ ॥ इति पुरुषसूक्तन्यासः ॥ अथ उत्तरनारायणन्यासः ॥ अद्भ्यः संभृत इति ( हृदये ) ॥ १ ॥ वेदाहमिति ( शिरसि ) ॥ २ ॥ प्रजापतिरिति ( शिखायाम् ) ॥ ३ ॥ यो देवेभ्य इति ( कवचे ) ॥ ४ ॥ रुचं ब्राह्ममिति ( नेत्रयोः ) ॥ ५ ॥ श्रीश्चते इति ( अस्त्रम् ) ॥ ६ ॥ इति उत्तरनारायणन्यासः ॥ अथ शिवस्य पञ्चब्रह्मन्यासः । अन्येषां न तद्यथा । ( अङ्गुष्ठयोः ) ईशानम् । ( तर्जन्योः ) तत्पुरुषम् । ( मध्यमयोः ) अघोरम् । ( अनामिकयोः ) वामदेवम् । ( कनिष्ठिकयोः ) सद्योजातम् । ततः । कनिष्ठिकयोः ( हृदयम् ) । अनामिकयोः ( शिरः ) । मध्यमयोः ( शिखायाम् ) । तर्जन्योः ( कवचम् ) । अङ्गुष्ठयोः ( अस्त्रं ) विन्यस्य परेण तेजसा संयोज्य हं इति कवचेनावगुण्ठ्य सर्वकर्मसु नियोजयेत् । आचमनं सर्वत्र । एवमेव देवस्य करन्यासं कृत्वा लिङ्गमुद्रां बध्वा ॐ ईशानः सर्वविद्यानामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम् ॥ १ ॥ इति मन्त्रेणेशान

---

१ अत्र " ध्रुवाय नमः " कवचे इति मयूखे पाठान्तरम् ।

मुष्टिं बद्ध्वा ततः अङ्गुष्ठाग्रेण रुद्रमुद्रया ( मूर्ध्नि ) ॥ १ ॥ ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि ॥ तन्नो रुद्रः प्रचोदयात् ॥ इति तर्ज
न्यङ्गुष्ठयोगात् तत्पुरुषं ( मुखे ) ॥ २ ॥ ॐ अघोरेभ्योऽथघोरेभ्यो घोरघोरतरेभ्यः ॥ सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥
इति मध्यमाङ्गुष्ठयोगेन ( हृदि ) अघोरम् ॥ ३ ॥ ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय
नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ इत्यङ्गुष्ठानामिकायोगेन ( गुह्ये ) ॥ ४ ॥
ॐ सद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः ॥ भवेभवेनातिभवेभवस्वमांभवोद्भवायनमः ॥ इति कनिष्ठिकाङ्गुष्ठयोगेन ( पादावारभ्य
मस्तकान्तम् ) । यावन्मूर्तिव्यापकत्वेन ब्रह्म न्यसेत् ॥ ततः । ईशानः सर्वविद्यानां नमः इति ( शशिनमुपरितनमूर्ध्नि ) ॥ १ ॥ ईश्वरः सर्वभूता
नामिति कल्पितं चन्द्रोभयदलं ( पूर्वमूर्ध्नि ) २ । ब्रह्माधिपतिर्ब्रह्मणोधिपतिरिति हृष्टां ( दक्षिणमूर्ध्नि ) ३ । शिवो मे अस्तु नम इति मरीच्याम्
( उत्तरमूर्ध्नि ) ४ । सदाशिवों नम इति ज्वालिनीं ( पश्चिममूर्ध्नि ) ५ । तत्पुषाय विद्महे नम इति ( पूर्ववक्त्रे ) शांतिम् १ । महादेवाय धीमहि
इति ( दक्षिणवक्त्रे ) विद्याम् २ । तन्नो रुद्र ( इत्युत्तरवक्त्रे ) प्रतिष्ठाम् ३ । प्रचोदयादिति ( पश्चिमवक्त्रे ) धृतिम् ४ । इति तत्पुरुषस्य कलाचतुष्टय
न्यासः॥ ततः अघोरेभ्यो नम इति ( उरसि ) १ । अथ घोरेभ्यो मोहायै नम इति ( ग्रीवायाम् ) २ । घोराय नमः ( क्षमायै ) इति ( स्कन्धयोः ) ३ ।
घोरतरेभ्यो निद्रायै नम इति ( नाभौ ) ४ । सर्वेभ्यः सर्वव्याध्यै नम इति ( कुक्षौ ) ५ । सर्वशर्वेभ्यो मृत्यवे नम इति ( पृष्ठे ) ६ । नमस्ते
अस्तु क्षुधायै नम इति ( वक्षसि ) ७ । रुद्ररूपेभ्यः तृषायै नम इति ( उरसि ) ८ । इत्यष्टाघोरकलान्यासः ॥ ॐ वामदेवाय नमः इति रजां
( गुदे ) १ । ज्येष्ठाय नम इति रक्षां ( लिङ्गे ) २ । श्रेष्ठाय नम इति रतिं ( दक्षिणोरौ ) ३ । रुद्राय नम इति कामां ( वामोरौ ) ४ । कालाय नमः
कल्यां ( दक्षिणजानौ ) ५ । कलविकरणाय नम इति संजीविनीम् ( वामजानौ ) । बलविकरणाय नमः क्रियाम् ( दक्षिणजंघायाम् ) । बलाय

नमो वृद्धिं ( वामजंघायाम् )। बलविकरणाय नमः छायां ( दक्षिणस्फिचि )। बलप्रमथनाय नमः धात्रीं ( वामास्फिचि )। सर्वभूतदमनाय नम इति भ्रामणीं ( कट्याम् )। मनसे नम इति शोषिणीं ( दक्षिणपार्श्वे )। उन्मनाय नम इति ज्वरां ( वामपार्श्वे )। इति त्रयोदशकलान्यासः ॥ सद्योजातं प्रपद्यामि नम इति सिद्धिं ( दक्षिणपादे )। सद्योजाताय वै नम इति ऋद्धिं ( वामपादे )। भवे नम इति जयां ( दक्षिणपाणौ )। अभवे नम इति लक्ष्मीं ( वामपाणौ )। नातिभवे इति मेधां ( नासायाम् )। भवस्व मां नम इति कान्तिं ( शिरसि )। भवाय नम इति स्वधां ( दक्षिणबाहौ )। उद्भवाय नम इति प्रभां ( वामबाहौ ) ॥ इति सद्योजातकलाष्टकन्यासः ॥ ततो देवं हंसं संपाद्य हंसंहंसेति हृदयादिन्यासं कुर्यात्। ॐ हंसंहंसेति ( हृदयाय नमः )। ॐहंसंहंसेति ( शिरसे स्वाहा )। ॐ हंसंहंसेति ( शिखायै वषट् )। ॐ हंसंहंसेति ( कवचाय हुम् ) ॐ हंसंहंसेति ( नेत्रत्रयाय वौषट् ) ॥ इति शिवन्यासः ॥ इति न्यासं कृत्वा शय्यायाः शिरःप्रदेशे निद्राकलशं स्थापयित्वा तस्मिन्निद्रामावाहयेत्। परमेष्ठिनं नमस्कृत्य निद्रामावाहयाम्यहम् ॥ मोहिनीं सर्वभूतानां मनोविभ्रमकारिणीम् ॥ विरूपाक्षे शिवे शान्ते आगच्छ त्वं तु मोहिनि ॥ १ ॥ वासुदेवहिते कृष्णे कृष्णाम्बरविभूषिते ॥ आगच्छ सहसाऽजस्रं सर्वसंसारमोहिनि ॥ २ ॥ सुषुप्स्व संहरे देवि कुमार्येकान्तमानसे ॥ श्रमनिःश्वासवाह्यंबे आ गच्छ भुवनेश्वरि ॥ ३ ॥ तमःसत्त्वरजोपेते आगच्छ वरवर्णिनि ॥ मनोबुद्धिरहङ्कारसंहारस्त्वं सरस्वति ॥ ४ ॥ शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ॥ आगच्छ गृह्ण संक्षिप्य मोहपाशनिबन्धिनि ॥ ५ ॥ भवस्योत्पत्तिहेतुस्त्वं यावदाभूतसंप्लवम् ॥ भुवः कल्पान्तसन्ध्यायां वस से त्वं चराचरे ॥ ६ ॥ भोगिशय्याप्रसुप्तस्य वासुदेवस्य शासने ॥ त्वं प्रतिष्ठासि वै देवि मुनियोनिसमुत्थिते ॥ ७ ॥ पितृदेवमनुष्याणां सय क्षोरगरक्षसाम् ॥ पशुपक्षिमृगाणां च योगमायाविवर्धिनी ॥ ८ ॥ वससे सर्वसत्त्वेषु मातेव हितकारिणी ॥ एहि सावित्रिमूर्तिस्त्वं चक्षुर्भ्यां स्थानगोचरे ॥ ९ ॥ विश नासापुटे देवि कण्ठे चोत्कण्ठिता विश ॥ प्रतिभावय मां सर्वं मातस्त्वं देवि सुन्दरि ॥ १० ॥ इदमर्घ्यं मया दत्तं पूजेयं

प्रतिगृह्यताम् ॥ उपप्रागातपरामिति तस्याः पूजाविधौ स्मृतः ॥ ११ ॥ ॐ उपप्रागातपरमं व्यत्सधस्थमर्वाँ अच्छापितरंमातरंच ॥ अद्यादेवाञ्जुष्टतमोहिगम्याअथाशास्तेदाशुषेवार्याणि ॥ १ ॥ इति मन्त्रेण निद्राकलशे निद्रां पूजयित्वा लोकपालक्षेत्रपालभूतेभ्यो बलिं दत्त्वा स्थाप्य देवं शय्यातः प्राच्यां सर्वतोभद्रे लिङ्गतोभद्रमण्डले वा पूजयेत् । विष्णुश्चेद्द्वादशारे चक्रमध्येऽष्टदले पद्मे मूलमन्त्रेण देवं निवेशयेत् । ॐ हूं हृदयाय नम इति कर्णिकायां हृदयं पूजयेत् । ॐ विष्णवे नम इति शिरः ( पूर्वपत्रे ) । ॐ ब्रह्मणे नम इति शिखां ( दक्षिणे पत्रे ) । ॐ ध्रुवाय नमः इति कवचं ( पश्चिमे पत्रे ) । चक्रिणे नम इति फट् अस्त्रं ( उत्तरे पत्रे ) । शंभवे नम इति गायत्रीम् ( आग्नेयदले ) । ॐ विजयाय नम इति सावित्रीम् ( ईशानदले ) । ॐ ज्योतीरूपाय नमो ( नैर्ऋते दले ) । ॐ चक्रिरूपाय नम इति पिङ्गलास्त्रम् ( वायव्ये दले ) ॥ ( शिवप्रतिष्ठायां तु मण्डलेऽष्टदले मेरुकर्णिकायाम् । ॐ त्र्यम्बकं यजामहे० इति मन्त्रेण वा पञ्चाक्षरेण देवं संस्थाप्य तत्र ॐ ह्रां हृदयाय नम इति ( देवस्य हृदये ) । ॐ शिवाय नमः इति ( पूर्वपत्रे ) । ॐ ह्रीं शिरसे स्वाहा ॐ ब्रह्मण्याय नमः ( दक्षिणे ) । ॐ हूं शिखायै वषट् । ॐ ध्रुवाय नम इति ( पश्चिमदले ) । ॐ ह्रैं कवचाय हुं शूलिने नमः इति ( उत्तरदले ) । इति प्रथमगर्भावरणम् ॥ ततः अष्टपत्रेषु प्रागादितः अनन्ताय नमः ( पूर्वे ) ।

---

१ स्थाप्येति—अत्राव्ययपूर्वपदत्वाभावेन ल्यबभावाच्चिन्त्योऽयं शब्दः । " सन्ध्यावधूं गृह्य करेण भानुः " इत्यादिस्थलेषु अव्ययपूर्वपदाभावेऽपि " गृह्येत्यादि " ल्यबन्तप्रयोगदर्शनान्निन्नयुक्त्या वा कथंचित् समाधेयः । युक्तिश्चैवम्—अत्र सं-परि-प्रेत्याद्यन्यतमोपसर्गसंज्ञकस्य पूर्वपदस्य " विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वक्तव्यः " इति वार्तिकेन लोपे, आङ आकारं प्रश्लिष्य, पूर्वपदान्तास्थिताकारेण सह दीर्घैकादेशे वा विहिते, स्थाप्येति पदं शुद्धमिति । अनयैवोपपत्त्या पूर्वत्रापि समागतानि "वेष्ट्य" इत्यादिपदानि समाधेयानि । रोचेत चेदियं मे कल्पना कोविदेभ्यः ॥

सूक्ष्माय नमः ( आग्नेय्याम् ) । शिवोत्तमाय ( दक्षिणे ) । एकनेत्राय ( नैर्ऋत्ये ) । एकरुद्राय ( पश्चिमे ) । त्रिमूर्त्तये नमः ( वायव्ये ) । श्रीकण्ठाय नमः ( उत्तरे )। शिखण्डिने नमः ( ऐशान्याम् ) ॥ ततः ( प्रागादितः पत्रेषु ) टङ्कायै नमः १ कृपाणाय० २ वज्राय० ३ दहनाय० ४ भोगेन्द्राय० ५ घण्टायै० ६ अङ्कुशाय० ७ पाशाय नमः ८ ॥ इति शिवप्रतिष्ठायां गर्भावरणम् )॥ विष्णुश्चेत् अरासु पूर्वादिक्रमेण । केशवः । नारायणः । माधवः । गोविन्दः । विष्णुः । मधुसूदनः । त्रिविक्रमः। वामनः। श्रीधरः। हृषीकेशः। पद्मनाभः ।दामोदरः। इति विष्णोर्द्वादश मूर्तीः पूजयेत् । इति द्वितीयावरणम् ॥ ( पुनः प्रागादितः खड्गाय नमः १ । गदायै नमः २ । चक्राय नमः ३ । शङ्खाय नमः ४ । पद्माय नमः ५ । हलाय नमः ६ ।मुसलाय नमः ७ । शार्ङ्गाय नमः ८ इति तृतीयावरणम् ॥ ( शिवप्रतिष्ठायां तु पृथिवीमूर्तये नमः पृथिवीमूर्त्यधिपतये शर्वाय नमः १ । अग्निमूर्तये नमः अग्निमूर्त्यधिपतये रुद्राय नमः २ । जलमूर्तये० जलमूर्त्यधिपतये भवाय नमः ३ । वायुमूर्तये नमः वायुमूर्त्यधिपतये उग्राय नमः ४ । पशुपतये नमः पशुपत्यधिपतये यजमानमूर्त्तये नमः ५ । इन्दुमूर्त्तये नमः इन्दुमूर्त्यधिपतये महादेवाय नमः ६ । स्वमूर्तये नमः स्वमूर्त्यधिपतये भीमाय नमः ७। ईशानाय नमः ईशानमूर्त्यधिपतये सूर्यमूर्त्तये नमः ॥ ८ ॥ इत्यष्टौ मूर्तीः तदधिपांश्चार्चयेत् ॥ वैष्णवं चेत्तदा ( पूर्वे ) ॐ पृथ्वीमूर्तये नमः ॐ पृथ्वीमूर्त्यधिपतये वासुदेवाय नमः । ( दक्षिणे ) ॐ जलमूर्त्तये नमः ॐ जलमूर्त्यधिपतये संकर्षणाय नमः । ( पश्चिमे ) ॐ अग्निमूर्तये नमः ॐ अग्निमूर्त्यधिपतये प्रद्युम्नाय नमः । ( उत्तरे )। ॐ वायुमूर्त्तये नमः ॐ वायुमूर्त्यधिपतये अनिरुद्धाय नमः। ( मध्ये ) ॐ स्वमूर्तये नमः ॐ स्वमूर्त्यधिपतये नारायणाय नमः॥ इति चतुर्थावरणम् ॥ शैवमूर्तिपञ्चपक्षे ॥ ब्रह्म-विष्णु—रुद्रे-श्वर-सदाशिवाः एवं मूर्तिपा ज्ञेयाः। ( बाह्ये ) इंद्रादयः सर्वत्र पूजनीयाः। इति पंचमावरणम् ॥ ततो दिव्यवाससा देवमाच्छाद्य पुरुषसूक्तेन स्तुत्वा पुष्पाञ्जलिं दत्त्वा गंधपुष्पादिभिर्मण्डपं वेदिं चावकीर्य देवस्याग्रे चतुरस्रमण्डले स्वस्तिकं लिखित्वा तत्र ब्रह्म-विष्णु-रुद्रान्, प्रतिदिशं लोक

पालान्, वसून् रुद्रान् द्वादशादित्यान् विश्वेदेवान् साध्यान् मरुद्गणगन्धर्वाप्सरसश्च पितृगणपुण्यतीर्थानि स्कन्ददुर्गाक्षेत्रपालादींश्च यथावकाशं संपूज्य देवपार्षदेभ्यो नम इत्युच्चार्य साष्टाङ्गं प्रणमेत्। अत्र रात्रौ जागरणं गीतवादित्रप्रेक्षणादिना कुर्यात्। ततः आचार्यः स्वकुण्डसमीपमागत्य क्रमेण पलाशोदुम्बराश्वत्थापामार्गसमिधां प्रत्येकं द्वादशसहस्रं षट्त्र्यष्टसहस्रमष्टशतं वा हिरण्यगर्भ इति कुण्डसमीपे संस्थाप्य शांतिकपौष्टिकै र्मंत्रैर्यथाविभागं जुहुयात्। पञ्चकुण्डीपक्षे तु ऋत्विजः प्रतिकुण्डं जुहुयुः ॥ अथ शांतिकमन्त्राः । ॐ शन्नोवातः॑पवताᳬंशन्नस्तपतु सूर्य्यः॑ ॥ शन्नःकनिक्रदद्देवः॑पर्ज्जन्योऽअभिवर्षतु ॥ १ ॥ ॐ शन्नऽइन्द्राग्नीभवतामवोभिःशन्नऽइन्द्रावरुणा रातहव्या । शन्नऽइन्द्रापूषणावाजसातौशमिन्द्रा सोमासुविताय‍शंयोः ॥ २ ॥ ॐ शन्नोदेवीरभिष्टयऽआपो भवन्तु पीतये ॥ शंय्योरभिस्रवन्तु नः ॥ ३ ॥ ॐ द्यौःशान्तिरन्तरिक्षᳪं शान्तिरेधि ॥ ४ ॥ इति शांतिकमन्त्राः । अथ पौष्टिकमन्त्राः । ॐ पुष्टिर्नरण्वाक्षितिर्नपृथ्वीगिरिर्नभुज्मक्षोदोनशम्भु । अत्योनाज्मन्त्सर्ग प्रतक्तःसिन्धुर्नक्षोदः कंइवराते ॥ १ ॥ ॐ शिवोनामासिस्वधितिस्तेपितानमस्तेऽअस्तुमामाहिᳪसीः ॥ निवर्त्तयाम्यायुषेऽन्नाद्यायप्रजननायरायस्पोषायसुप्रजास्त्वाय सुवीर्य्याय ॥२॥ ॐ गयस्फानोअमीवहावसुवित्पुष्टिवर्धनः ॥ सुमित्रः सोम नो भव ॥ ३ ॥ ॐ इह पुष्टिं पुष्टिपतिर्दधात्विह प्रजाᳬंरमयतुप्रजापतिः॥ अग्नये ग्रहपतये रयिमते पुष्टिपतये स्वाहा ॥ ४ ॥ ॐ त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मा मृतात् ॥ त्र्यम्बकं यजामहे सुगन्धिम्पतिवेदनम् ॥ उर्व्वारुकमिव बन्धनादितो मुक्षीय मामुतः॑ ॥ ५ ॥ इति पौष्टिकमन्त्राः । अथ पूर्वकुण्डे ॥ अग्निमीळ इति पलाशसमिधामष्टसहस्रमष्टशतं वा तिलैर्यवैर्जुहुयात्॥ ॐ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ॥ होतारंरत्नधातमम् ॥१॥ इषेत्वेतिमन्त्रेण दक्षिण कुण्डे जुहुयात् ॥ ॐ इषेत्त्वोर्ज्जेत्त्वावायवस्थदेवोवः॑सविताप्रर्प्पयतुश्रेष्ठतमायकर्म्मणऽआप्यायद्ध्वमघ्न्याऽइन्द्रायभागम्प्रजावतीरनमीवाऽअयक्ष्मा मावस्तेनऽईशतमाघशᳬंसोध्रुवाऽअस्मिन्गोपतौस्यातबह्वीर्य्यजमानस्यपशून्पाहि ॥ २ ॥ पाश्चिमकुण्डे । ॐ अग्नऽआयाहिवीतये गृणानोहव्यदातये ।

निहोतासत्सि बर्हिषि ॥ ३ ॥ शन्नो देवीत्युत्तरकुण्डे ॥ ॐ शन्नोदेवीरभिष्टयऽआपो भवन्तु पीतये ॥ शंय्योरभिस्रवन्तु नः ॥ ४ ॥ एवं तु पञ्चकुण्डी पक्षे ज्ञेयम् । यदा अष्टौ कुण्डानि तदा । वौषट् इति मन्त्रेण षट्, आग्नेयकुण्डे ॥ १ ॥ दशप्रणवयुक्तया गायत्र्या नैर्ऋते ॥ २ ॥ जातवेदस इति वायव्ये ॥ ३ ॥ नमो ब्रह्मणे इति ऐशानकुण्डे ॥ ४ ॥ ततः शतान्ते ॐ मूर्द्धानं दिव इति पूर्णाहुतिं जुहुयुः । आहुतिसम्पाताच्छान्तिकलशे कुण्डसमीपे पातयेयुः । ततोऽष्टसु पूर्वादिकुण्डेषु मूर्तिपलोकपालेभ्यः समिद्भिः घृतेन तिलैर्वाऽष्टसहस्रमष्टशतं वा जुहुयात् । तेषां मन्त्रा वक्ष्यमाणाः । स्योनापृथिवीति पृथिवीमूर्त्तेः ऋ० अ० ८ । अ० २ । व० ६ ॥ १ ॥ ॐ अघोरेभ्यो इति मूर्तिपतेः शर्वस्य ॥ २ ॥ इन्द्रायेंदुमिति इन्द्रस्य ॐ इन्द्रायेन्दुꣳसरस्वतीनराशꣳस सेनननग्नहुम् ॥ अधातामश्विनामधुभेषजंभिषजासुते ऋ० ७ । १ । ४० ॥ ३ ॥ ॐ अग्निं दूतमिति अग्नेः ऋ० १ । १ । २२ ॥ ४ ॥ पशूनित्यग्निमूर्तिपतेः पशुपतेः, ऋ० १ । ६ । २६ ॥ ५ ॥ अग्न आयाहीत्यग्नेः, ॥ ऋ० ४ । ५ । २२ ॥ ६ ॥ असिहिवी रेति यजमानमूर्तेः ॐ असिहिवीरुसे न्योसिभूरिपराददिः ॥ असिदभ्रस्यचिद्वृधोयजमानायशिक्षसिसुन्वतेभूरितेवसु ॥ ऋ० १ । ६ । १ ॥ ७ ॥ तमिन्द्रमिति यजमानमूर्तिपतेः रुद्रस्य ॥ ऋ० ६ । ६ । ३८ ॥ ८ ॥ यमाय सोमामिति यमस्य ॥ ॐ यमाय सोमं सुनुत यमाय जुहुता हविः ॥ यमं ह यज्ञो गच्छत्यग्निर्दूतो अरंकृतः ॥ ऋ० ७ । ६ । १६ ॥ ९ ॥ उदुत्यमिति सूर्यमूर्ते ॥ ऋ० १ । ४ । ७ ॥ १० ॥ आ वो राजानमिति सूर्यमूर्तिपतेः रुद्रस्य ऋ० ३ । ४ । २० ॥ ११ ॥ असुन्वन्तमिति निर्ऋतेः ऋ० २ । ४ । १९ ॥ १२ ॥ आपो हिष्ठेति जलमूर्तेः ॥ १३ ॥ विभूषमिति जलमूर्तिपतेर्भवस्य ॥ ॐ विभूषन्नग्नउभयाँ अनुव्रतादूतोदेवानांरजसीसमीयसे यत्तेधीतिंसुमतिमावृणीमहेधस्मानंस्त्रिवरूथःशिवोभव ॥ ऋ० । ४ । ५ । १८ ॥ १४ ॥ इमं मे वरुण इति वरुणस्य ॥ १५ ॥ वात आवात्विति वायुमूर्तेः ऋ० ८ । ८ । ४४ ॥ १६ ॥ तमीशानमिति वायुमूर्तिपतेरीशानस्य ॥ १७ ॥ आ नो नियुद्भिरिति वायोः ॥ १८ ॥ वयꣳ सोमेति सोमसूर्ययोः ॥ १९ ॥ इन्द्रं तं शुम्भेति सोममूर्तिपतेर्महादेवस्य ऋ० ६ ।

५ । ८ ॥ २० ॥ आदित्प्रत्नस्येति स्वमूर्तेः ऋ० ५ । ८ । १४ ॥ २१ ॥ मृगो न भीम० इति स्वमूर्तिपतेः भीमस्य ॥ २२ ॥ अभित्यं देवं सविता रमितीशानस्य ॥ २३ ॥ ( एते सर्वे मन्त्रा ऋग्वेदे द्रष्टव्याः ) एककुण्डीपक्षे तु आचार्यः स्वकुण्डे जुहुयात् । ततोऽष्टसहस्राष्टशतान्यतमसंख्यया महाव्याहृतिभिस्तिलयवव्रीहिचर्वाज्यैः क्रमेण प्रत्येकं जुहुयुः । ततो गुरुः स्थाप्यलिङ्गकेन मन्त्रेण घृतेन तिलैर्वाऽष्टसहस्रमष्टशतं वा हुत्वा पूर्णाहुतिं हुत्वा देवस्य दक्षिणे कर्णे होमं निवेद्य । पूर्वकुण्डे घृताहुत्यष्टकं मूलमन्त्रेण हुत्वा देवपादौ स्पृशेत् । मूलमन्त्रेण पूर्वोक्तसंख्यया याम्य कुण्डे दधि हुत्वा देवनाभिं स्पृशेत् । वारुणकुण्डे क्षीरं हुत्वा हृदि स्पृशेत् । सौम्यकुण्डे मध्वाहुतीर्हुत्वा मूर्द्धानं स्पृशेत । आचार्यः कुण्डे मिश्रं घृतादिचतुष्टयं हुत्वा तेनैव पूर्णाहुतिं हुत्वा सर्वाङ्गं स्पृशेत । एवं प्रतिमायां न्यासादि कृत्वा कूर्मशिलां ब्रह्मशिलां पिण्डिकां वाहनानि परि चारकदेवांश्च वैदिकैर्नाममन्त्रैर्वा संपूज्य मुख्यप्रतिमाया वामेऽधिवासयेत् । तानि मधुघृतेनाभ्यज्य प्रक्षाल्य संपूज्य वस्त्रेणाच्छाद्य प्रधानप्रति मापिण्डिकायाः स्वमन्त्रन्यासं कुर्यात् । तत्र विष्णुश्चेत्स्थाप्यस्तदा ॐ घं ङं पं भं फं लक्ष्म्यै नमः एतानि पञ्चाक्षराणि हृच्छिरःशिखाकवचने त्रसंज्ञकानि ॐ हुं फडिति वचनसमुदाय इति पिण्डिकायां पञ्चाङ्गानि न्यस्य तत्र तत्र मूर्तिपांश्च पूर्ववत् विन्यसेत् तदा ॐ ह्रीं श्रीं ह्रां क्षः परब्रह्मणे सर्वाधाराय नमः । ॐ ह्रां श्रीं ह्रीं दिव्यतेजोधारिण्यै सुभगायै नमः । इति मन्त्राभ्यामधिवासयेत । इत्यधिवासनम् ॥ अथ प्रासा दोऽपि चेन्नूतनस्तस्याप्यधिवासनम् । तत्र प्रासादाग्रे एकाशीतिपदमण्डलमक्षतैः कृत्वा तेषु पदेषु सप्तधान्यपुञ्जान् कृत्वा जलपूर्णानेका शीतिकुम्भानाहृत्य तत्र नवनवकाङ्कानां मध्ये मध्यमं कोष्ठं ज्ञात्वा तेषु धान्यपुञ्जेषु कुम्भान् मध्यपूर्वादिक्रमेण न्यस्य मध्यकुम्भे शम्युदुम्बरा ऽश्वत्थ-चम्पका-ऽशोक-पलाश-प्लक्ष-न्यग्रोध-कदम्बा-म्र-बिल्वा-ऽर्जुनवृक्ष-सम्भवं पल्लवद्वादशकम् ॐ सोमाय वनस्पत्यन्तर्गताय नम इति निक्षिपेत् ॥ ततः पूर्वकलशादिषु पद्मक-रोचना-दूर्वाङ्कुर-दर्भपिञ्जूल-श्वेत-पीत-सर्षप-सित-रक्त-चन्दन-जाती-कुसुम-नन्द्यावर्त्त

मिति दशकम् ( पूर्वे ) १ यव-व्रीहि-तिल-सुवर्ण-रजत-समुद्रगामिनी-कूलमृत्तिका- ( गङ्गामृत्तिका ) भूम्यसंस्पृष्टगोमयामिति सप्तकम् ( आग्नेये ) २ सहदेवी-विष्णुक्रान्ता-भृंगराज-महौषधी-शमी-शतावरी-गुडूची-श्यामाकमित्यष्टकम् ( याम्ये ) ३ कदली-पूगीफल-नारिकेल-बिल्व-नारंग-मातुलुंग-बदरा-ऽऽमलकमिति फलाष्टकं ( नैर्ऋत्ये ) ४ मन्त्रसाधितं पञ्चगव्यम् ( वारुणे ) ५ शम्युदुम्बरा-श्वत्थ-न्यग्रोध-पलाश-कषायपञ्चकम् ( वायव्ये ) ६ शङ्खपुष्पी-सहदेवी-बला-शतावरी-कुमारी-गुडूची-वचा-व्याघ्रीति मूलाष्टकम् ( सौम्ये ) ७ वल्मीकादिसप्तमृत्तिकाः ( ईशानकुम्भे ) ८ एवं निधाय ॥ ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् । चन्द्रां हिरण्मयीं लक्ष्मीञ्जातवेदो म आवह । इति मध्यकुम्भानाभिमन्त्र्य ॥ शेषान् गन्धोदकेन पूरयित्वा मूलमन्त्रेणाभिमन्त्र्य रक्तत्रिसूत्रेणाऽऽवेष्ट्यान्तर्बहिरधस्तादूर्ध्वं च सर्वत्र प्रासादं पञ्चगव्येन संप्रोक्ष्य मूर्धानं दिव० इति वल्मीकमृदा विलिम्पयेत् । मूर्द्धानन्दिवोऽअरतिम्पृथिव्यावैश्वानरमृतऽआजातमग्निम् । कविꣳसम्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्त देवाः ॥ १ ॥ ततः समुद्रादूर्मिरिति मन्त्रेण समुद्र ज्येष्ठा इत्यनेन वा ईशानदिक्स्थेन मृत्तिकाकुम्भेन प्रासादं स्नापयेत् ॥ ॐ समुद्रादूर्म्मिर्मधुमाँ २ऽउदारदुपाꣳशुनासममृतत्वमानट् ॥ घृतस्यनाम गुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ १ ॥ यज्ञायज्ञेति वायव्येन कषायकुम्भेन ॐ यज्ञायज्ञावोऽअग्नयेगिरागिराचदक्षसे ॥ प्रप्रवयममृतञ्जातवेदसम्प्रियम्मित्रन्नशꣳसिषम् ॥ १ ॥ पयः पृथिव्यामिति वारुणेन पञ्चगव्यकुम्भेन ॐ पयः पृथिव्याम्पयऽओषधीषु पयो दिव्यन्तरिक्षे पयो धाः ॥ पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ १ ॥ याः फलिनीरिति नैर्ऋतेन फलकुम्भेन । ॐ याः फलिनीर्याऽअफलाऽअपुष्पायाश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥ १ ॥ हꣳसः शुचिषदिति सौम्यस्थमूलाष्टककुम्भेन ॐ हꣳसःशुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत् ॥१॥ विष्णोरराटमसीति पूर्वेण कुम्भेन । ॐ विष्णोरराटमसिविष्णोः श्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसिवैष्णवमसिविष्णवेत्वा ॥१॥ सोमꣳराजा

नमित्याग्नेयकुम्भेन । ॐ सोमॠराजानुमर्वसेग्निमन्वारभामहे ॥ आदित्यान्विष्णुॠसूर्य्यंब्रह्माणञ्चबृहस्पतिॅंस्वाहा ॥ १ ॥ विश्वतश्चक्षुरिति याम्यदि
कस्थेन कुम्भेन ॐ· विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पात् ॥ सम्बाहुभ्यान्धमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवऽएकः ॥ १ ॥
नमोऽस्तु सर्प्पेभ्य इति मध्यकुम्भेन । ॐ नमोऽस्तु सर्प्पेभ्यो ये के च पृथिवीमनु ॥ येऽअन्तरिक्षे ये दिवि तेभ्यः सर्प्पेभ्यो नमः ॥ १ ॥
इदमापः प्रवहतेत्यष्टाभिः पूर्वादिक्रमेण प्रासादं सशिखरं स्नापयेत् ॐ इदमापःप्रवहतावद्यञ्च वलं च यत् ॥ यच्चाभिदुद्रोहानृतं यच्च शेपेऽअ
भीरुणम् ॥ आपो मा तस्मादेनसःपवमानश्च मुञ्चतु ॥ १ ॥ एकाशीतिकुम्भाऽसम्भवे तु गन्धोदकपूरितैर्नवकलशैरेकेन कलशेन वा ॐ दैव्या
य कर्म्मणे शुन्धध्वन्देवयज्यायै यद्वोऽशुद्धाः पराजघ्नुरिदम्वस्तच्छुन्धामि ॥ १ ॥ इति मन्त्रेण सम्प्रोक्ष्य प्रासादं सूत्रेणावेष्ट्य स्नापयित्वा
देवरूपं प्रासादं चिन्तयित्वा पताकादिना शोभयित्वा गन्धादिना पूजयित्वा तस्याप्यधस्तादेवं संचिन्त्य वक्ष्यमाणमन्त्रेण प्रासादमधिवास
येत् । तत्र मन्त्रः । ॐ ह्रीं सर्वदेवमयाचिन्त्य सर्वरत्नोज्ज्वलाकृते ॥ यावच्चन्द्रश्च सूर्यश्च तावदत्र स्थिरो भव ॥ १ ॥ इत्यधिवास्य । ॐ रक्षोहणंवलग
हनंवैष्णवीमिदमहन्तमित्यादिपूर्वोक्तरक्षोघ्नसूक्तेन । ॐ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ॥ ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया
॥ १ ॥ भूतानि राक्षसा वाऽपि यत्र तिष्ठन्ति केचन ॥ ते सर्वेऽप्यपसर्प्पन्तु विष्णोर्यागं करोम्यहम् ॥२॥ इति मन्त्राभ्यां भूतसङ्घं श्वेतसर्षपैर्निःसार्य्य । ॐ
वास्तुपुरुषाय नमः इति वास्तुं संपूज्य । पूर्वस्थापितपञ्चकषाय-पञ्चामृत-पञ्चपल्लव-पञ्चगव्य-पञ्चरत्न-सर्वौषधी-कलशजलेन कुशैश्च सर्वतः प्रासादं
प्रोक्ष्य प्रासादं स्पृष्ट्वा प्रासादन्यासं कुर्यात् । तद्यथा । ॐ ह्रां पृथिवीतत्त्वाय नमः । ॐ ह्रां पृथिवीतत्त्वाधिपतये श्रीकूर्माय नमः ( ॐ ह्रां नमः सर्वत्र )
अप्तत्त्वाय नमः अप्तत्त्वाधिपतये जलेशाय नमः । ॐ तेजस्तत्त्वाय० तेजस्तत्त्वाधिपतये त्विषां निधिपतये नमः । ॐ वायुतत्त्वाय० वायुतत्त्वा
धिपतये मातरिश्वने नमः । ॐ आकाशतत्त्वाय० आकाशतत्त्वाधिपतये सूक्ष्माय नमः । इति प्रासादपादेषु ॥ ॐ रूपतन्मात्राधिपतये भानुमते

नमः । ॐ रसतन्मात्राय० रसतन्मात्राधिपतये जलदाय नमः । ॐ गन्धतन्मात्राय० गन्धतन्मात्राधिपतये गन्धाक्षाय नमः । ॐ स्पर्शतन्मात्राय० स्पर्शतन्मात्राधिपतये बलतत्त्वाय नमः । ॐ शब्दतन्मात्राय० शब्दतन्मात्राधिपतये सूक्ष्मनादाय नमः । इति प्रासादजङ्घयोः ॥ अथ कटिप्रदेशे । ॐ वाकूतत्त्वाय० वाकूतत्त्वाधिपतये दुन्दुभये० । ॐ पाणितत्त्वाय० पाणितत्त्वाधिपतये समादानाय० । ॐ पादतत्त्वाय० पादतत्त्वाधिपतये संक्रमाय० । ॐ पायुतत्त्वाय० पायुतत्त्वाधिपतये विसर्गाय नमः । ॐ उपस्थतत्त्वाय० उपस्थतत्त्वाधिपतये आनन्दाय नमः ॥ अथ प्रासादनाभौ । ॐ ह्रां श्रोत्रतत्त्वाय० श्रोत्रतत्त्वाधिपतये व्योमाय नमः । ॐ ह्रां त्वकूतत्त्वाय० त्वकूतत्त्वाधिपतये सर्वाङ्गाय नमः । ॐ चक्षुस्तत्त्वाय० चक्षुस्तत्त्वाधिपतये आकाशाय नमः । ॐ रसनातत्त्वाय० रसनातत्त्वाधिपतये महावक्राय नमः । ॐ घ्राणतत्त्वाय० घ्राणतत्त्वाधिपतये विलुण्ठाय नमः ॥ अथ प्रासादकण्ठे ॥ ॐ मनस्तत्त्वाय० मनस्तत्त्वाधिपतये संकल्पाय नमः । ॐ बुद्धितत्त्वाय० बुद्धितत्त्वाधिपतये बुद्धये नमः । ॐ अहङ्कारतत्त्वाय० अहङ्कारतत्त्वाधिपतये अहङ्कृतये नमः । ॐ चित्ततत्त्वाय० चित्ततत्त्वाधिपतये मनसे० ॥ अथ द्वारमध्ये । ॐ प्रकृतितत्त्वाय० प्रकृतितत्त्वाधिपतये पितामहाय नमः । "प्रासादमध्ये" । ( हृदये ) पुरुषतत्त्वाय० पुरुषतत्त्वाधिपतये विष्णवे नमः । ( वक्त्रे ) ॐ कलातत्त्वाय० कलातत्त्वाधिपतये क्रतुध्वजाय० । ॐ विद्यातत्त्वाय विद्यातत्त्वाधिपतये· गुरवे नमः । ( कलशे ) ॐ सदाशिवतत्त्वाय० सदाशिवतत्त्वाधिपतये अजेशाय नमः । ( कलशोपरि ) ॐ चक्रायुधचिह्नेभ्यो नमः । ॐ ह्रां सं सत्त्वाय० रं रजसे० तं तमसे० मं वह्निमण्डलाय० ॐ सोममण्डलाय० ॐ अर्कमण्डलाय नमः इति संपूज्य· प्रणवेन व्याहृतिभिरुपचारानथाचरेत् । इति प्रासादन्यासं कृत्वा ऋत्विग्भिः सह कुण्डे तत्त्वहोमं कुर्यात् । तत्त्वहोमस्तु घृताक्ततिलैरेव ॐ ह्रां पृथिवीतत्त्वाय स्वाहा पृथिवीतत्त्वाधिपतये श्रीकूर्माय स्वाहा । इत्यादिपूर्वोक्तप्रासादन्यासमंत्रैस्तत्त्वहोमं कुर्यात् । होमान्ते अनेन कृतेन तत्त्वहोमेन लक्ष्मीकान्तः प्रीणातु इति देवाय निवेदयेत् । ततो बहिर्दिगीशेभ्योऽघोरमन्त्रेण माषान्नबलिं दत्त्वा

क्षेत्रपालाय भूतेभ्यश्च दत्त्वा आचम्य मण्डपं प्रविशेत् ॥ अथ देवालयशिखरकलशप्रतिष्ठा उच्यते । आचार्यो मण्डपोत्तरभागे स्वस्तिकमण्डलं लिखित्वा यजमान-शिल्पि-ऋत्विक्सहितो यत्र कुत्र्यां शिल्पिभिः कलशसंघट्टनं कृतं तत्र गत्वा पञ्चभिः कलशैः शिखरकलशं संस्नाप्य तत्रैव ॐ मनोजूतिर्जुषतामिति प्रतिष्ठाप्य लोकपालेभ्यो बलिं दत्त्वा आचम्य कलशं तैलेनाभ्युक्ष्य चंदनादिभिरभ्यर्च्य त्रिसूत्र्याऽऽवेष्ट्य रथमारोप्य वामहस्ते गृहीत्वा शान्तिमङ्गलतूर्य्यघोषेण स्नानमण्डपमानयेत् । आनीय स्वस्तिकोपरि भद्रासनं तस्योपरि स्थापयेत् । तस्य पुरतः पुण्याहवाचनं कृत्वा ॐ घृतं घृतपावान० इति मन्त्रेण घृतेनाभ्यज्य ॐ द्रुपदादिवेन्मुमुचान० इति यव-मसूर-हरिद्रा-पिष्टेनोद्वर्त्य । उष्णोदकेन प्रक्षाल्य ॐ मूर्द्धानं दिव० इति वल्मीकमृत्तिकयोपलिप्य ॐ यादिव्याऽऽआप० इति गन्धोदकेन स्नापयेत् । वेदिकोणस्थैः कलशैश्च तुर्भिः ॐ मानस्तोके० इति प्रथमेन । ॐ विष्णोरराटमसीति द्वितीयेन । ॐ सोमꣳराजानमवसेऽग्निमन्वारभामहे ॥ आदित्यान्विष्णुꣳसूर्य ब्रह्माणंचबृहस्पतिꣳ स्वाहा । इति तृतीयेन । ॐ विश्वतश्चक्षुरिति चतुर्थेन । ॐ पयःपृथिव्यामिति शुद्धोदकेन स्नापयित्वा द्वादशाक्षरेण मूलेन वाऽर्चयित्वा गन्धाद्यैः संपूज्य वस्त्रैराच्छाद्य शान्तिपाठं पठित्वा ॐ स्वस्तिनऽइन्द्रेति उत्थाय मण्डपदेवालयप्रादक्षिण्येन मण्डपमानीय पश्चिमद्वारेण प्रविश्य देवसमीपे भद्रासने निवेश्य गन्धादिना संपूज्य भक्ष्यभोज्यादिना परिपूर्य्य ॐ विश्वतश्चक्षुरिति पठित्वा संकलीकृत्य आचार्यः घृत-दधि-क्षीर-मधुभिः पृथक् पृथक् ॐ त्र्यम्बकं यजामह इति मन्त्रेणाष्टोत्तरशतं हुत्वा शान्तिकलशे संस्रवं निक्षिप्य तेनोदकेन पाद नाभि-गुदा-क्षि-शिरांसि कलशस्य क्रमेण स्पृशेत् । कलशे पुरुषसूक्तं विन्यस्य कलशं गन्धादिना संपूज्य बलिं दत्त्वा प्रासादमारुह्य शान्तिमङ्ग ल-तूर्य-जय-स्वनैः कलशं प्रासादमस्तकमानीय क्षणं विश्राम्य सुमुहूर्ते प्रासादे द्वादशाक्षरेण ॐ आजिघ्रकलशंमह्यात्वाविशन्त्विन्दवः ॥ पुन रूर्जानिवर्तस्वसानःसहस्रंधुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयिः । इति मन्त्रेण प्रतिष्ठाप्य तदुपरि वस्त्रेणाऽऽवेष्ट्य अस्त्रेण हुं फट् इति मन्त्रेण

तस्योपरि न्यसेत् । तस्मिन् कलशे चक्रं हिरण्मयं वा ताम्रमयं स्थापनीयम् । सूर्य-लक्ष्मी-विरञ्चीनां पद्मम् । शङ्करस्य त्रिशूलम् । भूतादिनिवारणार्थ मायुधानि विन्यसेत् । शिल्पितं कलशं स्थिरीकृत्य शुभवारिणा संस्नाप्य गन्धपुष्पैः पूजयित्वा प्रासादादुत्तीर्य भूमौ साष्टांगं प्रासादं प्रणम्य पुनरा रुह्य गन्धादिना प्रपूज्य शुक्लवस्त्राणि कलशे निबध्य ईशानभागे भूमिं स्पृशेत । तत आचार्यादिभ्यो ब्राह्मणेभ्यश्च शिल्पिभ्यो वस्त्राल ङ्कारादिकं हिरण्यं वा रजतं देयम् । ततो द्वादशब्राह्मणभोजनम् ॥ इति प्रासादोपरि कलशस्थापनम् ॥ अथ कलशसमीपे मानस्तंभो ध्वजस्तम्भश्च तत्प्रतिष्ठा उच्यते । वृक्षसारमयोऽश्मसारमयो लोहमयो वा मानस्तम्भो ध्वजदण्डघटनाचितो वर्तुलो वा प्रासादप्रमाणस्तदधिको वा यथोचितविस्तारो वा भवति । अथ च अष्टौ ८ चत्वारो ४ वा ते मानस्तम्भा भवन्ति । एकश्चेदीशान्यां विधिना तं गन्ध-पुष्प-धूप-दीपादिभिः संपूज्य क्षुद्रघण्टाभिः शोभितं कृत्वा प्रतिष्ठां च कृत्वा पताकां स्तम्भोपरि निवेश्य यजमानमभिषेचयेत् । ततो यजमानः ब्राह्मणेभ्यो दक्षिणां दत्त्वा भोजयेच्च ॥ मानस्तभो भवेद्देवो ध्वजो देवः सदोच्यते ॥ तयोः प्रतिष्ठा कथिताऽश्वमेधफलदायिनी ॥ १ ॥ इति मानस्तम्भरोपणम् । कलशप्रतिष्ठानन्तरं तद्दिने महात्मना ध्वजारोपः कार्य्यः तस्य विधिः संक्षेपत उक्त एव ॥ अथ महिमा उच्यते ॥ असुरा यातुधानाश्च पिशाचोरगराक्षसाः ॥ ध्वजहीने तु प्रासादे वस्तुमिच्छन्ति नित्यदा ॥ १ ॥ तस्माद्ध्वजविहीनं तु न कुर्यात् सुरमन्दिरम् ॥ १ ॥ यावन्तस्तन्तवस्तस्य ध्वजस्य वरवर्णिनि ॥ तावद्वर्षसहस्राणि कर्त्ता स्वर्गे महीयते ॥ २ ॥ यथा विधूते वातेन ध्वजः प्रासादमस्तके ॥ तथा कर्त्ता त्यजेत्पापं सतजन्मार्जितं क्षणात् ॥ ३ ॥ यत्रैतत्क्रियते राष्ट्रे ध्वजयष्टिनिवेशनम् ॥ नाकालमृत्युस्तत्रास्ति नालक्ष्मीः पापकृत्स्वपि ॥ ४ ॥ नोपसर्गभयं तत्र नापि रोगा न विभ्रमः ॥ विपरीतानि नो तत्र नराणामपि भूय साम् ॥ ५ ॥ स्वकालवर्षी पर्जन्यः सुभिक्षं विजयी नृपः ॥ शान्तानि सर्वभूतानि पयस्विन्यः पयोभृतः ॥ ६ ॥ कृतघ्नो ब्रह्महा गोघ्नो दृष्ट्वा

ध्वजनिवासिनम् ॥ प्राप्नोति पापनिर्मोक्षं किमु कर्तुः कुलद्वयम् ॥ ७ ॥ प्रतिमा लिंगवेदीनां यावन्तः परमाणवः ॥ तावद्वर्षसहस्राणि कर्ता स्वर्गे महीयते ॥ ८ ॥ इति ध्वजारोपणमहिमा ॥ ततो गुरुर्बहिर्निर्गत्य प्रासादाभिमुखो भूत्वा देवरूपं प्रासादं ध्यायेत् । पादौ पादशिलास्तस्य जंघापादोर्ध्वमुच्यते ॥ गर्भश्चैवोदरं ज्ञेयं कटिश्चैव तु मेखला ॥ १ ॥ स्तम्भाश्च बाहवो ज्ञेया घण्टा जिह्वा प्रकीर्तिता ॥ दीपः प्राणोऽस्य विज्ञेयो ह्यपानो जलनिर्गमः ॥ २ ॥ ब्रह्मस्थानं तु यत्तस्य तन्नाभिः परिकीर्त्तिता ॥ हृत्पद्मं पिंडिका ज्ञेया प्रतिमापुरुषः स्मृतः ॥ ३ ॥ पादचारस्त्वहङ्कारो ज्योतिस्तच्चक्षुरेव च ॥ तदूर्ध्वं प्रकृतिस्तस्य प्रतिमात्मा स्मृतो बुधैः ॥ ४ ॥ जलकुम्भास्तथा द्वारं तस्य प्रजननं स्मृतम् ॥ शुकनासा भवेन्नासा गवाक्षः कर्ण उच्यते ॥ ५ ॥ कपोतपालिः स्कन्धोऽस्य ग्रीवा चामलसारकः ॥ कलशस्तु शिरो ज्ञेयं मज्जा क्षितरसं स्मृतम् ॥ ६ ॥ मेदश्चैव सुधां विद्यात् प्रलेपो मांसमुच्यते ॥ अस्थीनि च शिलास्तस्य स्नायुः कीलादयः स्मृताः ॥ ७ ॥ चक्षुषी शिखरास्तस्य ध्वजाः केशाः प्रकीर्त्तिताः ॥ एवं पुरुषरूपं तं ध्यात्वा च मनसा सुधीः ॥ ८ ॥ प्रासादं पूजयेत् पश्चाद् गन्धपुष्पादिभिः शुभैः ॥ सूत्रेण वेष्टयेद्देवं वासस्तत् परिकल्पयेत् ॥ ९ ॥ प्रासादमेवमभ्यर्च्य वाहनं चाग्रमण्डपे ॥ इति ध्यात्वा संपूज्य प्रासादाय चात्मानं निवेद्य प्रणमेत् । ततः पिण्डिकावाहनपरिवारदेवानां तत्तन्नाममन्त्रैः प्रत्येकमष्टाविंशतिसंख्याकं होमं तिलैः कृत्वा मूलमन्त्रेण चाष्टोत्तरशतं वा हुत्वा । चतस्रो धेनूर्मण्डपस्य दक्षिणद्वारे उदङ्मुखीः स्थापयित्वा संपूज्य ॐ नारायणाय विद्महे वासुदेवाय धीमहि ॥ तन्नो विष्णुः प्रचोदयात् । इति विष्णुगायत्र्या दुग्ध्वा तत्क्षीरेण । ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि ॥ तन्नो रुद्रः प्रचोदयात् ॥ इति रुद्रगायत्र्या चरुं श्रपयित्वा देवाय निवेद्य मण्डपस्योत्तरे द्वादश ब्राह्मणान्भोजयित्वा ॐ विष्णुः प्रीयतामिति निवेदयेत् । तत

१ "प्रतिमा जीव उच्यते" इति प्रतिष्ठासंग्रहे ॥ २ "प्रतिमा पुरुषः स्मृतः" इति च तत्रैव ॥

आचार्याय चतस्रो धेनूर्दद्यात् । ऋत्विगादिभ्यश्चतस्रोङ्गुलीयकादिदक्षिणां दत्त्वा रात्रौ जागरणं गीत-वादित्र-नानोत्साहेन कुर्यात् । ( अत्र ज्येष्ठमध्यमकनिष्ठानां प्रतिमानां सप्तरात्रं पञ्चरात्रं त्रिरात्रमेकरात्रं सद्यो वा बल्यन्तमधिवासयेत् ) ॥ इति सर्वदेवप्रासादाधिवासनविधिः ॥ अथाऽधिवासनानन्तरं प्रातराचार्यः स्नात्वा नित्यकार्यं कृत्वा यागमण्डपे प्रविश्य मूर्त्तिपान्वितो द्वारपालांस्तत्रस्थदेवांश्च संपूज्य वास्तुमण्डलस्थान् देवान् सामान्यतोऽभ्यर्च्य स्वकुण्डे वास्तोष्पते० इति मन्त्रेणाष्टोत्तरशतं मूलमन्त्रेण च हुत्वा पूर्णाहुत्यन्तं सर्वं कृत्वा दिक्पालेभ्यो बलिं दत्त्वा देवसमीपमागत्य यथाशक्ति सुवर्णादिकं दत्त्वा देवायाऽऽत्मानं निवेदयेत् । ततो मण्डपादुत्तरतः पूर्वकल्पितैः शान्तिकलशादिजलैः सपरिकरं यजमानमभिषिञ्चेयुः । ततो गुरुः मूर्तिपब्राह्मणस्थपत्यादीन् परितोष्य प्रासादोत्सर्गं कुर्यात् ॥ अथ प्रासादोत्सर्गः ॥ तत्र मासपक्षाद्युल्लिख्य इमं शिलेष्टकादार्वादिनिर्मितं वलभी-जगती-प्राकार-परिखा-गोपुर-परिवार-देवता-ऽऽलय संयुतं तत्तद्देवतालोककामः कुलद्वयानुग्रहायामुकदेवताप्रीतयेऽहमुत्सृजामि । इति कुशयवजलानि भूमौ क्षिप्त्वा देवं नत्वा ब्राह्मणान् भोजयेत् । इति प्रासादोत्सर्गः ॥ अथाऽचलप्रतिष्ठायाः कर्म । ततः आचार्यो मूर्तिपैः सार्द्धमधिवासितां देवताधारभूतां कूर्म्मशिलां ब्रह्मशिलां पिण्डिकां च ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रंपुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः ॥ इति मन्त्रेण गृहीत्वा । शान्तिघोषैः प्रदक्षिणं प्रासादमानीय द्वारदेशे स्थापयित्वा । ॐ अस्त्राय फट् इति मन्त्रेण सर्षपैर्विघ्नोत्सारणं कृत्वा पुष्पोदकधारया प्रासादगर्भमभ्युक्ष्य । ॐ महाँऽइन्द्रो वज्रहस्तः षोडशी शर्म यच्छतु ॥ हन्तु पाप्मानं योऽस्मान्द्वेष्टि । उपयामगृहीतोसिमहेन्द्रायत्वैषतेयोनिर्म्महेन्द्रायत्वा । इति दर्भेणोल्लिख्य ॐ हुंफडिति अस्त्रपूतेन जलेन प्रोक्ष्य । देवालयस्य सूत्रपातेन मध्यं समीचीनतया कृत्वा मध्यं यत्सूत्रं तस्माद्यवप्रमाणेन वा यवार्द्धप्रमाणेन उत्तराश्रितां स्नानादिसंस्कृतां कूर्मशिलां प्रणवेन पञ्चरत्नोपरि निधाय तच्छ्वभ्रे सौवर्णं कूर्मं

द्वारसम्मुखं निधाय तदुपरि रत्नानि निधाय षट्त्रिंशद्गर्तयुतां पञ्चचत्वारिंशद्गर्तयुतां वा ब्रह्मशिलामधिवासितां निदध्यात् ॥ ॐ नमो व्यापिनि स्थिरे अचले ध्रुवे ॐ श्रीं लं स्वाहेति मन्त्रेण यथाशक्ति संपूज्य प्रार्थयेत् ॥ त्वमेव परमा शक्तिस्त्वमेवासनधारिका ॥ शिवाज्ञया त्वया देवि स्थातव्यमिह सर्वदा ॥ इति प्रार्थ्य तत आसनशिलायां पूजयेत् । वर्णाध्वने नमः । पदाध्वने नमः । मन्त्राध्वने नमः । भुवनाध्वने नमः । तत्त्वाध्वने नमः । सकलाध्वने नमः । इति आसनस्थानस्थां कूर्मशिलां संपूज्य पुष्पाञ्जलित्रयं दत्त्वा प्रणमेत् । इति शिलां स्थिरीकृत्य शिलाग्रे स्थण्डिलं कृत्वा अग्निं संस्थाप्याघारावाज्यभागौ हुत्वा ॐ इदं विष्णुरिति तिलाहुतिमष्टोत्तरशतमष्टाविंशतिर्वा हुत्वा सकलमध्वानं तदारूढं ध्यायेत् । ततः पुण्याहवाचनं कृत्वा मूलमन्त्रेणाष्टोत्तरशतं हुत्वा षट्त्रिंशत्सु पञ्चचत्वारिंशत्सु वा ब्रह्मशिलागर्तेषु प्रादक्षिण्येन सहेम्ना हस्तेन रत्नन्यासं कुर्यात् ( न्यासमन्त्रास्त्वग्रे वक्ष्यमाणाः ) ततः । श्वभ्ररहिते ब्रह्मशिलोपरिभागे सश्वभ्रा पिण्डिका पूर्वपश्चिमानने प्रासादे सौम्यप्रणालीं दक्षिणोत्तरानने पूर्वप्रणालीं ध्रुवसूक्तेन निधाय देवपत्नीलिङ्गकेन मन्त्रेण पिण्डिकामभिमन्त्रयेत् । तत्र विष्णुश्चेत्स्थाप्यस्तदा श्रीश्च ते लक्ष्मीरिति पठेत् । यदा रुद्रस्तदा ॐ आयंगौः पृश्निरक्रमीद० १ । ॐ गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमेव्योमन् १ । ॐ जातवेदसे इत्यादिमन्त्रान् पठेत् १ । ब्रह्मा चेत् गायत्रीमन्त्रेण तदा गायत्र्यादीन् । सूर्यश्चेत्तदा ॐ उर्षस्तच्चित्रमाभरास्मभ्यं वाजिनीवति ॥ येन तोकञ्च तनयञ्च धामहे । इति मन्त्रेण प्रभां स्थापयेत् । ततस्तत्त्वन्यासं कुर्यात् । तद्यथा । ॐ आत्मतत्त्वाय नमः आत्मतत्त्वाधिपतये क्रियाशक्त्यै नमः । ॐ विद्यातत्त्वाय नमः विद्यातत्त्वाधिपतये ज्ञानशक्त्यै नमः । ॐ शिवतत्त्वाय नमः शिवतत्त्वाधिपतये इच्छाशक्त्यै नमः ॥ इति तत्त्वन्यासः । प्रतितत्त्वं मूर्तिमूर्तिपलोकपालान्विन्यसेत् । ततः आधारशक्त्यै नमः इति न्यस्य ॐ अनन्तासनादिवह्नितत्त्वान्तपीठदेवताभ्यो नमः इति पीठपूजां निर्वर्त्य आसन

शक्तिभ्यो नम इत्युक्त्वाभ्यर्च्य प्रार्थयेत् ॥ ॐ सर्वदेवमयीशानि त्रैलोक्याह्लादकारिणि ॥ त्वां प्रतिष्ठापयाम्यत्र मन्दिरे विश्वनिर्मिते ॥ १ ॥
यावच्चन्द्रश्च सूर्यश्च यावदेषा वसुन्धरा ॥ तावत्त्वं देवदेवेशि मन्दिरेऽस्मिन् स्थिरा भव ॥ २ ॥ पुत्रानायुश्च लक्ष्मीं च अचलामजरामराम् ॥
अभयं सर्वभूतेभ्यः कुरु देवि नमोऽस्तुते ॥ ३ ॥ इति पार्वतीं लक्ष्मीं च प्रार्थ्य देवं प्रार्थयेत् ॥ प्रबुध्यस्व महाभाग देवदेव जगत्पते । मेघश्याम
गदापाणे बुध्यस्व कमलेक्षण ॥ बुध्यस्व भूधरानन्त वासुदेव नमोऽस्तु ते ॥ ॐ नृसिंहाय उग्ररूपाय ज्वल ज्वल प्रज्वल स्वाहा इति
प्रार्थ्य प्रणवं श्वभ्रे तद्बाह्ये षोडश स्वरान् तेषां परितो व्यञ्जनानि न्यस्य श्वभ्रान्तः रत्नादीन् विन्यसेत् ॥ तद्यथा । बाह्यपरिधौ यव-व्रीहि-
निष्पाव--प्रियङ्गु--तिल-माष-नीवार--शालि-सिद्धार्थकान्, वज्र--मौक्तिक-वैडूर्य-शंख-स्फटिक--पुष्पराग--चन्द्रकान्ते--न्द्रनील--पद्मरागान्, मनः-
शिला--हरिताला--ऽञ्जन--श्यामाञ्जन--कासीस--सौराष्ट्री--रोचना--गैरिक--पारदान्, सौवर्ण-रौप्य--ताम्रा--यस--त्रपु--सीस--कांस्या--रकूट--तीक्ष्ण
लोहानि, श्वेत--रक्त--चन्दना--ऽर्गव--र्जुनो--शीर--वैष्णवी--सहदेवी--लक्ष्मणाश्वेति । तत्र बीजानामभावे यवान् । रत्नानामभावे वज्रम् ।
धातूनामभावे हरितालम् ॥ ताम्राद्यभावे सुवर्णम् । औषधीनामभावे सहदेवीं न्यसेत् । एवं न्यस्तानां रत्नानां दिक्पाल
मन्त्रैरालम्भनं पूर्वादिक्रमेण कुर्यात् ॥ ( पूर्वे ) ॐ त्रातारमिन्द्रमवितारमिन्द्रᳯ हवेहवे सुहवᳯ शूरमिन्द्रम् ॥ ह्वयामि शक्रम्पुरु
हूतमिन्द्रᳯ स्वस्तिनो मघवा धात्विन्द्रः ॥ १ ॥ ( आग्नेय्याम् ) ॐ अग्निन्दूतम्पुरोदधे हव्यवाहमुपब्रुवे ॥ देवाँ २ ऽआसादयादिह
॥ २ ॥ ( याम्याम् ) ॐ यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपसे ॥ देवस्त्वा सविता मध्वानक्तु पृथिव्याः सᳯ स्पृशस्पाहि ॥ अर्चिरसि शोचि
रसि तपोसि ॥ ३ ॥ ( निर्ऋतौ ) ॐ असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य ॥ अन्यमस्मदिच्छ सा तऽइत्या नमो
देवि निर्ऋते तुभ्यमस्तु ॥ ४ ॥ ( वारुण्याम् ) । ॐ पञ्चनद्यः सरस्वतीमपियन्ति सस्रोतसः ॥ सरस्वती तु पञ्चधा सो देशे भवत्सरित् ॥ ५ ॥

( वायव्याम् ) । ॐ वायोयेतेंसहस्रिणोरथासस्तेभिरागहि ॥ नियुत्वान्त्सोमपीतये ॥ ६ ॥ ( उत्तरे ) । व्वयꣳसोमव्रुतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावन्तꣳ सचेमहि ॥ ७ ॥ ( ऐशान्याम् ) ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्न्वमवसेहूमहेवयम् ॥ पूषानोयथाव्वेदसाम सद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ८ ॥ एवं रत्नादिन्यासं कृत्वा पृथ्वीमेरुकूर्मवाहनानि सौवर्णानि द्वारोन्मुखानि पारदं च तस्मिन् मध्यश्वभ्रे निधाय गुग्गुलरसेन रत्नादिकं स्थिरीकृत्य मधुपायसेन श्वभ्रमनुलिप्य वस्त्रेणाच्छाद्य हुम् इति कवचेनावगुण्ठ्य ॐ अस्त्राय फट् इत्यस्त्रमन्त्रेण संरक्ष्य ॐ मनोजूतिर्जुषतामिति प्रासादमभिषिञ्च्य इंद्रादिभ्यो बलिं दत्त्वाऽऽचामेत् ॥ एवं पिण्डिकां प्रतिष्ठाप्य मुख्यप्रासादाद्बहिः समन्तात् प्रादक्षिण्येन भुवं पञ्चगव्येन संप्रोक्ष्य दर्भपिञ्जूलैः संमार्ज्य पूर्वाद्यष्टदिक्षु वालुकयाऽष्टौ स्थण्डिलानि चतुरस्राणि वितस्तित्रयसंमितानि कृत्वा ततः स्थण्डिलानामीशानादिभागेषु कलशान् वारिपूर्णान् पुष्प-फल-पञ्च पल्लवादियुतान् सूत्रवेष्टितान् प्रयोगविधिना संस्थाप्य तेषु स्थण्डिलेषु पञ्चभूसंस्कारान् संपाद्याग्निं प्रणीय प्रतिस्थण्डिलं पलाशसमिधामष्टोत्तरशतं मूलमन्त्रेण हुत्वा तत आज्येन ॐ नारायणाय विद्महे वासुदेवाय धीमहि ॥ तन्नो विष्णुः प्रचोदयादिति मन्त्रेणाष्टोत्तरशतमष्टाविंशत्यष्टौ वा हुत्वा आचार्यः ताम्रपात्रेऽष्टदिक्संस्थेभ्यः कुम्भेभ्यस्तोयमादाय मूलमन्त्रेण शतवारमभिमन्त्र्य प्रतिमासमीपं गत्वा सर्वतीर्थमयमिदं जलमिति ध्यायन् देवमूर्ध्न्यभिषिञ्चेत् । ॐ नृसिंह उग्ररूप त्वं ज्वल ज्वल प्रज्वल स्वाहा हुं फट् इति नरसिंहमन्त्रेण देवस्य दिग्बन्धनं कृत्वा मूर्तिपैर्युक्तः शंखतूर्यादिनादेन देवं प्रार्थयेत् । ॐ प्रबुध्यस्व महाभाग देवदेव जगत्पते । मेघश्याम गदापाणे प्रबुद्ध कमलेक्षण ॥ प्रबुद्ध भूधरानन्त वासुदेव नमोऽस्तु ते ॥ इति प्रार्थ्य । शंखे जल-क्षीर-कुशाग्र-तिल-तण्डुल-यव-सिद्धार्थक-पुष्पाणि कृत्वा शंखमुद्रया देवायार्घं दत्त्वा ॐ उत्तिष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे ॥ उपप्प्रयन्तुमरुतꣳसुदानवऽइन्द्रप्प्राशूर्भवासचा ॥ १ ॥ इति मन्त्रेण देवमुत्थाप्य ॐ रथेतिष्ठन्नयतिव्वाजि

नं॑ पुरो॒ यत्र॒ यत्र॑ का॒मय॑ते सुषार॒थिः । अभीशू॑नां महि॒मान॑म्पनायत॒ मनः॑ प॒श्चाद॑नु॒यच्छ॑न्ति र॒श्मयः॑ ॥ २ ॥ इति रथमुपवेश्य देवस्य पुरतो गुरुः पृष्ठतो यजमानः पुत्रकलत्रबन्धुयुक्तः पार्श्वयोर्मूर्तिपाः, तूर्यघोषेण शान्तिपाठेन मङ्गलघोषेण च ग्रामस्य प्रासादस्य वा प्रदक्षिणमेत्य प्रासादमानीय शनैः रथादवतार्य प्रासादद्वारसन्मुखं देवं लिङ्गं वा कृत्वाऽर्घ्यं दत्त्वा सुमुहूर्त्ते प्रासादं प्रवेशयेत्, ततः स यजमानो गुरुर्देवं पिण्डिकायां स्थापयेत् ॥ तद्यथा ॥ सुमुहूर्ते सुस्थिरे लग्ने शुभग्रहैरीक्षिते ईश्वरं भावयन् श्वभ्रन्यासद्रव्यसहितं सौवर्णं पद्मं पिण्डिकायाः श्वभ्रे निधाय । ॐ प्रधानपुरुषौ यावद्यावच्चन्द्रदिवाकरौ ॥ तावत्त्वमनया शक्त्या युक्तोऽत्रैव स्थिरो भव ॥ १ ॥ इत्युक्त्वा ॐ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत् ॥ ध्रुवाश्च मे नगाः सर्वे ध्रुवाः पतिकुले स्त्रियः । ॐ ध्रु॒वा द्यौर्ध्रु॒वा पृ॑थि॒वी ध्रु॒वासः॒ पर्व॑ता इ॒मे । ध्रु॒वं विश्व॑मि॒दं जग॑द् ध्रु॒वो राजा॑ वि॒शाम॒यम् ॥ २ ॥ ध्रु॒वं ते॒ राजा॒ वरु॑णो ध्रु॒वं दे॒वो बृह॒स्पतिः॑ । ध्रु॒वं त॒ इन्द्र॑श्चा॒ग्निश्च॑ रा॒ष्ट्रं धा॑रयतां ध्रु॒वम् ॥ ३ ॥ ध्रु॒वं ध्रु॒वेण॑ ह॒विषा॒भि सोमं॑ मृशामसि । अथो॑ त॒ इन्द्रः॒ केव॑ली॒र्विशो॑ बलि॒हृत॑स्करत् ॥ ४ ॥ इति सूक्तं पठित्वा यवं यवार्द्धं वोत्तराश्रितमीशानाश्रितं वा देवं पिण्डिकाश्वभ्रे निधाय स्थिरो भव शाश्वतो भवेत्युक्त्वा पिण्डिकालिङ्गयोरन्तरालं वालुकासीसकादिभिर्दृढं पूरयित्वा पुनर्न चालयेत् ॥ इति अचलप्रतिष्ठाक्रमः ॥ ततो देवस्य वामभागे पत्नीं न्यसेत् । तत्र मन्त्राः ॥ विष्णोर्वामभागे ॐ श्रीश्चते लक्ष्मीश्चेति लक्ष्मीं स्थापयेत् । ॐ श्रीश्च॑ते ल॒क्ष्मीश्च॒ पत्न्या॑वहोरा॒त्रे पा॒र्श्वे नक्ष॑त्राणि रू॒पम॒श्विनौ॒ व्यात्त॑म् ॥ इ॒ष्णन्नि॑षाणा॒मुम्म॑ इषाण॒ सर्वलो॒कम्म॑ इषाण ॥ १ ॥ शङ्करस्य वामे ॐ आयं गौरिति गौरीम् । ब्रह्मणो वामे गायत्रीमन्त्रेण सावित्रीम् । सूर्यस्य वामे ॐ उषस्तच्चित्रेति प्रभां स्थापयेत् । ॐ उष॒स्तच्चि॒त्रमाभ॑रा॒स्मभ्यं॑ वाजिनीवति ॥ येन॑ तो॒कञ्च॒ तन॑यञ्च॒ धाम॑हे ॥ १ ॥ गणपतेर्वामदक्षिणयोः सिद्धिबुद्धी स्थापयेत् ॥ ततः ॐ विश्वत॑श्चक्षुरु॒त वि॒श्वतो॑मुखो

विश्वतोबाहुरुत विश्वतस्पात् ॥ सम्बाहुभ्यान्धमति सम्पतत्रैर्द्यावा भूमी जनयन्देवएकः ॥ इति मन्त्रेण देवस्य मूर्ध्नि हस्तं निधाय परं देवं ध्यात्वा रुद्रसूक्तरैवतसामनी जप्त्वा प्रार्थयेत् ॥ स्वागतं देवदेवेश मद्भाग्यात्त्वमिहाऽऽगतः ॥ प्राकृतं त्वमदृष्ट्वा मां बालवत् परिपालय ॥ १ ॥ धर्मार्थकामसिद्ध्यर्थं स्थिरो भव शिवाय नः ॥ सान्निध्यं तु महादेव स्वर्चायां परिकल्पय ॥ २ ॥ यावच्चन्द्रावनीसूर्यास्तिष्ठन्त्यप्रतिघातिनः ॥ तावत्त्वयाऽत्र देवेश स्थेयं भक्तानुकम्पया ॥ ३ ॥ इति प्रार्थयेत् । ( तत्र विष्णुश्चेत् ) । ॐ अतसीपुष्पसंकाशं शङ्खचक्रगदाधरम् ॥ संस्थापयामि देवेशं देवो भूत्वा जनार्दनम् ॥ १ ॥ ( रुद्रस्य ) । त्र्यक्षं च दशबाहुं च चन्द्रार्द्धकृत शेखरम् ॥ गणेशं वृषभस्थं च स्थापयामि त्रिलोचनम् ॥ २ ॥ ( ब्रह्मणः ) । ऋषिभिः संस्तुतं देवं चतुर्वक्त्रं जटाधरम् ॥ पितामहं महाप्राज्ञं स्थापयाम्यम्बुजोद्भवम् ॥ ३ ॥ ( सूर्यस्य ) सहस्रकिरणं शान्तमप्सरोगणसेवितम् ॥ पद्महस्तं महाबाहुं स्थापयामि दिवाकरम् ॥ ४ ॥ इति पठित्वा देवस्य हृदयं स्पृशन् जपेत् । तद्यथा । ( विष्णोः पुरुषसूक्तम् । रुद्रस्य रौद्रम् । ब्रह्मणो ब्राह्मम् । रवेः सौरम् ) । अन्येषां तत्तत्प्रकाशकान् मन्त्रान् जपित्वा प्रणवव्याहृतिशिरःसहितां गायत्रीं प्राणसूक्तं च जपित्वा सान्निध्यं कुर्यात् । ॐ नमस्ते त्यक्तसङ्गाय सन्तोषपरमात्मने ॥ ज्ञानविज्ञानरूपाय ब्रह्मतेजोऽनुशालिने ॥ १ ॥ गुणातिक्रान्तवेगाय पुरुषाय महात्मने ॥ अव्यक्ताय पुराणाय विष्णो सन्निहितो भव ॥ २ ॥ भगवन् देवदेवेश त्वं पिता सर्वदेहिनाम् ॥ त्वया व्याप्तमिदं सर्वं जगत् स्थावरजङ्गमम् ॥ ३ ॥ त्वमिन्द्रः पावकश्चैव यमो निर्ऋतिरेव च ॥ वरुणो मारुतः सोम ईशानः प्रभुरव्ययः ॥ ४ ॥ येन रूपेण भगवन् व्याप्तं च भुवनत्रयम् ॥ तेन रूपेण देवेश अर्चायाः सन्निधौ भव ॥ ५ ॥ सर्वमन्त्रादिदेवेश लोकानुग्रहकाम्यया ॥ अत्रार्चायां महादेव भव सन्निधिमान् सदा ॥ ६ ॥ सूर्याचन्द्रमसौ यावद् यावत्तिष्ठति मेदिनी ॥ तावत्त्वयाऽत्र देवेश स्थातव्यं स्वेच्छया प्रभो ॥ ७ ॥ यावच्चन्द्रो यमः सूर्यस्तिष्ठन्त्यप्रतिघातिनः ॥ तावदत्र तु देवेश स्थेयं सर्वानुकम्पया ॥ ८ ॥ इति प्रार्थ्य

स्थापितं देवं प्रधानं कृत्वा तस्य परितः परिवारदेवताः स्थापयेत् । अथ परिवारदेवताः । ( शिवस्य ) । नन्दि-महाकाल-वृषभ-भृंगिरिटि-स्कन्दो-मा-विनायक-विष्णु-ब्रह्म-जयन्त-इन्द्रा-ग्नि-यम-निर्ऋति-वरुण-वायु-सोमे-शाना-प्सरोगण-गन्धर्व-गुह्यक-विद्याधरादीन् । ( ब्रह्मणः ) विष्ण्वादयः परिवारदेवताः । ( विष्णोः ) ब्रह्मादयः । ( सूर्यस्य ) दण्ड-पिङ्गल-माठरा-ऽरुणान् । एवं चण्डी-विनायकादीनामपि परिकल्पनीयम् । एवं प्रासादे देवं प्रतिष्ठाप्य मण्डपमेत्य । ततः कुण्डेष्वङ्गहोमः शान्तिद्रव्येण कार्यः । तद्यथा ( पूर्वकुण्डे ) ॐ हृदयाय स्वाहा इति मन्त्रेणाऽऽज्याहुतिर्विंशतिकम् ॥ १ ॥ ( दक्षिणकुण्डे ) ॐ शिरसे स्वाहा इति शिरोमन्त्रेण ॥ २ ॥ ( पश्चिमे ) शिखायै वषट् इति मन्त्रेण ॥ ३ ॥ ( उत्तरे ) कवचाय हुं स्वाहा इति मन्त्रेण ॥ ४ ॥ ( आचार्यकुण्डे ) नेत्रत्रयाय वौषट् इति मन्त्रेण ॥ ५ ॥ पुनः ( पूर्वकुण्डे ) अस्त्राय फट् स्वाहा इति मन्त्रेण जुहुयात् । ततः ॐ सर्वायुधेभ्यः स्वाहा विमलादिनवपीठशक्तिभ्यः स्वाहा सर्वेभ्योऽग्निभ्यः स्वाहा सपरिवारदेवताभ्यः० सर्वदिगीशेभ्यः स्वाहा ॥ ततोऽघोरमन्त्रेणाऽष्टोत्तरशतहोमः इति आयुधमन्त्रैर्हुत्वा देवं प्रार्थयेत् । लोकानुग्रहहेत्वर्थं स्थिरीभव सुखासने ॥ सांनिध्यं हि मया देव प्रत्यहं परिवर्तय ॥ १ ॥ मा भूत् पूजाविरामोऽस्मिन् यजमानः समृद्ध्यताम् ॥ सम्पादय सतां राष्ट्रं सर्वोपद्रववर्जितम् ॥ क्रमेण वृद्धिमतुलां सुखमक्षय्यमश्नुताम् ॥ २ ॥ इति संप्रार्थ्य विधिना षोडशोपचारैर्देवं साङ्गं समर्चयेदिति । ततः प्रासादद्वारदेशे दक्षे विष्णोः चण्डं जयं च स्थापयामि । वामे प्रचण्डं विजयं च स्थापयामि तत्रैव विष्वक्सेनं स्थापयेत् । ( शिवस्य ) नन्दि-महाकाल-गणेश्वर-भृङ्गी-चण्ड-उमा-वृषभ-स्कन्दादीन् स्थापयामि पूजयामि इति संपूज्य बहिरागत्य यथाशक्त्या प्रासादपूजा विधेया । पताका-हरिद्रा-सिन्दूरादिस्वस्तिकादिभिः शोभयेत् । पुनः प्रासादं प्रविश्य प्रासादाग्रमण्डपे तत्तद्वाहनं स्थापयेत्, तद्यथा (विष्णोः) पुरतो गरुडम् । (शिवस्य) पुरतो वृषभम् । ( देव्याः ) सिंहम् । ( गणपतेः ) मूषकम् । ( स्कन्दस्य ) मयूरम् । ( रामचन्द्रस्य ) हनुमन्तं स्थापयित्वा एतान् देवान् स्थापयेत्, अग्रिममण्डपस्य

(पूर्वे) इन्द्रमम्बिकाम् । (अग्निकोणे) विष्णुमग्निम् । (दक्षिणे) धर्मराजं पितॄन् । (निर्ऋतौ) निर्ऋतिं वास्तुपुरुषम् (पश्चिमे) वरुणं समुद्रान् सरितः । (वायव्ये) वायुं दुर्गां फणींद्रान् गणपतिम् । (उत्तरे) यक्षान् उमां स्कन्दं सोमम् । (ऐशान्ये) शिवं स्थापयामि पूजयामि । (द्वारदक्षिणे) कुबेरं (द्वारस्य वामे) श्रियं (दिक्षु) इन्द्रादींस्तत्तद्दिक्षु तत्तन्मन्त्रैः स्थापयेत् । अथ शिवस्य प्रधानभूतस्यावाहनादिपूजा ॥ यस्य सिंहा रथे युक्ता व्याघ्रीभूतास्तथोरगाः ॥ ऋषयो लोकपालाश्च सोमो विष्णुः पितामहः ॥ १ ॥ नागा यक्षाः सगन्धर्वा ये च दिव्या नभश्चराः । तमहं त्र्यक्षमीशानं शिवं रुद्रमुमापतिम् ॥ २ ॥ आवाहयामि सगणं सपत्नीकं वृषध्वजम् ॥ आगच्छ भगवन् रुद्रानुग्रहाय शिवो भव ॥ ३ ॥ शाश्वतो भव पूजां मे गृहाण त्वं नमोऽस्तु ते ॥ ॐ स्वागतमनुस्वागतमनुस्वागतं भगवते नमो नमः सोमाय सगणाय सपरिवाराय नमः । इमां पूजां प्रतिगृह्णातु भवान् । ॐ भगवन् मन्त्रपूतमिदमर्घ्यं पाद्यमाचमनीयमासनं ब्रह्मणाभिहितं (तुभ्यम्) नमो नमः स्वाहा ॥ (आगच्छ भगवन्नित्यादिका मन्त्रा ऊहेन सोमाय पदवर्जिताः सर्वसाधारणाः) इति संपूज्य प्रणम्य ब्रह्मघोषेण स्नापयेत् । तद्यथा । दधिक्राव्णो इति दध्ना ॥ १ ॥ (ततो मध्ये सर्वत्र सुगन्धजलेन स्नापयेत्) आप्यायस्वेति क्षीरेण । ॐ आप्यायस्वसमेतुते विश्वतः सोमवृष्ण्यम् ॥ भवावाजस्यसंगथे ॥ २ ॥ ॐ घृतंघृतमिति घृतेन ॥ ३ ॥ मधुवाता इति मधुना ॥ ४ ॥ ॐ आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः ॥ पितरञ्चप्रयन्स्वः इतिशर्करोदकेन ॥ ५ ॥ एवं दधि–दुग्ध-घृत-मधु-शर्कराख्यैः समन्त्रैर्मध्ये सुगन्धजलयुतैः संस्नाप्य । ॐ ततो विराडजायत० ॥ १ ॥ सहस्रशीर्षा० ॥ २ ॥ अभित्वाशूरनोनुमोदुग्धाइव धेनवः ॥ ईशानमस्यजगतःस्वर्दृशमीशानमिन्द्रतस्थुषः ॥ ३ ॥ पुरुषएवेदं० ॥ ४ ॥ नत्वावाँअन्योदिव्योनपार्थिवोनजातोनजनिष्यते ॥ अश्वायन्तोमघवन्निन्द्रवाजिनोगव्यन्तस्त्वाहवामहे ॥ ५ ॥ इति मन्त्रान् जपेत् । प्रतिमन्त्रं जलेन देवस्य पादौ नाभिं वक्षः शिरश्चालभेत । ततो लिङ्गमन्त्रैः प्रार्थयित्वा भगवन् देवदेवेश धर्मकामार्थमोक्षद ॥ विद्याविद्येश्वरै रुद्रैर्गणे

शैलोकपालकैः ॥ १ ॥ देवदानवगन्धर्वैर्यक्षैश्च सह किन्नरैः ॥ अस्मिँल्लिङ्गे महादेव सर्वदा वस वै प्रभो ॥ २ ॥ पुंसामनुग्रहार्थाय पृथिव्यां स्वेच्छया प्रभो ॥ परावरेण भावेन स्थातव्यं सर्वथा त्वया ॥ ३ ॥ सर्वविघ्नहरः पुंसां सर्वदुःखहरः सदा ॥ सर्वदा यजमानस्य इच्छासम्पत्करो भव ॥ ४ ॥ नमस्ते सर्वधर्माय सन्तोषविजितात्मने ॥ ज्ञानविज्ञानतृप्ताय ब्रह्मतेजोऽभिशालिने ॥ ५ ॥ नमस्ते शुद्धदेहाय पुरुषाय महात्मने ॥ स्थापकानां मूर्तिपानां शिल्पिनां च विभो सदा ॥ ६ ॥ ग्रामदेशनृपाणां च शान्तिर्भवतु सर्वदा ॥ पूजकाराधकानां च भक्तानां भक्तवत्सल ॥७॥ सर्वेषां च जगन्नाथ स्वेच्छासिद्धिप्रदो भव ॥ चन्द्रार्कावनिपर्यन्तं लिङ्गेऽस्मिन् परमेश्वर ॥ ८ ॥ स्थातव्यमुमया सार्धं सर्वलोकानुकम्पया ॥ यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ॥ ९ ॥ तावत्त्वयाऽत्र देवेश स्थातव्यं स्वेच्छया विभो ॥ इति शिवस्थापनायाम् ॥ ( विष्णुश्चेत्तदा ) अस्यां मूर्तौ महाविष्णो सान्निध्यं सर्वदा कुरु ॥ चन्द्रार्कावनिपर्यन्तं मूर्तावस्यां रमेश्वर ॥ ॐ सहस्रशीर्षेत्यादिपुरुषसूक्तेन विष्णुं षोडशोपचारैः संपूज्य ॐ जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन । सुब्रह्मण्य नमस्तेऽस्तु महापुरुष पूर्वज ॥ १ ॥ नमो हिरण्यगर्भाय प्रधानाऽव्यक्तरूपिणे । ॐ नमो वासुदेवाय शुद्धज्ञानस्वरूपिणे ॥ २ ॥ देवानां दानवानां च सामान्यमसि दैवतम् । सर्वदा चरणद्वंद्वं व्रजामि शरणं तव ॥ ३ ॥ एकस्त्व मासि लोकस्य स्रष्टा संहारकस्तथा । अध्यक्षश्चानुमन्ता च गुणमायासमावृतः ॥ ४ ॥ संसारसागरं घोरमनन्तं क्लेशभाजनम् । त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः ॥ ५ ॥ न ते रूपं न चाकारो नायुधानि न चास्पदम् । तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥ ६ ॥ नैव किञ्चित् परोक्षन्ते प्रत्यक्षोऽसि न कस्यचित् । नैव किंचिदसाध्यं ते न च साध्योऽसि कस्यचित् ॥ ७ ॥ कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् । योगिनां परमां सिद्धिं परमं ते परं विदुः ॥ ८ ॥ अहं भीतोऽस्मि देवेश संसारेऽस्मिन् महाभये । त्राहि मां पुण्डरीकाक्ष न जाने शरणं परम् ॥ ९ ॥ कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत । शरीरेऽपि गतौ चापि वर्तते मे महद्भयम् ॥ १० ॥ त्वत्पादकमलादन्यन्न मे जन्मान्तरेष्वपि ॥

निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम् ॥ ११ ॥ विज्ञानं यदिदं प्राप्तं यदिदं ज्ञानमार्जितम् । जन्मान्तरेऽपि मे देव मा भूदस्य परिक्षयः ॥ १२ ॥ दुर्गतावपि जातायां त्वं गतिस्त्वं मतिर्मम । यदि नाथं च विज्ञेयं तावतास्मि कृती सदा ॥१३॥ आकामकलुषं चित्तं मम ते पादयोः स्थितिम् । कामये वैष्णवत्वं तु सर्वजन्मसु केवलम् ॥ १४ ॥ इति महाविद्यास्तवेन पुराणमन्त्रैरन्यैस्स्तोत्रादिभिश्च स्तुत्वा क्षमस्वेत्युक्त्वा देवं प्रार्थयेत् । ज्ञानतोऽज्ञानतो वाऽपि यावद्विधिरनुष्ठितः ॥ स सर्वस्त्वत्प्रसादेन समग्रो भवतान्ममेति ॥ ( शिवस्य ) ज्ञानतोऽज्ञानतो वाऽपि भगवन् यत्कृतं मया ॥ तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादान्महेश्वर ॥ इति प्रार्थ्य ततः कर्तृनामयुतं देवनाम कुर्यात् । सर्वदा व्यवहारार्थं तद्यथा ( विष्णोः ) अमुकस्वामी अमुक नारायण इति वा ( शिवस्य ) अमुकेश्वरः । ( सूर्यस्य ) अमुकादित्यः ( देव्याः ) अमुकेश्वरी । ( गणपतेः ) अमुकविनायक इत्यादि नाम विदध्यात् ॥ ( अथ नैमित्तिके दोषे प्रायश्चित्तम् ) तत्र स्थाप्यमानदेवार्चालिङ्गम् वा यां यां दिशमुपाश्रयत्तत्तद्दिगीशमन्त्रेणाष्टोत्तरशतसंख्यया शमीपलाशान्यतमसमिद्धोमं तिलहोमं च पूर्णाहुत्यन्तं कृत्वा तत्तद्दिक्पालदक्षिणादानं कुर्यात् ॥ ( दिगीशमन्त्रास्तु त्रातारमिन्द्रमित्यादयः प्रसिद्धाः ) अत्र इन्द्रादीनां क्रमेण इमा दक्षिणाः । गजो मेषो महिषोऽजः शक्तिर्मुक्ताफलं तथा ॥ वस्त्रयुग्माऽविकाधेनुवृषभाश्च विधानतः ॥ १ ॥ तदभावे सुवर्णप्रतिकृतयः राजतो वा वृषभ इति । यस्यां यस्यां तु चलति शान्तिः स्यात्तत्र तत्र तु ॥ अन्यथा तु भवेद्घोरं भयं कुलविनाशनम् ॥ १ ॥ स्थिरं न चालयेद्देवं कदाचिदपि पण्डितः । हन्याद्विचालितोऽज्ञानात्तस्मात्तं न विचालयेत् ॥ २ ॥ ततः स्थाप्यमाने देवे शब्दोत्थाने श्वभ्रान्ते स्फुटिते वा शान्त्यर्थं मूलमन्त्रेणाष्टोत्तरशतं हुत्वा प्रतिष्ठाहोमं कुर्यात् ॥ ॐ शिवाय स्थिरो भव स्वाहा । ॐ शिवायाप्रमेयो भव स्वाहा । ॐ शिवाय विबोधो भव स्वाहा । ॐ शिवाय नित्यो भव स्वाहा । ॐ शिवाय सर्वगो भव स्वाहा । ॐ शिवाय अविनाशो भव स्वाहा । ॐ शिवाय क्लृप्तो भव स्वाहा । अथ सर्वशान्त्यर्थमघोरमन्त्रेणाष्टोत्तरशतं हुत्वा ततः ऋत्विग्भिः सह स्वे स्वे कुण्डे सर्वे पूर्णाहुतिहोमं कुर्युः । अथ

पूर्णाहुतिः । तत्रादौ देशकालौ स्मृत्वा कृतस्य कर्मणः साङ्गतासिद्ध्यर्थं वसोर्धारासमन्वितं पूर्णाहुतिहोममहं करिष्ये इति संकल्प्य तत्र तावत् आज्याधिश्रयणमाज्योद्वासनमवेक्षणमुत्पवनं स्रुक्स्रुवप्रतपनं सूत्रेण वेष्टितं चतुर्गृहीतेनाज्यग्रहणं तदुपरि नारिकेलस्य निधानं तस्य पूजनं यजमानः सपत्नीको गुरोर्दक्षिणस्कन्धं स्पृशन् ताम्बूलपूगीफलाक्षतघृतं स्रुवे कृत्वा जुहुयात् ॥ तत्र मन्त्राः । ॐ समुद्रादूर्मिर्मधुमाँ २ उदारदुपाꣳशुनासममृतत्वमानट् ॥ घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ १ ॥ वयन्नामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारया मानमोभिः ॥ उपब्रह्माशृणवच्छस्यमानंचतुःश्रृंगोवमीद्गौरएतत् ॥ २ ॥ चत्वारिशृङ्गात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाबद्धो वृषभोरोरवीतिमहोदेवोमर्त्याँ २ आविवेश ॥ ३ ॥ त्रिधाहितंपणिभिर्गुह्यमानंगविदेवासोघृतमन्ववविंदन् ॥ इन्द्रऽएकꣳसूर्यऽएकंजजानवेनादे कꣳस्वधयानिष्टतक्षुः ॥ ४ ॥ एताऽअर्षन्तिहृद्यात्समुद्राच्छतव्रजारिपुणानावचक्षे ॥ घृतस्यधाराऽअभिचाकशीमिहिरण्ययोवेतसोमध्यऽआ साम् ॥ ५ ॥ सम्यक्स्रवन्तिसरितोनधेनाऽअन्तर्हृदा मनसापूयमानाः ॥ एतेऽअर्षन्त्यूर्मयोघृतस्यमृगाऽइवक्षिपणोरीषमाणाः ॥ ६ ॥ सिन्धोरि वप्राध्वनेशूघनासोवातप्रमियःपतयन्तियह्वाः ॥ घृतस्यधाराऽअरुषोनवाजीकाष्ठाभिन्दन्नूर्मिभिःपिन्वमानः ॥ ७ ॥ अभिप्रवन्तसमनेवयोषाःकल्या ण्यःस्मयमानासोऽअग्निम् ॥ घृतस्यधाराःसमिधोनसन्तताजुषाणोहर्यतिजातवेदाः ॥ ८ ॥ कन्याऽइववहतुमेतवाऽउऽअञ्ज्यञ्जानाऽअभिचा कशीमि ॥ यत्रसोमःसूयतेयत्रयज्ञोघृतस्यधाराऽअभितत्पवन्ते ॥ ९ ॥ अभ्यर्षतसुष्टुतिंगव्यमाजिमस्मासुभद्राद्रविणानिधत्त । इमंयज्ञन्नय तदेवतानोघृतस्यधारामधुमत्पवन्ते ॥ १० ॥ धामन्तेविश्वंभुवनमधिश्रितमन्तःसमुद्रेहृद्यन्तरायुषि ॥ अपामनीकेसमिथेयऽआभृतस्तमश्याम मधुमन्तंतऽऊर्मिम् ॥ ११ ॥ ॐ मूर्द्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतआजातमग्निम् ॥ कविꣳसम्राजमतिथिंजनानामासन्नापात्रंजनयन्त देवाः ॥ १२ ॥ ॐ चित्तिंजुहोमिमनसाघृतेनयथादेवाऽइहागमन्वीतिहोत्राऋतावृधः ॥ पत्येविश्वस्यभूमनोजुहोमिविश्वकर्मणेविश्वाहादाभ्यꣳ

हुविऽ ॥ १३ ॥ सुप्ततेऽअग्नेसुमिधः सुप्तजिह्वाः सुप्तऽऋषयः सुप्तधामप्रियाणि ॥ सुप्तहोत्राः सप्तधात्वायजन्तिसुप्तयोनीरापृणस्वाघृतेनस्वाहा ॥ १४ ॥ शुक्रज्योतिश्चचित्रज्योतिश्चसुत्यज्योतिश्चज्योतिष्मांश्च ॥ शुक्रश्चऽऋतुपाश्चात्यंहाः ॥ १५ ॥ ईदृङ्चान्यादृङ्चसदृङ्चप्रतिसदृङ्च ॥ मितश्चसम्मितश्चसभराः ॥ १६ ॥ ऋतश्चसत्यश्चध्रुवश्चधरुणश्च ॥ धुर्त्ताचविधुर्त्ताचविधारयः ॥ १७ ॥ ऋतजिच्चसत्यजिच्चसेनजिच्चसुषेणश्च ॥ अंतिमित्रश्चदूरेऽअमित्रश्चगुणः ॥ १८ ॥ ईदृक्षासऽएतादृक्षासऽऊषुणःसदृक्षासःप्रतिसदृक्षासऽएतन ॥ मितासश्चसम्मितासोनोऽअद्यसभरसोमरुतोयज्ञेऽअस्मिन् ॥ १९ ॥ स्वतवांश्चप्रघासीचसांतपनश्चगृहमेधीच ॥ क्रीडीचशाकीचोज्जेषि ॥ २० ॥ उग्रश्चभीमश्चध्वांतश्चधुनिश्च ॥ सासहाँश्चाभियुग्वाचविक्षिपःस्वाहा ॥ २१ ॥ पुनस्त्वादित्यारुद्रावसवःसमिंधतांपुनर्ब्रह्माणोवसुनीथयज्ञैः ॥ घृतेनत्वंतन्वंवर्द्धयस्वसुत्याःसन्तुयजमानस्यकामाः ॥ २२ ॥ वसोःपवित्रमसिशतधारंवसोःपवित्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातुवसोःपवित्रेणशतधारेणसुप्वाकामंधुक्षः ॥ २३ ॥ पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेववविक्रीणावहाऽइषमूर्जंशतक्रतोस्वाहा ॥ २४ ॥ इदमग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवते अग्नये अद्भ्यश्च न मम ॥ इति पूर्णाहुतिः ॥ ततः ॐ श्रद्धां मेधां यशः प्रज्ञां विद्यां पुष्टिं श्रियं बलम् ॥ तेज आयुष्यमारोग्यं देहि मे हव्यवाहन इत्याग्निं प्रार्थ्य । ततस्त्र्यायुषकरणम् ॥ ॐ त्र्यायुषञ्जमदग्नेरिति ललाटे । कश्यपस्यत्र्यायुषमिति ग्रीवायाम् । यद्देवेषु त्र्यायुषमिति बाहूमूले । तन्नोऽस्तु त्र्यायुषमिति हृदि । ततः । संस्रवप्राशनमाचमनं च कुर्यात् । ततः पवित्राभ्यां मार्जनम् । ब्रह्मणे पूर्णपात्रदानम् । तद्यथा अद्येत्यादिदेशकालौ स्मृत्वा अद्यकृतैतदमुकदेवप्रतिष्ठाहोमकर्मणि ब्रह्मकर्म्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतं सदक्षिणाकममुकगोत्रायामुकशर्मणे ब्राह्मणाय ब्रह्मणे तुभ्यमहं संप्रददे । ॐ स्वस्तीति प्रतिवचनम् । ततो ब्रह्मग्रन्थिविमोकः । ततः ॐ सुमित्रिया नऽआप

१ विशेषापेक्षायामत्र संस्कारभास्करो द्रष्टव्यस्तत्र मन्त्रबाहुल्यात् ॥

ओषधयः सन्त्विति पवित्राभ्यां प्रणीताजलेन यजमानशिरः संमृज्य पवित्रे अग्नौ प्रक्षिप्य । ॐ दुर्मित्रियास्तस्मै सन्तुयोऽस्मान् द्वेष्टि यं च वयं द्विष्मः । इति ऐशान्यां प्रणीतां न्युब्जीकुर्यात् । तत आस्तरणक्रमेण बर्हिरुत्थाप्याज्येनाभिघार्य । ॐ देवांगातुविदोगातुंवित्वागातुमित ॥ मनसस्पतऽइमंदेवयज्ञꣳस्वाहावातेधाःस्वाहा ॥ १ ॥ इति मन्त्रेण हस्तेन एव जुहुयात् । इत्यग्निकर्म समाप्य आघारादिपूर्णाहुतिपर्यन्तं यद् यद्द्रव्यं यावद्यावत्संख्याकेन येन येन मन्त्रेण यस्यै यस्यै देवतायै यया यया कामनया हुतं तस्यै तस्यै देवतायै सा सा देवता प्रीयतां, ते देवाः शान्तिदाः तुष्टिदाः पुष्टिदाः वरदाः भवन्तु इति प्रार्थ्य ऐशाने बलिं दत्त्वाऽऽचामेत् । ततः उदङ्मुखः आचार्यस्तिष्ठन् सर्वे ऋत्विजश्च शुभासने यजमानं पत्नीपुत्रादियुतं प्राङ्मुखमुपवेश्य ग्रहकलशशान्तिकलशोदकं सुवर्णादिपात्रे समादाय कुशदूर्वाम्रपल्लवैर्वेदमन्त्रैः पौराणिकैश्च गीतवाद्यादिपुरःसरमभिषिञ्चेत् ॥ तथाहि ॥ ॐ आपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन ॥ महेरणायचक्षसे ॥ १ ॥ योवः शिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ २ ॥ तस्माऽअरङ्गमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ ३ ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः ॥ ४ ॥ ॐ वरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनीस्त्थो वरुणस्यऽऋतसदन्न्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ ५ ॥ भग प्रणेतर्भगसत्यराधोभगेमान्धियमुदवा ददन्नः ॥ भगप्रणोजनयगोभिरश्वैर्भगप्रनृभिर्न्नृवन्तः स्याम ॥ ६ ॥ इदमापःप्रवहतावद्यञ्चमलंचयत् ॥ यच्चाभिदुद्रोहानृतंयच्चशेपेऽअभीरुणम् ॥ आपोमातस्मादेनसःपवमानश्चमुञ्चतु ॥ ७ ॥ ॐ पुनन्तुमादेवजनाःपुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानिजातवेदःपुनीहिमा ॥ ८ ॥ आप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यम् ॥ भवावाजस्यसङ्गथे ॥ ९ ॥ ॐ पयः पृथिव्यांपयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः ॥ पयस्वतीः प्रदिशः सन्तुमह्यम् ॥ १० ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम् ॥ सरस्वत्यैवाचोयन्तुर्यन्त्रियेदधामिबृहस्पतेष्ट्वासाम्रा

ज्येनाभिषिंश्चामि ॥ ११ ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम् ॥ सरस्वत्यैवाचोयन्तुर्यन्त्रेणाग्नेःसाम्राज्येनाभिषि
ञ्चामि ॥ १२ ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम् ॥ अश्विनोर्भैषज्ज्येनतेजसेब्रह्मवर्चसायाभिषिंश्चामि सरस्वत्यै
भैषज्येनवीर्यायान्नाद्यायाभिषिंचामींद्रस्येन्द्रियेणबलायश्रियैयशसेभिषिंश्चामि ॥ १३ ॥ पालाशंभवतितेनब्राह्मणोभिषिञ्चति ॥ ब्रह्मवैपला
शोब्रह्मणैवैनमेतदभिषिञ्चति ॥ ॥ १४ ॥ सर्वेषांवाऽएषवेदानांरसोयत्सामसर्वेषामेवैनमेतद्वेदानांरसेनाभिषिञ्चति ॥ १५ ॥ यदेवक
ल्पाज्जुहोतिप्राणावैकल्पाऽअमृतमुपवैप्राणाऽअमृतेनैवैनमेतदभिषिञ्चति ॥ १६ ॥ दीर्घायुत्वायबलायवर्चसेसुप्रजास्त्वासहसाऽ अथो
जीवशरदः शतम् ॥ १७ ॥ द्यौःशान्तिरन्तरिक्षःशान्ति ÷ पृथिवीशान्तिरापःशान्तिरोषधयःशान्ति ÷ ॥ वनस्पतयःशांतिर्विश्वेदेवाःशांति
ब्रह्मशान्तिःसर्वंशान्तिःशान्तिरेवशान्तिःसामाशान्तिरेधि ॥ १८ ॥ ततः समुद्रज्येष्ठा इत्यादिभिर्मन्त्रैः पवमानः सुवर्जन इत्यनुवाकेन च इमं
मे वरुणेति पूर्वोक्तैर्वारुणैर्मन्त्रैराचार्यादयोऽभिषिञ्चेयुः ॥ अथ पौराणिकमन्त्राः । सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ॥ वासुदेवो जगन्ना
थस्तथा सङ्कर्षणो विभुः ॥ १ ॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ॥ आखण्डलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा ॥ २ ॥ वरुणः पवनश्चैव
धनाध्यक्षस्तथा शिवः ॥ ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥ ३ ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ॥ बुद्धिर्लज्जा वपुः
शान्तिस्तुष्टिः कान्तिश्च मातरः ॥ ४ ॥ एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ॥ आदित्यश्चन्द्रमा भौमो बुधजीवसिताऽर्कजाः ॥ ग्रहास्त्वामभिषि
ञ्चन्तु राहुः केतुश्च तर्पिताः ॥ ५ ॥ देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥ ऋषयो मनवो गावो देवमातर एव च ॥ ६ ॥ देवपत्न्यो द्रुमा नागा दैत्याश्चा
प्सरसां गणः ॥ अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ॥ ७ ॥ औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ सरितः सागराः शैला
स्तीर्थानि जलदा नदाः ॥ ८ ॥ एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥ ९ ॥ आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ॥ अभिषिञ्चन्तु ते

सर्वे धर्मकामार्थसिद्धये ॥ १० ॥ अमृताऽभिषेकोऽस्तु इत्यभिषेकः ॥ ततोऽभिषेकान्तरं सर्वौषधीरनुलिप्य शुद्धोदकेन स्नात्वा उभयोः स्नान वस्त्रत्यागः । ततः शुक्लमाल्याम्बरधरो धृतमङ्गलतिलकः सपत्नीको यजमानः स्वासने उपविश्य आचम्य कांस्यपात्रस्थाज्यावलोकनं कुर्यात् । ॐ रूपैणवोरूपमभ्यागांतुथोवोंविश्ववेंदाविभंजतु ॥ ऋतस्यंपुथाप्रेतंचुन्द्रदंक्षिणाविस्वुःपश्यंव्युन्तरिंक्षंयतंस्व सदुस्यैः ॥ १ ॥ इत्याज्ये मुख मवलोक्य ब्राह्मणाय दद्यात् ॥ अथाचार्यपूजनम् ॥ तच्च यजमान आचार्यमासने उपवेश्य सत्कृत्य ग्रामं गोशतं तदर्धं वा वृषभैकादशकं पञ्चकं सालङ्कृतं वा अश्वं दासीदासं व्यजन-चामर-छत्र-वितान-याना-ऽऽसन-वस्त्राणि यथाशक्ति सन्निधाय गन्धपुष्पमालादिभिः संपूज्य कुंकुमै रनुलिप्य दक्षिणहस्ते सौवर्णाङ्गुलीयकं विन्यस्य हार-कङ्कण-केयूर-कुण्डलादिभिर्भूषणैर्भूषयित्वा देशकालौ संकीर्त्य देवप्रतिष्ठासिद्ध्यर्थमिमां दक्षिणां तुभ्यमहमाचार्याय सम्प्रददे ब्रह्मार्पणमस्तु न ममेत्युक्त्वा तद्धस्ते गोपुच्छ-तिल-यव-कुश-तुलसीसहितं जलं क्षिपेत् । प्रार्थयेच्च ॥ भग वन् सर्वधर्मज्ञ शिवशास्त्रपरायण ॥ सर्वशास्त्रार्थतत्त्वज्ञ सर्वधर्मविशारद ॥ १ ॥ अनादिजन्मसन्ताने ह्यप्रमेये भवार्णवे ॥ अद्य मे ह्युत्तमं जन्म अद्य मे सफलं धनम् ॥ २ ॥ अद्य मे जननोच्छित्तिरद्य मे परमं पदम् ॥ मोचितोऽहं त्वया नाथ दुश्छेद्याद्भवबन्धनात् ॥ ३ ॥ ईश त्रातस्त्व या यस्मादप्रमेयाद् भवार्णवात् ॥ मुक्तोऽहं मर्त्यसंसारात् प्रपन्नोऽहं तवान्तिकम् ॥ ४ ॥ ज्ञानतोऽज्ञानतो वाऽपि यद् यन्न्यूनं कृतं मया ॥ तत सर्वं पूर्णमेवाऽस्तु त्वत्प्रसादात् क्षमस्व मे ॥ ५ ॥ इत्याचार्यप्रार्थना ॥ एवं ब्रह्मणे ऋत्विगादिभ्यश्च दक्षिणां दद्यात् । ततः आचार्यो ॐ समस्त जगदुत्पत्ति-स्थिति-संहार-कारकः ॥ शिवः शिवः सानुचरः सर्वदा सर्वकामदः ॥ १ ॥ द्रव्यहीनं च यत्किञ्चिद् विधिहीनं तु यद् भवेत् ॥ तत् सर्वं पूर्णमेवास्तु प्रसादात् कारणस्य ते ॥ २ ॥ स्थापकस्य मूर्तिपानां शिल्पिनां वर्णिनां तथा ॥ सराष्ट्रपार्थिवानां च शान्तिर्भवतु सर्वदा ॥ ॥ ३ ॥ भृत्यपुत्रकलत्रैश्च स्वमित्रबलवाहनैः ॥ कारणस्य प्रसादेन सर्वलोकेश्वरो भवेत्युक्त्वा देवं नत्वा यजमानायाशिषं श्रेयौ

दानं च दद्यात् ( यजमानायाशीर्वाचनं, श्रेयःसम्पादनं च कुर्यात् ) ॐ स्वुस्ति नु इन्द्रौ वृद्धश्रंवाःस्वुस्ति नं ÷ पूषा विश्ववेंदाः ॥ स्वुस्ति नुस्तार्क्ष्योऽ अरिष्टनेमिः स्वुस्ति नो बृहुस्पतिर्दधातु ॥ १ ॥ ॐ श्रीवर्च्चस्वमायुष्युमारोग्युमाविधात्पवमानम्महीयते। धान्यं धुनं पशुं बुहुपुत्रलाभं शुतसंवत्सरं

---

१ अत्र **"यजमानायाशीर्वाचनं, श्रेयःसम्पादनं च कुर्यात्"** इति शुद्धवाक्यप्रयोगः प्रशस्तः, यथास्थिते पूर्वस्मिन् वाक्ये दानस्य पुनर्दानं भवेत् किमाकारकमिति संशयः ? ॥ प्रथमस्तु श्रेयोदानं दद्यादिति वाक्ये श्रेयोदानस्य पुनर्दानमेव किंरूपमिति ? द्वितीयो यथा-आशिषां, श्रेयसश्च वाचनसम्पादने एव सम्भवतः, न तु जातुचिद्दानम्, तयोर्देयवस्तुत्वाभावप्रसङ्गात् । 'नैतयोर्दानं सम्भवति' स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पादनानुकूलव्यापारात्मकस्य कस्यचिद् वस्तुनस्त्यागरूपस्य दानस्य तयोरद्रव्यत्वेन तत्रासंभवत्वात् । स्वस्य परस्य चेष्टार्थशंसनरूपस्य वाग्व्यापारस्याशिषूशब्दार्थस्यात्र दानत्वेनानुपयोगात् "स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः" इति **"अमरकोषप्रामाण्यात्"** पुण्यपर्यायकस्य श्रेयश्शब्दस्य च दातव्यवस्त्वभावात्, **"तेन श्रेयसा त्वं श्रेयोवान् भव"** इत्यनुपदमेव वक्ष्यमाणे वाक्ये मतुबन्त-विधेय-विशेषण-पद-प्रयोग-निर्देशेन तद्योगमात्रप्रदर्शनत्वाच्च ॥ अत्र वाचनमिति ण्यन्तप्रयोगस्तु पूर्वसम्बद्धस्याचार्यस्य अन्येषामृत्विजां प्रयोजककर्तृत्वेनानुरोधात् । आचार्यो यजमानाय–यजमाननिमित्तम् आशीर्वाचनं कुर्यात्=स्वयमन्यैश्चार्त्विग्भिराशिषां वचनं कारयेदित्यर्थः ॥

अत्र मूलेऽनुक्तमत्यावश्यकं कर्म "श्रेयःसम्पादनाख्यं" पुनरुच्यते टिप्पण्यां **संस्कारभास्करतः** । तद् यथा-**अथ श्रेयःसम्पादनम्** । आचार्यादयो वरणक्रमेण स्वस्वश्रेयोदानं कुर्युः। अद्येत्यादिदेशकालौ संकीर्त्यामुकगोत्रोऽमुकनामाहं कृतस्यास्य सग्रहमख-वास्तुशान्तिपूर्वकामुकदेवप्रतिष्ठाख्यस्य कर्मणो यजमानाय श्रेयो-दानं करिष्ये ॥ तत्रादौ वचःप्रतिवचनम् । शिवा आपः सन्तु ( **इत्याचार्यादयः** ) । सन्तु शिवा आपः ( इति यजमानः ) । सौमनस्यमस्तु ( इत्याचा० ) अस्तु सौमनस्यम् ( इति यज० ) । अक्षतं चारिष्टं चास्तु ( इत्याचा० ) । अस्त्वक्षतमरिष्टं च ( इति यजमानः ) । यजमानहस्ते गन्धादिदानम् । गन्धाः पान्तु, सौमङ्गल्यं चास्तु । अक्षताः पान्तु, आयुष्यमस्तु । पुष्पाणि पान्तु, सौश्रियमस्तु ( अत्र सर्वत्रोक्तिप्रत्युक्ती ) । यत् पापं रोगोऽशुभमकल्याणं तद्दूरे प्रतिहतमस्तु ( इति बहिर्वामपार्श्वे ) यच्छ्रेयस्तदस्तु ( इति पुनर्यजमानहस्ते ) ।"सर्वमेतत् पुण्याहवाचनानुकरणमात्रम्" ॥ (तत आचार्यः स्वहस्ते जलपुष्पा-क्षत-कुश-दूर्वा-पूगीफल-ताम्बूलानि गृहीत्वा,अद्येत्यादिदेशकालौ संकीर्त्य,अमुकगोत्रोऽमुकप्रवरोऽमुकवेदैकशाखाध्यायी,( अमुकनामाहम् ) भवन्नियोगेन मया,अस्मिन् सग्रहमख-वास्तु–

दीर्घमायुः ॥ २ ॥ पुनस्त्वादित्या रुद्रा वसवः समिन्धताम्पुनर्ब्रह्माणो वसुनीथ यज्ञैः ॥ घृतेन त्वं तन्वं वर्द्धयस्व सत्याः सन्तु यजमानस्य कामाः ॥ ३ ॥ मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः ॥ शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ॥ ४ ॥ व्यास-वाल्मीकवचनात् परा

—शान्तिपुरस्सरे, अमुकदेवप्रतिष्ठाकर्मणि, यत् कृतमाचार्यत्वं, तेन यदुत्पन्नं श्रेयः ( पुण्यं कल्याणमित्यर्थः ) तद् ( पुण्यम् ) अनेन साक्षतोदक-फल-पुष्प-कुश-ताम्बूलेन तुभ्यमहं सम्प्रददे तत् प्रतिगृह्यतां त्वया यजमानेन ( **इत्याचार्यः** ) तत् प्रतिगृह्णामि( **इति यजमानः** )॥तेन श्रेयसा त्वं श्रेयोवान् भव (**इत्याचार्यः**) भवामि(**इति यजमानः**)॥ एवमेव ब्रह्मादय ऋत्विजो जापकाश्चापि पृथक् पृथक् कुर्युः ॥ अथ वा ब्रह्मादय इमे ऋत्विजो जापकाश्चाचार्य्यद्वारैव श्रेयोदानं कुर्युः । तद्यथा-पूर्ववद् देशकालादि स्मृत्वा, अमुकोऽहमाचार्यः भवन्नियोगेन मया अस्मिन् सग्रहमख-वास्तुशान्तिपूर्वके अमुकदेवप्रतिष्ठाकर्मणि, यत् कृतमाचार्यत्वं तथा च, एभिर्ब्राह्मणैः यत् कृतं ब्रह्मत्वं, गाणपत्यं, सादस्यं, होतृत्वं, जापकत्वम्, तथा चात्रास्माभिर्यः कृतो होमः, यः कृतो जपः, तस्मादाचार्यत्वात्, ब्रह्मत्वात् , गाणपत्यात्, सादस्यात्, होमात्, जपाच्च यदुत्पन्नं श्रेयः तद्, अनेन साक्षतोदक-फल-पुष्प-कुश-दूर्वा-पल्लवादितयुत-ताम्बूलेन तुभ्यमहं सम्प्रददे । तेन श्रेयसा त्वं श्रेयोवान् भव ( **इत्याचार्यः** ) भवामि इति ( **यजमानो** ) ब्रूयात् । तत एकपङ्क्त्युपविष्टानामाचार्यादीनां गन्धा-ऽक्षत-पुष्प-पुष्पमाला-वस्त्रा-लङ्कार-दक्षिणादिभिः यथाशक्ति पूजा कार्या ॥ ततस्त आशीर्वादं दद्युः। ततो दानानि कुर्यात् "स्वर्ण-गो-भू-तिलान् दद्यात् सर्वदोषापनुत्तये" इति **धर्मशास्त्रोक्तेरिति** ॥ स्वर्णादीनां दानविधानं तु **दानमयूख-चन्द्रिकादिग्रंथेषु, संस्कारभास्करे** एव वा द्रष्टव्यम् । अत्र ग्रन्थगौरवभयात् तन्न लिख्यते ॥ अयि पूज्याः प्रियबन्धवो बुधाः ! अस्त्यत्र मे किमपि जिज्ञासितम्, यद् ग्रन्थकारैरिदं श्रेयोदानं देवविसर्जनात् पूर्वमेवालेखि किन्तु "संकल्पः स्वस्तिवाग् विप्रवरणं भूतनिस्सृतिः । पञ्चगव्यैर्भूमिशुद्धिर्मुख्यदैवतपूजनम् ॥ अग्निप्रतिष्ठासूर्यादिग्रहस्थापनपूजनम् । देवतान्वाहितिः पात्राऽऽसादनं हविषां कृतिः ॥ यथाक्रमं त्यागहोमाविति पूर्वाङ्गकः क्रमः । पूजास्विष्टं नवाहुत्यो बलिः पूर्णाहुतिस्तथा । पूर्णपात्रविमोकाद्यग्न्यर्चनान्तेऽभिषेचनम् ॥ मानस्तोकेति भूतिश्च देवपूजाविसर्जने । श्रेयोग्रहो दक्षिणादिदानं कर्मेश्वरार्पणम् ॥ क्रमोऽयमुत्तराङ्गानां प्रायः स्मार्तेष्विति स्थितिः" ॥ इति **धर्मसिन्धौ** कर्मणोऽस्य देवपूजा—विसर्जनानन्तरं विधानदर्शनात्कोऽयमभिनवः क्रमः **इति सुधीभिरूहनीयम्** ।

शर-वसिष्ठयोः ॥ गर्ग-गौतम-धौम्या-ऽत्रि-वशिष्ठां-ऽगिरसांस्तथा ॥ ५ ॥ वाक्याच्च नारदादीनां पूर्णं भवतु ते कृतम् ॥ ततः स्थापितदेवता
नामुत्तरपूजनं कृत्वा क्षमापयेत् ॥ अथाग्निपूजनं प्रार्थना विसर्जनं च । गच्छ त्वं भगवन्नग्ने स्वस्थाने कुण्डमध्यतः ॥ हुतमादाय देवेभ्यः शीघ्रं
देहि प्रसीद मे ॥ १ ॥ गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर ॥ यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ॥ २ ॥ ततो नवग्रहादीन् विसर्ज
येत् ॥ अक्षतानादाय ॥ ॐ यान्तु देवगणाः सर्वे पूजामादाय मामकीम् ॥ इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ॥ ३ ॥ ॐ उत्तिष्ठब्रह्मण
स्पतेदेवयन्तंस्त्वेमहे ॥ उपप्रयन्तुमरुतःसुदानवऽइन्द्रप्राशूर्भवासचा ॥ ४ ॥ ॐ यज्ञयज्ञंगच्छयज्ञपतिंगच्छस्वांयोनिंगच्छस्वाहा । एष
तेयज्ञोयज्ञपतेसहसूक्तवाकःसर्ववीरस्तज्जुषस्वस्वाहा ॥ ५ ॥ एवं ग्रहादिदेवान् विसृज्य यज्ञोपकरणादिकमृत्विग्भ्यो दत्त्वा गुर्वादीन्
संपूज्य करौ सम्पुटीकृत्य । मया यत्कृतं देवप्रतिष्ठाकर्म तत्कालहीनं भक्तिहीनं श्रद्धाहीनं द्रव्यहीनं च भवतां ब्राह्मणानां
वचनात्, श्रीविष्णोः प्रसादाच्च सर्वं विधिवत् परिपूर्णमस्तु । ततस्ते ब्राह्मणाः सर्वं कर्म सम्पूर्णमच्छिद्रमस्त्विति वदेयुः । ततो ब्राह्म
णसहस्रमष्टोत्तरशतं पञ्चाशतं विंशतिं वा शक्त्यनुरूपं भोजयित्वा भूयसीं दत्त्वा ॐ यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ १ ॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ॥ स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः
॥ २ ॥ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ॥ हूयते च पुनर्द्वाभ्यां तस्मै यज्ञात्मने नमः ॥ ३ ॥ इत्युक्त्वा त्रिर्विष्णुं स्मृत्वा कुटुम्बजनैः परि
वृतः स्वयं भोजनं कुर्यात् ॥ एवं देवप्रतिष्ठायज्ञं कृत्वा आत्मानं कृतार्थं मन्येत । तत्र सद्यःपक्षे तु मधुकुंकुमादिसर्वद्रव्यैस्तद्दिन एव देवं लेपये
त् । सर्वलेपनद्रव्येषु कपिलाघृतामिश्रणं ज्ञेयम् ॥ इति श्रीरत्नगढनिवासिना पंडितेन गौडश्रीचतुर्थीलालशर्मणा विरचिते सर्वदेवप्रतिष्ठाप्रकाशे
बहुद्रव्यसाध्यो देवस्थापनप्रकारः समाप्तः ॥ ॥ अथ साधारणद्रव्यसाध्यो बौधायनोक्तसंक्षिप्तचलप्रतिष्ठाप्रयोगः । तत्रादौ शुचौ देशे पूर्व

वन्मण्डपकुण्डादिकं कृत्वा प्रतिष्ठादिने नित्यकर्म समाप्य शिल्पिस्थानाद्देवं तत्रानीय आसने निधाय आचान्तः प्राणानायम्य मासाद्युल्लिख्य अस्यां मूर्तौ लिङ्गे वा देवकलासान्निध्यार्थं दीर्घायुर्लक्ष्मीसर्वकामसमृद्धचक्षय्यसुखकामोऽमुकदेवमूर्तिप्रतिष्ठां करिष्ये इति संकल्प्य गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च कृत्वा गुरुमष्टौ चतुरो वा ऋत्विजश्च वृत्वा पूजयेत् । ततो गुरुः मण्डपप्रतिष्ठामग्निस्थापनं वास्तु पूजनं च कृत्वा ग्रहयज्ञं विधाय सर्वतोभद्रमण्डले ब्रह्मादिमण्डलदेवता आवाह्य संपूज्य स्थाप्य दैवत्यं नैवारं चरुं श्रपयित्वाज्यभागान्ते ग्रह होमं कृत्वा पलाशसमिद्भिः प्रत्येकं सहस्रमष्टशतं वा प्रतिदैवतं लोकपालमन्त्रैर्व्याहृतिभिर्वा जुहुयात् तावत्संख्याकमाज्यहोमं च कृत्वा स्थापितदेवतानां क्रमेण समित्तिलाज्यानां प्रतिद्रव्यं दशाहुतीर्हुत्वा अष्टसहस्रमष्टशतं वा प्रधानदेवतामन्त्रेण जुहुयात् । ततो यजमानो गुरवे वरं दद्यात् । गुरुर्देवं नत्वा । स्वागतं देवदेवेश विश्वरूप नमोऽस्तु ते । शुद्धेऽपि त्वदधिष्ठाने शुद्धिं कुर्मः सहस्व तामिति प्रार्थ्य । ॐ उत्ति ष्ठब्रह्मणस्पते ० इति सर्त्विगुत्थाय वेद्यां नवीनपीठोपरि वा देवं निधाय मृज्जलैः पञ्चगव्यैः पञ्चामृतैश्च पृथक् तत्तन्मन्त्रैः संस्नाप्य ततः ( लिङ्गं चेन्नमस्ते रुद्र इत्यष्टाभिः संस्नाप्य ) ॐ शन्नोदेवीति संस्रावकलशेन संस्नाप्य । घृताभ्यङ्गमुद्वर्तनमुष्णोदकेन क्षालनं च कृत्वा सुगन्धेनानु लिप्य पुनश्चतुर्भिः कलशैः समुद्रज्येष्ठा इत्याद्यभिषेकमन्त्रैः चतुर्भिः क्रमेणाभिषिच्य औदुम्बरादिपीठे देवमुपवेश्य परितोऽष्टदिक्षु सजलकु म्भान्पूर्वादिक्रमेण संस्थाप्य तेषु गन्धपुष्पदूर्वाः क्षिप्त्वा प्रथमकुम्भे सप्तमृदः ॥ १ ॥ द्वितीये पञ्चपल्लवान् ॥ २ ॥ तृतीये सप्तधान्यं कुशांश्च ॥ ३ ॥ चतुर्थे पञ्चरत्नं शान्त्युदकं च ॥ ४ ॥ पञ्चमे फलपुष्पाणि प्रस्रवणोदकं वा ॥ ५ ॥ षष्ठे यवान् ॥ ६ ॥ सप्तमे सम्पातोदकम् ॥ ७ ॥ अष्टमे सर्वौ षधीः ॥ ८ ॥ ( निक्षिप्य ) ॐ आपोहिष्ठामयोभुव इति तिसृभिः । ॐ हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः ॥ अग्निं या गर्भं दधिरे विरूपास्ता नऽआपः शꣳस्योना भवन्तु ॥ १ ॥ यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यं जनानाम् ॥ मधुश्च्युतः

शुचयो याः पावकास्ता न आपः शश्स्योना भवन्तु ॥ २ ॥ यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति ॥ याः पृथिवीं पयसोन्दन्ति शुक्रास्ता न आपः शश्स्योना भवन्तु ॥ ३ ॥ शिवेन मा चक्षुषा पश्यतापः शिवया तनुवो पस्पृशत त्वचं मे ॥ सर्वाँ अग्नीँ रप्सुषदो हुवेवो मयि वर्चो बलमोजो निधत्त ॥ ४ ॥ इति चतुष्टयेन च । पवमानः सुवर्जन इत्यनुवाकेन पूर्वोक्तेन संस्नाप्य अहते द्वे वाससी परिधायोपवीतं दत्वा गन्धपुष्पधूपदीपैः संपूज्य । ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ॥ सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १ ॥ य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः । यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥ २ ॥ यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ ३ ॥ यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः । यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥ ४ ॥ येन द्यौरुग्रा पृथिवी च दृढा येन स्वः स्तभितं येन नाकः ॥ यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥ ५ ॥ यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ॥ यत्राधिसूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥ ६ ॥ आपो ह यद् बृहतीर्विश्वमायन् गर्भं दधाना जनयन्तीरग्निम् ॥ ततो देवानां समवर्ततासुरेकः कस्मै देवाय हविषा विधेम ॥ ७ ॥ यश्चिदापो महिनापर्यपश्यद्दक्षं दधाना जनयन्ती र्यज्ञम् । यो देवेष्वधि देव एकआसीत् कस्मै देवाय हविषा विधेम ॥ ८ ॥ मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान ॥ यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ॥ ९ ॥ इति नवभिर्मन्त्रैरष्टभिः पिष्टदीपैर्नीराजयेत् ॥ अथ नेत्रोन्मीलनकर्म । सुवर्णादिपात्रे मधुघृतं गृहीत्वा हिरण्यशलाकया ॐ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ॥ इत्यर्धेन ॥ ॐ तेजोऽसि शुक्रमस्यमृतमसि धामनामासि प्रियं देवानामनाधृष्टं देवयजनमसि ॥ इति मन्त्रेण च ॥ ॐ नमो भगवते तुभ्यं शिवाय हरये नमः ॥ हिरण्यरेतसे

विष्णो विश्वरूपाय ते नमः ॥ इति च ॥ दक्षिणसव्ये नेत्रे मन्त्रावृत्त्या लिखेत् । ततः ॐ अञ्जन्तित्वामध्वुरेदे॑वयंतोवनस्पतेमधुनादैव्येनयदूर्ध्व स्तिष्ठाद्रविणेहधत्ताद्यद्वाक्षयोमातुरस्या उपस्थे १ इति अञ्जनेन अञ्जयित्वा पुनः मधुघृतशर्कराभिः । ॐ देवस्य त्वा सवितुः प्रसवे॰ इति मन्त्रेणाञ्जयेत् । अञ्जनेन पुनरञ्जयेत् । ततो भक्ष्यभोज्यादर्शादि दर्शयेत् ( तदाऽग्रे कोऽपि न तिष्ठेत् ) अत्र कर्ताचार्यादिभ्यो दक्षिणां दद्यात् । ततः पुरुषसूक्तेन स्तुत्वा वंशपात्रे पञ्चवर्णान्वितमन्नं प्रक्षिप्य देवं नीराजयित्वा रुद्राय चतुष्पथे दद्यात् ॥ मन्त्रस्तु ॐ नमो रुद्राय सर्वभूताधिपते दीप्तशूलधरायोमादयिताय विश्वाधिपतये रुद्राय वै नमो नमः शिवमगर्हितं कर्मास्तु स्वाहा ( अश्वत्थपर्णे ) भूतेभ्यो नमः ॥ इति बलिं दत्त्वाऽऽचामेत् ॥ ततः सर्वतोभद्रमण्डलस्थदेवान् गन्धादिभिः संपूज्य मण्डलमध्ये सुप्रतिष्ठितो भवेति देवं निवेश्य गन्धाद्यैः संपूज्य। कुण्डे मण्डलदेवानां ( नामभिस्तिलाज्येन दश दशाहुतीर्हुत्वा पुष्पाञ्जलिं समर्प्य ॐ नमोमहद्भ्योनमोअर्भकेभ्यो नमोयुवभ्यो नमआशिनेभ्यः । यजामदेवान्यदिशक्नवाममाज्यायसः शंसमावृक्षिदेवाः ॥ १ ॥ इति देवं नत्वा मण्डलादुत्तरतः स्वस्तिके मञ्चकं तदु परि शय्यां कृत्वा । ॐ उत्तिष्ठ ब्रह्मणस्पते इति देवमुत्थाप्य मङ्गलघोषैः शय्यायां प्राङ्मुखमुपवेश्य । ॐ सहस्रशीर्षा इत्यादिपुरुषसूक्तेन । उत्तरनारायणेन च स्तुत्वा देवे न्यासं कुर्यात् ॥ तद्यथा ॐ पुरुषात्मने नमः । ॐ प्राणात्मने नमः । ॐ प्रकृतितत्त्वाय नमः। बुद्धितत्त्वाय नमः । अहङ्कारतत्त्वाय नमः। मनस्तत्त्वाय नमः। इति सर्वाङ्गेषु । प्रकृतितत्त्वाय नमः। ॐ बुद्धितत्त्वाय नमः ( हृदि ) शब्दतत्त्वाय नमः ( शिर सि ) स्पर्शतत्त्वाय ( त्वचि ) । रूपतत्त्वाय ( हृदि ) रसतत्त्वाय ( बस्तौ ) गन्धतत्त्वाय ( पादयोः ) श्रोत्रतत्त्वाय ( कर्णयोः ) । त्वक् तत्त्वाय ( सर्वशरीरे ) । चक्षुस्तत्त्वाय ( चक्षुषोः )। जिह्वातत्त्वाय ( जिह्वायाम् )। घ्राणतत्त्वाय ( घ्राणे )। वाक्तत्त्वाय ( वाचि ) । पाणित त्वाय ( पाण्योः ) पादतत्त्वाय ( पादयोः ) पायुतत्त्वाय ) ( पायौ ) । उपस्थतत्त्वाय ( उपस्थे ) पृथिवीतत्त्वाय ( पादयोः )। अतत्त्वाय नमः

( बस्तौ )। तेजस्तत्त्वाय ( हृदि ) वायुतत्त्वाय ( घ्राणे ) आकाशतत्त्वाय ( शिरसि ) रजस्तत्त्वाय तमस्तत्त्वाय सत्त्वतत्त्वाय इति ( देहे ) ॥ इति तत्त्वन्यासं कृत्वा पुरुषसूक्तन्यासं कुर्यात् ॥ ॐ सुहस्रशीर्षापुरुषः ॥ १ ॥ ॐ पुरुषऽएवेदꣳ ॥ २ ॥ इति ( करयोः )। एतावानस्य० ॥ ३ ॥ त्रिपादूर्ध्वे ति (पादयोः) ॥४॥ ततोव्विराडजायत०॥ ५ ॥ तस्माद्यज्ञात्सर्वहुतꣳसंभृतमिति ( जान्वोः ) ॥ ६ ॥ तस्माद्यज्ञात्सर्वहुतऽऋचः ॥ ७ ॥ तस्मादश्वा इति ( कट्योः ) ॥८॥ तं य्यज्ञमिति ( नाभौ ) ॥९॥ यत्पुरुषं व्यदधुः ( हृदि ) ॥ १० ॥ ब्राह्मणोस्येति ( कण्ठे ) ॥११॥ चन्द्रमामनस०॥ १२ ॥ नाभ्याऽआ सीदिति (बाह्वोः) ॥ १३ ॥ यत्पुरुषेणेति ( मुखे ) ॥१४॥ सुप्तास्यासन्परिधयस्त्रिः इति ( नेत्रयोः ) ॥ १५ ॥ यज्ञेनयज्ञमिति ( शिरसि ) ॥ १६ ॥ इति पुरुषसूक्तन्यासं कृत्वा ततः सुखशायी भवति शय्यायां देवं स्वापयित्वा सम्पूज्याधिवासयेत् ॥ ( ततो मण्डलशय्ययोर्मध्ये न गन्तव्यम्, इति प्रेषं दत्त्वा ) ततो मण्डलदेवताभ्यो नामभिश्चरुणा बलीन् अथवा उपहारनिवेदनं कुर्यात् । तत्र ब्रह्मणे सर्वान्नम् । इन्द्राय घृतान्नं सोदकम् । अग्नये, आज्यान्नम् । यमाय, माषान्नम् । निर्ऋतये कृष्णव्रीह्यन्नं सघृतम् । वरुणाय नवनीतौदनम् । वायवे यवौदनम् । कुबे राय प्रैयङ्गवम् । ईशानाय पायसम् । सर्वेभ्यो वा पायसम् । ततो नैवारं चरुं श्रपयित्वा तेन शयनस्थले इन्द्रादिदिक्पालदेवताभ्यो बलीन् दत्त्वा रात्रिं नयेदित्यधिवासनम् । ततः प्रातररुणोदये उत्तिष्ठ ब्रह्मणस्पते इति मन्त्रेण वाद्यादिभिर्देवमुत्थाप्य मूलमन्त्रेणोपस्थाय चरुं श्रपयित्वा घृतेनाभिघार्य प्रधानदेवमन्त्रेणाष्टोत्तरसहस्रमष्टशतं वा हुत्वा । शेषचरुणा ॐ अग्नये स्वाहा । सोमाय स्वाहा । ॐ धन्वन्तरये स्वाहा । ॐ कुह्वै स्वाहा । ॐ अनुमत्यै स्वाहा । ॐ प्रजापतये स्वाहा । ॐ परमेष्ठिने० । ॐ ब्रह्मणे० । ॐ अग्नये० । ॐ सोमाय० । ॐ अग्नयेऽन्नादाय० । ॐ अग्नयेऽन्नपतये० । ॐ प्रजापतये० । ॐ विश्वेभ्यो देवेभ्यः । ॐ सर्वेभ्यो देवेभ्यः । ॐ भूर्भुवः स्वः अग्नये स्विष्टकृते स्वाहा । इति जुहुयुः ( ( अत्राचार्याय धेनुदानम् ) तत उदिते सूर्ये गुरुर्वेद्यामेव देवमभिमुखं कृत्वा । याऽओषधीरितिमन्त्रेण । रत्न-पुष्प-मूल-

फलौषध्यादि दर्शयित्वा ताम्रपात्रे शान्तिजलमादाय प्रधानदेवमन्त्रेण शतवारं दशवारं वाभिमन्त्र्य देवाशिरसि अभिषिच्य ॥ ॐ उत्तिष्ठ ब्रह्मण स्पते इत्युत्थाय ॥ ॐ विश्वतश्चक्षुरित्युपस्थाय देवस्य पुरस्तात् कृताञ्जलिः जपेत् ॥ ॐ ब्रह्म-विष्णु-रुद्रेभ्यो नमः । ॐ दिक्पालेभ्यो नमः । ॐ वसुभ्यो नमः । ॐ रुद्रेभ्यो नमः । ॐ आदित्येभ्यो नमः । ॐ अश्विभ्यां नमः । ॐ मरुद्भ्यो नमः । ॐ कुबेराय नमः । ॐ गङ्गादिमहानदीभ्यो नमः । ॐ अग्नीषोमाभ्यां नमः । ॐ द्यावापृथिवीभ्यां नमः । ॐ इन्द्राग्निभ्यां० । ॐ धन्वन्तरये नमः। ॐ सर्वेशाय नमः । ॐ विश्वेभ्यो देवेभ्यो नमः । ॐ ब्रह्मणे नमः । इति जपित्वा देवस्य पुरतो यजमानमभिषिच्य देवमन्त्रं जप्त्वा देवं ध्यात्वा । प्रतिष्ठितपरमेश्वराय नमः इति पुष्पाञ्जलिं दत्त्वा ध्रुवसूक्तेन प्रधानदेवमन्त्रेण पुरुषसूक्तेन गायत्र्या व्याहृतिभिर्देवमर्चायां प्रतिष्ठाप्य प्राणप्रतिष्ठां कुर्यात् । यथा । ॐ अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्माविष्णुरुद्रा ऋषयः ऋग्यजुःसामानि छन्दांसि क्रियामयवपुः प्राणाख्या देवता आं बीजं क्रौं शक्तिः प्राणप्रतिष्ठायां विनियोगः । ब्रह्म विष्णु-रुद्र-ऋषिभ्यो नमः ( शिरसि ) ऋग्-यजुः-सामच्छन्दोभ्यो नमः (मुखे) प्राणाख्यदेवतायै नमो ( हृदि )। आं बीजाय नमो (गुह्ये)। क्रौं शक्तये नमः ( पादयोः )। ॐ कं खं गं घं ङं, अं पृथिव्यप्तेजोवाय्वाकाशात्मने, आं ( हृदयाय नमः )। ॐ चं छं जं झं ञं, इं शब्दस्पर्शरूपरसगन्धात्मने, ईं ( शिरसे स्वाहा )। ॐ टं ठं डं ढं णं उँ श्रोत्रत्वक्चक्षुजिह्वाघ्राणात्मने, ऊँ ( शिखायै वषट् ) । ॐ तं थं दं धं नं, एं वाक्पाणिपादपायूपस्थात्मने, ऐं ( कवचाय हुम् )। ॐ पं फं बं भं मं, ओं वचनादानगतिविसर्गानन्दात्मने, औं ( नेत्रत्रयाय वौषट् )। ॐ यं रं लं वं शं षं सं हं ळं क्षं, अं मनोबुद्ध्यहङ्कारचित्तात्मने, अः ( अस्त्राय फट् )। एवमात्मनि देवे च कृत्वा । देवं स्पृष्ट्वा जपेत् । ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः देवस्य प्राणा इह प्राणाः । ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः देवस्य जीव इह स्थितः । ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः देवस्य सर्वेन्द्रियाणि० । ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः देवस्य वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य स्वस्तये सुखेन सुचिरं

तिष्ठन्तु स्वाहा ॥ प्रतिमायाः लिङ्गस्य वा हृद्यङ्गुष्ठं दत्त्वा जपेत् । अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाश्चरन्तु च । अस्यै देवत्वमर्चायै माम हेति च कश्चन ॥ १ ॥ प्रणवेन सन्निरुद्ध्य सजीवं ध्यात्वा ॥ ॐ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत् ॥ ध्रुवाश्चेमे नगाः सर्वे ध्रुवाः पति कुले स्त्रियः ॥ २ ॥ इत्यृचं जप्त्वा देवकर्णे गायत्रीं देवमन्त्रं च जप्त्वा पुरुषसूक्तेन स्तुत्वा पाद-नाभि-शिरः स्पृष्ट्वा ॐ इहैवैधिमापच्ययोष्ठाः पर्वतइवाविचाचलिः ॥ इन्द्रइवेहध्रुवस्तिष्ठेहराष्ट्रमुपधारय ॥ १ ॥ इति मन्त्रं त्रिर्जपित्वा प्रार्थयेत् ॥ स्वागतं देवदेवेश मद्भाग्यात्त्वमिहागतः ॥ प्रा कृतं त्वमदृष्ट्वा मां बालवत् परिपालय ॥ १ ॥ धर्मार्थकामसिद्ध्यर्थं स्थिरो भव शिवाय नः ॥ सान्निध्यं तु महादेव स्वार्चायां परिकल्पय ॥ २ ॥ यावच्चन्द्रावनीसूर्यास्तिष्ठन्त्यप्रतिघातिनः ॥ तावत् त्वयात्र देवेश स्थेयं भक्तानुकम्पया ॥ ३ ॥ भगवन् देवदेवेश त्वं पिता सर्वदेहिनाम् ॥ येन रूपेण भगवन् त्वया व्याप्तं चराचरम् ॥ ४ ॥ तेन रूपेण देवेश अर्चायां सान्निधौ भवेति नमेत् ॥ ततः पुरुषसूक्तेन षोडशोपचारैः संपूज्य ॐ सच्चिदानन्दं ब्रह्मैव भक्तानुग्रहाय गृहीतविग्रहं स्वायुधाढ्यं निजवाहनाद्युपेतं निजहृत्कमले स्थितं सर्वलोकसाक्षिणमणीयांसं परमेष्ठ्यसि पर मां श्रियं गमय ॥ १ ॥ इति मन्त्रेण पुष्पाञ्जलावागतं देवं विभाव्य मूर्त्तौ न्यसेत् । ततः स्वस्वमन्त्रैः पूर्ववत् परिवारदेवताः प्रतिष्ठाप्य कङ्कणं विसृज्य प्रतिमायां निजवाहना-ऽऽयुध-परिवारादिकं ध्यात्वा सुमुहूर्त्ते प्रधानमन्दिरे वेदिकायां संस्थाप्य पुनः पूजयित्वा मुद्रां प्रदर्श्य मूलमन्त्र मष्टोत्तरशतं जपित्वा स्तुत्वा नत्वाऽऽचम्य स्विष्टकृदादि पूर्णाहुतिपर्यन्तं कर्म समाप्याऽऽचार्याय द्वादश तिस्र एकां वा गां दत्त्वा ऋत्विग्भ्यो दक्षिणां दत्त्वा शतं विंशतिं वा विप्रान् भोजयेत् ॥ अन्यत्सर्वं पूर्ववज्ज्ञेयम् ॥ इति चलप्रतिष्ठाप्रयोगः ॥ अथ जीर्णोद्धारविधिः । यजमानः शुभदिने उद्धार्यादक्षिणस्यामैशान्यां वा पश्चिमद्वारैकतोरणं मण्डपं विधाय तन्मध्यभागे वर्तुलां चतुरस्रां वा वेदीं तत्पश्चिमे वास्तुपीठमुत्तरे वालुकायाः स्थण्डिलं च कृत्वा । देशकालौ संकीर्त्य अमुकशर्माऽहम् ईश्वरप्रीतिकामो जीर्णादिदोषदुष्टलिंगस्य प्रतिमाया वा जीर्णोद्धारं

करिष्ये इति संकल्प्य । गणेशपूजा-स्वस्तिवाचन-मातृकापूजन-नान्दीश्राद्धादि ( सर्व कर्म ) नूतनप्रतिष्ठावत्कृत्वा । तद्वद्देवाचार्यादीन् वृत्वा वस्त्रालङ्कारमधुपर्कादिभिस्तान् पूजयित्वा मण्डपप्रतिष्ठां वास्तुपूजनं सर्वतोभद्रादिदेवान् संस्थाप्य पीठाद्यौ प्रणवेनासनपूजनं कृत्वा ॥ ॐ व्यापकेश्वराय एह्येहि नमः । ॐ व्यापकेश्वराय ( हृदयाय नमः )। ॐ व्यापकेश्वराय ( शिरसे स्वाहा ) । ॐ व्यापकेश्वराय ( शिखायै वषट् )। ॐ व्यापकेश्वराय ( कवचाय हुम् )। ॐ व्यापकेश्वराय ( अस्त्राय फट् )। इति मन्त्रैः शिवं पूजयेत् । अन्यदेवतो द्धारे मूलमन्त्रेणार्चयेत् । अघोरेति मन्त्रमष्टोत्तरशतं जप्त्वा । अग्निं संस्थाप्याऽऽज्यभागान्तं हुत्वा । लिङ्गचालनार्थं लिङ्गमन्त्रेण अघोरेण च तिलाहु तिसहस्रं हुत्वा मण्डलदेवताहोमं कृत्वा इन्द्रादिभ्यो नाम्ना बलिं दत्त्वा जीर्णं देवं प्रणवेन संपूज्य प्रार्थयेत् ॥ जीर्णभग्नमिदं देव सर्वदोषावहं नृणाम् ॥ अस्योद्धारे कृते शान्तिः । शास्त्रेऽस्मिन् कथिता त्वया ॥ जीर्णोद्धारविधानं च नृपराष्ट्रविवर्धनम् ॥ तदत्राधिष्ठितं देवं प्रोद्धरामि तवा ज्ञया ॥ इति देवस्य जीर्णदोषं श्रावयित्वा ॥ क्षीरा-ऽऽज्य-मधु-दूर्वा-समिद्भिर्देवमन्त्रेणा-ऽष्टोत्तरशतं हुत्वा तिलैः सहस्रं पायसेन शतं च हुत्वा लिङ्गं प्रार्थयेत् ।। लिङ्गरूपं समागत्य येनेदं समधिष्ठितम् ॥ यायास्त्वं संमितं स्थानं संत्यज्यैव शिवाज्ञया ॥ १ ॥ अत्र स्थाने च या विद्या सर्वविद्येश्वरैर्युता ॥ शिवेन सह सन्तिष्ठेति मन्त्रितजलेनाऽभिषिच्य विसर्जयेत् ॥ शिल्पियुतः शिवं साङ्गं विसृज्य । सौवर्णख नित्रेण खात्वा लिङ्गमादाय रथमारोप्य वामदेवाय नम इति नद्यादौ क्षिपेत ॥ प्रतिमां तु प्रणवेन क्षिपेत् । दारुजं मधुनाभ्यज्याऽघोरेण दहेत् । हेमादिमयं योग्यं कृत्वा तदेव पूर्ववत् स्थापयेत् । प्रासादे त्वयं विशेषः । प्रासादं मन्त्रवत्खड्गेन छूरिकया वा संयोज्य नूतनप्रासादसिद्धिपर्य न्तं खड्गादिकमर्चयित्वा प्रासादे सिद्धे खड्गादिमन्त्रान् यथास्थानं प्रतिष्ठाकाले न्यस्य यजमानमभिषिच्य । ततो लिङ्गं प्रतिमां वा तत्रैव विधिना संस्थाप्य ध्रुवा द्यौरित्यादिमन्त्रान् पठित्वा स्थिरीकृत्य बहु संपूज्य प्रार्थयेत् ॥ भगवन् भूतभव्येश लोकनाथ जगत्पते ॥ जीर्ण

अर्न्चा

लिङ्गसमुद्धारः कृतस्ते चाज्ञया मया ॥ १ ॥ अग्निना दारुजं दग्धं क्षिप्तं शैलादिकं जले ॥ प्रायश्चित्ताय देवेश अघोरास्त्रेण तर्पितम् ॥ २ ॥ ज्ञानतोऽज्ञानतो वापि यथोक्तं न कृतं यदि ॥ तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादान्महेश्वर ॥ ३ ॥ कर्तू राज्ञः प्रजानां च शान्तिर्भवतु सर्वदा ॥ अस्माकं शिल्पिनां चैव सुप्रीतो भव सर्वदा ॥ ४ ॥ इति नत्वा ॥ पूर्णाहुत्यन्तं समाप्याऽचार्यादिभ्यो दक्षिणां दत्त्वा देवान् विसृज्य ब्राह्मणान् भोजयेत् । एष संक्षेपतः प्रोक्तो जीर्णोद्धारविधिस्तव ॥ सर्वेषामेव देवानामेष साधारणः स्मृतः ॥ १ ॥ यो जीर्णविधिना बिम्बं संस्कुर्यान्मानवो भुवि ॥ फलं दशगुणं तस्य मूलान्नास्त्यत्र संशयः ॥ २ ॥ वापी-कूप-तडागानां सुरधाम्नां सदानघ ॥ प्रतिमानां सभानां च संस्कर्ता यो नरो भुवि ॥ ३ ॥ पुण्यं शतगुणं तस्य भवेन्मूलान्न संशयः ॥ संशयोऽत्र न कर्तव्यो जीर्णसंस्कारकर्मणि ॥ ४ ॥ मूलाद्दशगुणं प्रोक्तं पुण्यं कूपे प्रतिष्ठिते ॥ प्रतिमायां शतगुणं कूपादेः परिकीर्तितम् ॥ प्रतिमादेर्दशगुणं जीर्णं संस्करणाद्भवेत् ॥ ५ ॥ स्फुटित-विशीर्ण-श्वपचसेवितानां लिङ्गानां तादृशीनां बाहु-पाद-शिरः-कर्ण-नासा-ऽऽस्यहीनानां ( देवप्रतिमानां च ) विध्युक्तप्रकारेण चालनं जलादौ प्रतिपादनं च कृत्वा नूतनप्रकारेण तस्मिन्नेव स्थाने पूर्वसजातीयद्रव्यनिर्मितं तन्मानं तदाकारं लिङ्गं तादृशीं प्रतिमां वा स्थापयेत् ॥ निषिद्ध-दूषित-निषिद्ध-जल-मद्यस्पृष्ट-विप्रक्षतज-दूषित-पतिताद्यर्चित--श्लेष्म-विण्मूत्रादिदूषितानां स्वस्थानस्थितानामेव पुनःसंस्कारो, नोद्धारो नापि प्रतिपत्तिः । ताम्रादिधातुमूर्तीनां चोर-चाण्डालादिस्पर्शे ताम्रादिधातुशुद्धिं कृत्वा पुनः प्रतिष्ठा । अर्चाभङ्गादौ तद्दिने उपवासः ॥ इति जीर्णोद्धारविधिः ॥ अनेन महेशः प्रीयताम् ॥ इति श्रीबीकानेरस्य विषयान्तर्गतरत्नगढनिवासिना श्रीवसिष्ठकुलोद्भवेन श्रीरामकृष्णपौत्रेण श्रीकस्तूरीचन्द्रसूनुना श्रीमहादेवभक्तवाजसनेयिना पण्डितगौडश्रीचतुर्थीलालशर्मणा कृते प्रतिष्ठाप्रकाशे सप्तमपरिच्छेदः समाप्तः ॥ ७ ॥ ❀ ॥ ❀ ॥ ❀ ॥

श्रीगणेशाय नमः ॥ अथ सर्वदेवप्रतिष्ठाङ्गभूतं चतुर्थीकर्म । तच्चतुर्थदिने द्वितीयदिने वा कुर्यात् ॥ तत्र आचार्यो मूर्तिपयजमानद्वारपालादिभिः सह मण्डपं पश्चिमद्वारेण प्रविश्य स्नानसम्भारादिकमुपकल्प्य गणपत्यादिस्मरणं विधायाऽग्निस्थापनं कुर्यात् ॥ तत्र क्रमः । कुण्डं स्थण्डिलं वा कुशैः परिसमूह्य तान् कुशानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्फ्येन स्रुवेण वा प्रागग्रप्रादेशमात्रं त्रिरुत्तरोत्तरक्रमेणोल्लिख्य उल्लेखन क्रमेणाऽनामिकाङ्गुष्ठाभ्यां मृदमुद्धृत्य जलेनाऽभ्युक्ष्य तत्र ॐ अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे ॥ देवाँ २ आसादयादिह ॥ इति मन्त्रेणाग्निं स्वाभिमुखं निदध्यात् । ततः पुष्प-चन्दन-ताम्बूल-वस्त्राण्यादाय । ॐ अद्य कर्त्तव्यचतुर्थीहोमकर्मणि कृताऽकृतावेक्षणरूपब्रह्मकर्म कर्तुममुक गोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्प-चन्दन-ताम्बूल-वासोभिर्ब्रह्मत्वेन त्वामहं वृणे इति ब्रह्माणं वृणुयात् । एवं होतारमपि वृणुयात्। ॐ वृतोस्मीति प्रतिवचनम्। यथा विहितं कर्म कुर्विति यजमानोक्ते करवाणीति ब्राह्मणो वदेत्। ततोऽग्नेर्दक्षिणतः शुद्धमासनं दत्त्वा तदुपरि प्रागग्रान् कुशानास्तीर्य तत्र उदङ्मुखं ब्राह्मणं तदभावे पञ्चाशत्कुशनिर्मितमुपवेशयेत् । ततः प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्याग्नेरुत्तरतः कुशोपरि निदध्यात् । ततः परिस्तरणम् । बर्हिषश्चतुर्थभागमादाय आग्नेय्यादीशानान्तं, ब्रह्मणोऽग्निपर्यन्तं, नैर्ऋत्याद्वायव्यान्तम्, अग्नितः प्रणीतापर्यन्तम् । ततोऽग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयं, पवित्रकरणार्थं साग्रमनन्तर्गर्भकुशपत्रद्वयं, प्रोक्षणीपात्रम्, आज्यस्थाली, चरुस्थाली, सम्मार्जनकुशत्रयम्, उपयमनार्थं वेणीरूपं कुशत्रयम्, समिधस्तिस्रः, स्रुवः, आज्यम्, तण्डुलपूर्णपात्रम्, चर्वर्थास्तण्डुलाः दक्षिणा वरो वा । एतानि पवित्रच्छेदनकुशानां पूर्व-पूर्वदिशि क्रमेणाऽऽसादनीयानि। ततः पवित्रच्छेदनकुशैः पवित्रे छित्त्वा प्रादेशमितपवित्रकरणम् । ततः सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निक्षिप्य त्रिरुत्पवनं, ततः प्रोक्षणीपात्रस्य सव्यहस्ते करणम्, पवित्रेण त्रिरुद्दिङ्गनं, प्रणीतोदकेन प्रोक्षणीप्रोक्षणम् । प्रोक्षणीजलेन

यथाऽऽसादितवस्तुसेचनम् । ततोऽग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं निधाय । आज्यस्थाल्यामाज्यनिर्वापः । चरुपात्रे प्रणीतोदकमा
सिच्य आसादितांस्तण्डुलान् प्रक्षिप्य ततोऽधिश्रयणम् ततो ज्वलत्तृणादिना हविर्वेष्टयित्वा प्रदक्षिणक्रमेण पर्यग्निकरणं ततोऽधोमु
खस्य स्रुवस्य प्रतपनम् । संमार्जनकुशानामग्रैरन्तरतः, मूलैर्बाह्यतः स्रुवसंमार्जनं, प्रणीतोदकेनाऽभ्युक्ष्य पुनः प्रतप्य स्रुवं दक्षिणतो निद
ध्यात् । तत आज्यस्याग्नेरवतारणं चरुमुत्थापनं तत आज्यस्य प्रोक्षणीवदुत्पवनम् अवेक्ष्य सत्यपद्रव्ये तन्निरसनं, पुनः प्रोक्षणीवदुत्पवनम्
उपयमनकुशान् वामहस्ते कृत्वा उत्तिष्ठन् प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ धृताक्ताः समिधस्तिस्रः क्षिपेत् । तत उपविश्य प्रोक्षणीजले
नाग्निं पर्युक्ष्य पवित्रं प्रणीतापात्रे निधाय ब्रह्मणान्वारब्धः पातितदक्षिणजानुर्जुहयात् ( तत्राऽऽघारादारभ्याऽऽहुतिचतुष्टये तत्तदाहुत्यनन्तरं
स्रुवावस्थिताज्यं प्रोक्षणीपात्रे क्षिपेत् ) ॐ प्रजापतये स्वाहा इदं प्रजापतये० ( इति मनसा )। ॐ इन्द्राय स्वाहा इदमिन्द्राय०
( इत्याघारौ ) । ॐ अग्नये स्वाहा, इदमग्नये० । ॐ सोमाय स्वाहा, इदं सोमाय० ·( इत्याज्यभागौ ) हुत्वा, स्थापितदैवत्यचरुणा
पञ्चब्रह्मभिरङ्गसहितैः सहस्राहुतिहोमं कुर्यात् । ( शिवप्रतिष्ठायां ब्रह्ममन्त्रा यथा ) ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधि
पतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मेऽअस्तु सदा शिवोम् स्वाहा ॥ इदं शिवाय ॥ १ ॥ ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि ॥
तन्नो रुद्रः प्रचोदयात् स्वाहा ॥ इदं शिवाय ॥ २ ॥ ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ॥ सर्वेभ्यः सर्वशर्वेभ्यो नमस्तेऽ
अस्तु रुद्ररूपेभ्यः स्वाहा ॥· इदं शिवाय० ॥ ३ ॥ ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः
कलविकरणाय नमो बलविकरणाय नमः स्वाहा ॥ इदं शिवाय० ॥ ४ ॥ ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो
नमः । भवे भवेनातिभवे भवस्व मां भवोद्भवाय नमः स्वाहा ॥ ५ ॥ इदं शिवाय० ॥ इति पञ्च ब्रह्ममन्त्राः । अथाङ्गमन्त्राः । ॐ अद्भ्यः संभृतः

पृथिव्यै रसाच्च विश्वकर्मणः समवर्त्तताग्रे । तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्त्यस्य देवत्वमाजानमग्रे स्वाहा ॥ इदं शिवाय० ॥ १ ॥ ॐ वेदाहमेतम्पुरुषम्महान्तमादित्यवर्णन्तमसः पुरस्तात् ॥ तमेव विदित्त्वातिमृत्त्युमेति नान्यः पन्था विद्यतेऽयनाय स्वाहा ॥ इदं शिवाय० ॥ २ ॥ ॐ प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते ॥ तस्य योनिम्परिपश्यन्ति धीरास्तस्मिन्हतस्थुर्भुवनानि विश्वा स्वाहा ॥ इदं० ॥ ३ ॥ ॐ यो देवेभ्य आतपति यो देवानाम्पुरोहितः ॥ पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये स्वाहा ॥ इदं० ॥ ४ ॥ ॐ रुचं ब्राह्मञ्जनयन्तो देवाऽअग्रे तदब्रुवन् ॥ यस्त्वैवम्ब्राह्मणो विद्यात्तस्य देवाऽअसन्वशे स्वाहा ॥ इदं शिवाय० ॥ ५ ॥ ( इत्यङ्गमन्त्राः ) ततो घृतेन तिलैर्वा गौरीर्मिमायेति मन्त्रेणाऽष्टोत्तरशतं तत्पत्न्यै जुहुयात् । ॐ गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ॥ अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमेव्योमन् स्वाहा १ इदं गौर्य्यै १०८ ( इति शिवस्य चतुर्थीकर्म ) एवमन्यदेवविषयेऽपि पूर्ववत्, स्थापितदेवानां तत्तद्दैवत्यं चरुं श्रपयित्वा स्वमन्त्रैः पत्नीमन्त्रैश्च सहस्रमष्टोत्तरशतं वा होमं कुर्यात् । तद्यथा [ विष्णुप्रतिष्ठायाम् ] ॐ इदम्विष्णुर्विचक्रमे त्रेधा निदधे पदम् ॥ समूढस्य पांसुरे स्वाहा ॥ इदं विष्णवे० ॥ १ ॥ ॐ विष्णोरराट० ॥ २ ॥ ॐ नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् स्वाहा ॥ इति विष्णवे० ॥ ३ ॥ [ अङ्गमन्त्राः पूर्वोक्ताः ] पत्नीमन्त्रस्तु ॐ श्रीश्च ते लक्ष्मी श्चेति० । इदं लक्ष्म्यै० [ सूर्यप्रतिष्ठायां तु ] ॐ आकृष्णेन रजसा इत्यादिभिः । पत्नीमन्त्रस्तु ॐ उषस्ताच्चित्रमाभरास्मभ्यं वाजिनीवति ॥ येन तोकञ्च तनयञ्च धामहे स्वाहा ॥ इदं प्रभायै० इति । [ गणेशप्रतिष्ठायाम् ] ॐ गणानांत्वा० नमो गणेभ्यो गणपति० गणेशगायत्र्या० । इत्यादिभिः ॥ [ अङ्गमन्त्रास्तु सर्वेषां पूर्वोक्ता एव ] ॥ ततो होमान्ते गुरुः शालितोयेन मूर्तिं सिक्त्वा निर्माल्यमपसार्य पुनः पूजयित्वा एकाशीतिघटान् अष्टौ चतुरो वा सौवर्णान् राजतान् ताम्रान् सर्वाभावे मृन्मयान् वोपकल्प्य तेषु ॐ शंनो देवीरभिष्टयऽआपो भवन्तुपीतये ॥

शंय्योरभिस्रवन्तु नः ॥ १ ॥ ॐ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ॥ महेरणाय चक्षसे ॥ ॐ यो वः शिवतमो रसस्तस्य भाजयतेह नः ॥ उशतीरिव मातरः ॥ २ ॥ ॐ तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ ॥ आपो जनयथा च नः ॥ ३ ॥ एभिर्मन्त्रैरुद्धृतं तीर्थजलं प्रक्षिप्य मृद्-गोमय-क्षीर-दधि-मधु-शर्करौषधिपुष्पफलकुशरत्नगन्धपञ्चगव्यादिकं प्रक्षिपेत् । ततः ॐ समुद्रं वः प्रहिणोमि स्वां योनिमधिगच्छत । अरिष्टास्माकं वीरा मापरासेचि मत्पय इति मन्त्रेण देवायार्घ्यं समर्प्य स्नापयेत् ॥ तद्यथा–पञ्च नद्य इति पञ्चगव्येन । ॐ पञ्च नद्यः सरस्वतीमपि यन्ति सस्रोतसः ॥ सरस्वती तु पञ्चधा सो देशेऽभवत् सरित् ॥ १ ॥ दधिक्राव्ण इति दध्ना । ॐ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ॥ सुरभि नो मुखा करत्प्रण आयूंषि तारिषत् ॥ २ ॥ आप्यायस्वेति क्षीरेण । ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ॥ भवा वाजस्य संगथे ॥ ३ ॥ तेजोसीति घृतेन । ॐ तेजोऽसि शुक्रमस्यमृतमसि धाम नामासि प्रियं देवानामनाधृष्टं देवयजनमसि ॥ ४ ॥ मधुवातेति मधुना । ॐ मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ॥ माध्वीर्नः सन्त्वोषधीः ॥ देवस्य त्वेति पुष्पोदकेन । ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ॥ ५ ॥ परिवाजपतिरिति रत्नोदकेन । ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानि दाशुषे ॥ ६ ॥ देवस्येति कुशोदकेन ॥ ७ ॥ अग्न आयाहीति फलोदकेन । ॐ अग्न आयाहि वीतये गृणानो हव्यदातये ॥ निहोता सत्सि बर्हिषि ॥ ८ ॥ समुद्र ज्येष्ठा इति शीतजलेन । ॐ समुद्रज्येष्ठाः सलिलस्य मध्यात् पुनाना यन्त्यनिं विशमानाः ॥ इन्द्रो या वज्री वृषभो रराद ता आपो देवीरिह मामवन्तु ॥ ९ ॥ वसोः पवित्रमसीति सहस्रधाराकुम्भेन । ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् ॥ देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः ॥ १० ॥ इति समन्त्रस्नानम् । ततस्तूष्णीं स्नपनम् । ततः अन्धस्थान्धोवो इति पञ्चवर्णसूत्रेण नीराज्य बलिं हरेत् । ॐ अन्धस्था

न्धोंवोभक्षीय महस्स्थुमहोंवोभक्षीयोर्ज्जस्थोर्जंवोभक्षीयरायस्पोषंस्स्थरायस्पोषंवोभक्षीय ॥ ११ ॥ मुञ्चन्तु मा शपथ्यादिति कौतुकं विमुच्य ॐ मुञ्चन्तुं मा शुपत्थ्यादथों वरुण्यादुत ॥ अथों युमस्य पड्वींशात्सर्व्वस्मादेव किल्बिषात् ॥ ॐ सूक्ष्मवस्त्रेण पञ्च नद्य इति देवं परिमार्जयेत्। ॐ पञ्चनुद्यःसरस्वतीमपियन्ति सस्रोतसः ॥ सरस्वतीतुपञ्चधासोदेशेभवत्सुरित् ॥ १ ॥ ततः ॐ मन्दाकिन्यास्तु यद्वारि सर्वपापहरं शुभम् ॥ तदिदं कल्पितं देव सम्यगाचम्यतां त्वया ॥ इत्याचमनीयं निवेदयेत् । देवसूक्तसमायुक्ते सर्वयज्ञसमन्विते ॥ सर्ववर्णप्रदे देव वाससी प्रतिगृह्यताम् ॥ इति वस्त्रयुग्मं निवेदयेत् । शरीरं ते न जानामि चेष्टां नैव च नैव च ॥ मया निवेदितं भक्त्या चन्दनं प्रतिगृह्यताम्। इति कुङ्कुमकपूरकस्तूरीयुक्तं चन्दनम्। मणिमुक्ताप्रवालाद्यैः स्वर्णपुष्पैर्मया कृता ॥ पूजा तु देवदेवेश प्रसादाद्भवतस्तव ॥ इतिं पुष्प-पत्र-तुलसीदलानि निवेदयेत्। वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः ॥ आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् । इति धूपम् । त्वं चन्द्रस्त्वं रविर्विष्णुस्त्वं रत्नानि हुताशनः ॥ त्वमेव सर्वज्योतींषि दीपोऽयं प्रतिगृह्यताम् । इति दीपम् । नैवेद्यं गृह्यतां देव मे भक्तिं ह्यचलां कुरु । ईप्सितं च वरं देहि परत्र च परां गतिम् ॥ इति नैवेद्यम् । ( आचमनम् ) ततोऽशीत्या चत्वारिंशता वा दीपैर्नीराजनं कृत्वा भूषणानि समर्प्य पूर्वकृतं होमं निवेद्य प्रार्थयेत् । यन्मया भक्तियुक्तेन पत्रं पुष्पं फलं जलम् ॥ आवेदितं च नैवेद्यं तद्गृहाणानुकम्पया ॥ १ ॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर ॥ यत् पूजितं मया देव परिपूर्णं तदस्तु मे ॥ २ ॥ इतिं । ततः पुनरष्टोत्तरसहस्रं शतं वा प्रधानदेवमन्त्रेण हुत्वा ॐ प्रजापतये स्वाहा । इदं प्रजापतये० ॥ ॐ अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते० ॥ इंति स्विष्टकृदन्तं हुत्वा, व्याहृतिहोमं, त्वन्नोऽअग्ने इत्यादिपञ्चवारुणहोमं च कृत्वा पूर्णाहुतिं कुर्यात् ॥ ॐ मूर्द्धानंदिवोअरुतिंपृथिव्यावैश्वानुरमृतऽआजातमुग्निम् ॥ कुविङ्सुम्राजुमतिंथिंजनांनामासन्नापात्रंजनयन्तदेवाः स्वाहा ॥ इदं मृडाग्नये न मम इति

पूर्णाहुतिः ॥ ततो देवा गातु इति मन्त्रेण बर्हिर्होमं कुर्यात् । ततः संस्रवप्राशनमाचमनं च । ॐ सुमित्रिया न इति पवित्राभ्यां प्रणीताजलेन शिरः संमृज्य, पवित्रे अग्नौ प्रक्षिप्य ॐ दुर्मित्रिया इतीशान्यां प्रणीतान्युब्जीकरणम् । ततो ब्रह्मणे पूर्णपात्रदानं ब्रह्मग्रन्थिविमोकश्च । ततः स्रुवेण भस्मानीय दक्षिणानामिकाग्रगृहीतभस्मना ॐ त्र्यायुषं जमदग्नेः इति ललाटे । ॐ कश्यपस्य त्र्यायुषमिति ग्रीवायाम् । ॐ यद्देवेषु त्र्यायुषमिति दक्षिणांसे । ॐ तन्नोऽअस्तु त्र्यायुषम् इति हृदये । इत्यग्निकर्म । ततः स्वस्तिवाचनं कारयित्वा इन्द्रादिभ्यो माषभक्तबलीन् दत्त्वाऽऽचम्य शेषं समापयेत् । इति चतुर्थीकर्म ॥ ततः शिवप्रतिष्ठायां चण्डकीर्तिमुखस्थापनम् । चतुर्थीकर्मदिने दिनान्तरे वा प्रासादाद्बहिर्गर्भगृहार्धसूत्रान्तराले ऐशान्यां चण्डं स्थापयेत् तद्यथा-आचम्य प्राणानायम्य देशकालौ संकीर्त्य० अमुकलिङ्गप्रतिष्ठाङ्गतया चण्डप्रतिष्ठां करिष्ये इति संकल्प्य पीठादौ चण्डमूर्तिं संस्थाप्य तीर्थोदकेन संस्नाप्य पूजयेत् । तत्र ध्यानम् । रुद्राग्नेः प्रभवं चण्डं कज्जलाभं भयानकम् ॥ शूलदण्डधरं रौद्रं चतुर्वक्त्रं चतुर्भुजम् ॥ मुखोद्गीर्णमहाज्वालं रक्तद्वादशलोचनम् ॥ जटामुकुटखण्डेन्दुमण्डितं फणिकंकणम् ॥ व्यालयज्ञोपवीतं च साक्षसूत्रकमण्डलुम् ॥ श्वेतपद्मासनासीनं भक्तिप्रह्वार्तिनाशनमित्येवं ध्यात्वा । ॐ चण्डासनाय नमः । ॐ चण्डमूर्त्तये नमः । ॐ धुनिचण्डेश्वराय नमः इत्यावाह्य न्यासं कुर्यात् । ॐ चण्डं हृदयाय हुं फट् नमः । ॐ चण्डं शिरसे हुं फट् नमः । ॐ चण्डं शिखायै हुं फट् नमः । ॐ चण्डं कवचाय हुं फट् नमः । ॐ चण्डं नेत्रत्रयाय हुं फट् नमः । ॐ चण्डमस्त्राय हुं फट् करयोरस्त्रम् । ॐ चं डं सद्योजाताय हुं फट् । ॐ चिं वामदेवाय हुं फट् । ॐ चुं अघोराय हुं फट् । ॐ चें तत्पुरुषाय हुं फट् । ॐ चौं ईशानाय हुं फट् । इति न्यासं कृत्वा षोडशोपचारमंत्रैः पूजयेत् । अथ प्रार्थना ॥ यावत्तिष्ठति कालेऽस्मिन् देवदेवो महेश्वरः । तावत्कालं त्वया देव स्थातव्यं शिवसन्निधौ ॥ १ ॥ ततो दिग्बलिं दत्त्वा । ॐ यावत्कालं महादेवो लिङ्गमाश्रित्य तिष्ठति ॥ तावत्कालं तु रक्षार्थं यूयं तिष्ठत सर्वदा ॥ इति भूतानि विज्ञापयेत् । ततः प्रासादाद्बहिर्द्वारदेशे

कीर्तिस्तम्भं स्थापयेत् । तदुक्तं पद्मपुराणे ईश्वर उवाच ॥ त्वं कीर्तिमुखसंज्ञो हि भव मद्द्वारिगः सदा ॥ त्वदर्चा ये न कुर्वन्ति नैव ते मत्प्रियङ्कराः ॥ १ ॥ तदाप्रभृति देवस्य द्वारे कीर्तिमुखः स्थितः ॥ नार्चयन्तीह ये पूर्वं तेषामर्चा वृथा भवेत् ॥ २ ॥ तत्र प्रयोगः । देशकालौ संकीर्त्य, श्रीसदाशिवप्रीतये कीर्तिमुखस्थापनं करिष्ये इति संकल्प्य पूर्ववत् चण्डविधिना स्थापयेत् । ततो भद्रासने यजमानमुपवेश्याभि षिञ्चेत् ( तत्र ॐ देवस्य त्वा० ॐ शन्नोदेवी० ॐ सुरास्त्वामित्यादयो मन्त्राः ) यजमानो महाजलाशये अवभृथस्नानं कृत्वा मण्डपमागत्य गुर्वादीन् संपूज्य गुर्वृत्विग्भ्यो हिरण्यं दद्यात् सोपस्करां पयस्विनीं गां च गुरवे दद्यात् । ततो गुरुः " समस्तजगदुत्पत्तिस्थित्यनुग्रहकारकः ॥ शिवः सानुचरः साङ्गः सर्वदा सर्वकामदः" इति मन्त्रेणाशिषो दद्यात् । यथाशक्त्या ब्राह्मणभोजनम् । कर्मपूर्तिकामो विष्णुं स्मरेत् । क्वचि च्चण्डो नास्तीति त्रिविक्रमः । सिद्धान्तशेखरे तथा । बाणलिङ्गे च लोहे च सिद्धलोहे स्वयंभुवि ॥ प्रतिमासु च सर्वासु न चण्डोऽधिकृतो भवेत् ॥ १ ॥ धरा-हिरण्य-गो-रत्न-ताम्र-रौप्यांशुकादिकान् ॥ विहाय शेषं निर्माल्यं चण्डेशाय निवेदयेत् ॥ २ ॥ अन्यदन्नादि पानीयं ताम्बूलं गन्धपुष्पकम् ॥ दद्याच्चण्डाय निर्माल्यं शिवभुक्तं तु सर्वशः ॥ ३ ॥ आचार्यशिवचण्डानामाज्ञाभङ्गे तु लक्षकम् ॥ धनस्य भक्षणे तेषां पादोनं लक्षमीरितम् ॥ ४ ॥ लिङ्गे स्वयम्भुवे बाणे रत्नजे रसनिर्मिते ॥ सिद्धप्रतिष्ठिते चैव न चण्डाधिकृतिर्भवेत् ॥ ५ ॥ यत्र चण्डाधिकारोऽस्ति तद्भोक्त व्यं न मानवैः ॥ चण्डाधिकारो नो यत्र भोक्तव्यं तत्र भक्तितः ॥ ६ ॥ इति चण्डेशकीर्तिमुखस्थापनप्रयोगः समाप्तः ॥ अथ संक्षेपेण तडाग वापी-कूप-प्रतिष्ठाप्रयोगः ( तत्र कालनियमो मण्डपादिकरणं च मत्कृते उत्सर्गप्रकाशे विस्तराद् बोध्ये ) अधिवासनदिनपूर्वदिने कृतहविष्य भोजनोऽधिवासनदिने प्रातरुत्थाय तीर्थादौ स्नात्वा प्रायश्चित्तधेनुं दत्त्वा पुनः स्नात्वा मण्डपमागत्य स्वासने उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य ममेहजन्मनि जन्मान्तरे वा कृतकायिक-वाचिक-मानसिक-सांसर्गिक-दोषपरिहारार्थमन्ते सकलकलुषक्षयपूर्वकरुद्रालय

गमनानन्तरबहुकल्पकालावधिक—द्युलोकभोगपूर्वक—परार्द्धकालावच्छिन्न—महस्तपःप्रभृतिलोकाङ्गनासहित—तल्लोकगतभोगोत्तर—वैष्णवपदप्राप्ति कामोऽमुकजलाशयोत्सर्गेनाहं यक्ष्ये । इति । तदङ्गत्वेन गणपतिपूजन-पुण्याहवाचन-मातृकापूजन-नान्दीश्राद्धमाचार्यादिवरणं च करिष्ये इति संकल्प्य गणेशपूजा-स्वस्तिवाचन-मातृ-वसोर्धारापूजा-वृद्धिश्राद्ध-गुर्वार्त्विग्वरणानि पूर्वोक्तप्रयोगरीत्या कुर्यात् । ततो मण्डपप्रवेश-दिग्रक्षण प्रोक्षण-वास्तुपूजन-मण्डपपूजा-ग्निस्थापनोत्तरं मध्यवेदिलिखितवारुणमण्डलमध्यस्थे पद्मे ग्रहान् पूजयेत् ( एतत् सर्वं पूर्ववज्ज्ञेयम् ) ततो ग्रहपूजनानन्तरं मण्डलमध्ये । पञ्चरत्नं सौवर्णौ कूर्ममकरौ राजतौ मत्स्यडुण्डुभौ ताम्रौ कुलीरमण्डूकौ लौहं शिशुमारमेतैर्युतां सुवर्णपात्रीम् । ॐइमम्मेवरुणश्रुधीहवमुद्याचमृडय ॥ त्वामवस्युराचके ॥ इति मन्त्रेण स्थापयेत् । ततः प्रतिकुण्डसमीपे ईशान्यां कलशस्थापनं कृत्वा ॐ नमस्ते विश्वगुप्ताय नमो विष्णो अपांपते । सान्निध्यं कुरु मे देव समुद्रादिह शान्तये ॥ इति वरुणं न्यस्य षोडशोपचारैः पूजयेत् । ( कूपप्रतिष्ठायां त्वत्र कूपस्य चतुर्दिक्षु धान्योपरि सितवस्त्रयुक्तच्छन्नानुक्तलक्षणान् कलशान् स्थापयेत् ) ततः आचार्य ऋत्विजश्च स्वे स्वे कुण्डे स्वगृह्योक्तविधिना ( पूर्वोक्तविधिना ) अग्निप्रणयनान्तरं भावि कर्म कुर्युः । ततः कुण्डदक्षिणतो यजमान उपविश्य जलमादाय । ॐ अस्मिन् कर्मणि इदं हविः सूर्यादि-ग्रहेभ्य ईश्वराद्यधिदेवताभ्योऽग्न्यादिप्रत्यधिदेवताभ्यो गणेशादिपञ्चलोकपालेभ्य इन्द्रादिदिक्पालेभ्यो ब्रह्मादिविश्वकर्मान्तेभ्यो वरुणाग्नि—वायु—सूर्य—प्रजापति—स्विष्टकृदादि—पूर्वोत्तराङ्गदेवताभ्यो न ममेति त्यजेत् । इति प्रतिकुण्डं द्रव्यत्यागं कुर्यात् । ( बहुभिर्होतृभिर्होमे क्रियमाणे प्रत्याहुतित्यागस्यैकेन कर्तुमशक्यत्वात् ) ततः परिस्तरणादि समिद्धोमान्तं कर्म समाप्य यवमयचरुं श्रपयित्वा आज्यभागान्ते ग्रहादिविश्वकर्मान्तानां प्रत्येकमष्टाविंशतिसमिदाज्याहुतीर्जुहुयात् ( ग्रहमन्त्राः पूर्वमुक्ता एव ) अथ प्रधानदेवहोमो यजुर्वेदिनाम् । तत्र वारुणमन्त्रैर्द्वादशभिर्नववारावृत्त्याऽष्टोत्तरशतमाज्याहुतीस्तावतीरेवोदुम्बरसमिदाहुतीश्च दद्यात् ॥ तत्र मन्त्राः ॥ इमम्मे वरुणेति शुनः

शेप ऋषिर्गायत्री छन्दो वरुणो देवता वरुणप्रीतये आज्यहोमे उदुम्बरसमिद्धोमे च विनियोगः। ॐ इमम्मेंव्वरुणश्श्रुधीहवमुद्द्याचमृडय ॥ त्वामवस्युराचके स्वाहा ॥ इदं वरुणाय० ॥ १ ॥ तत्त्वायामीति शुनःशेप ऋषिस्त्रिष्टुप् छन्दः वरुणो देवता वरुणप्रीतये आज्यहोमे उदुम्बरसमिद्धोमे च विनियोगः ॥ ॐ तत्त्वायामिब्रह्मणावन्दमानुस्तदाशास्तेयजमानोहुविर्भिः ॥ अहेडमानोव्वरुणेहबोद्ध्युरुशᳫंसमा नुऽआयुःप्रमोषीःस्वाहा ॥ इदं वरुणाय० ॥ २ ॥ त्वन्नोऽअग्ने, सत्वन्नोऽअग्ने, इति वामदेव ऋषिस्त्रिष्टुप् छन्दः अग्नीवरुणौ देवते वरुण प्रीतये आज्यहोमे उदुम्बरसमिद्धोमे च विनियोगः ॥ ॐ त्वन्नोऽअग्नेव्वरुणस्यव्विद्वान्देवस्युहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोव्वह्नितमुःशोशुचा नोविश्श्वाद्वेषाᳫंसिप्प्रमुमुग्ध्युस्मत्स्वाहा इदं वरुणाय० ॥ ३ ॥ ॐ सत्वन्नोऽअग्नेवुमोभवोतीनेदिष्ठोऽअस्याउुषसोव्युष्टौ ॥ अवयक्ष्वनोव्वरुणᳫंरराणोव्वीहिमृडीकᳫंसुहवोनऽएधिस्वाहा ॥ इदं० ॥ ४ ॥ अयाश्चाग्न इति प्रजापतिर्ऋषिः पंक्तिश्छन्दः अग्निर्देवता वरुणप्रीतये० ॥ ॐ अयाश्चा ग्नेस्यनभिशस्तिपाश्चसत्वमित्वमयाऽआसि ॥ अयानोयज्ञंवहास्ययानोधेहिभेषजᳫंस्वाहा ॥ इदं० ॥ ५ ॥ ये ते शतमिति शुनःशेप ऋषिस्त्रि ष्टुप्छन्दः वरुण-सावितृ-विष्णु-विश्वेदेव-मरुत्स्वर्का देवताः वरुणप्रीतये०। ॐ येतेशतंवरुणयेसहस्रंयज्ञियाःपाशाव्विततामहान्तः ॥ तेभिर्न्नोऽ अद्यसवितोतविष्णुर्विश्वेमुञ्चन्तुमरुतः स्वर्काः स्वाहा ॥ इदं० ॥ ६ ॥ अदित्यास्त्वगसीति प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दः वरुणप्रीतये आज्यहोमे०। ॐ अदित्यास्त्वगुस्यदित्यैसदुऽआसीद ॥ अस्तभ्नाद्द्यांवृषभोऽअन्तरिक्षममिमीतवरिमाणम्पृथिव्याः । आसीदुव्विश्वाभुवनानिसम्म्राड्वि श्वेत्तानिव्वरुणस्यव्व्रतानिस्वाहा ॥ इदं० ॥ ७ ॥ वनेषु व्येति प्रजापतिर्ऋषिस्त्रिष्टुप छन्दो वरुणो देवता० ॥ ॐ व्वनेषुव्यन्तरिक्षन्ततानव्वाजमर्व त्सुपयऽउस्त्रियासु ॥ हृत्सुक्रतुंव्वरुणोव्विक्ष्वग्निन्दिविसूर्य्यमदधात्सोममद्रौस्वाहा ॥ इदं वरुणाय० ॥ ८ ॥ उदुत्तममिति शुनःशेप ऋषिस्त्रिष्टुप् छन्दो वरुणो देवता वरुणप्रीतये० । ॐ उदुत्तमंव्वरुणपाशमुस्मदवाधमंविमध्यमᳫंश्रथाय ॥ अथाव्वयमादित्यव्व्रतेतवानागसोऽअदितयेस्याम

स्वाहा ॥ इदं० ॥ ९ ॥ वरुणस्योत्तमिति तपन ऋषिः जगती छन्दः वरुणो देवता वरुणप्रीतये० । ॐ वरुणस्योत्तम्भनमसिवरुणस्य स्कम्भसर्ज्जनीस्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीदस्वाहा इदं० ॥ १० ॥ निषसादेति शुनःशेप ऋषिर्गायत्री छन्दो वरुणो देवता वरुणप्रीतये० । ॐ निषसादधृतव्रतोवरुणःपस्त्यास्वा ॥ साम्म्राज्ज्यायसुक्रतुः स्वाहा ॥ इदं वरुणाय० ॥ ११ ॥ घृतवतीति भरद्वाज ऋषिः जगती छन्दः वरुणो देवता वरुणप्रीतये आज्यहोमे उदुम्बरसमिद्धोमे च विनियोगः । ॐ घृतवतीभुवनानामभिश्रियोर्वीपृथ्वीमधुदुघेसुपेशसा ॥ द्यावापृथिवीवरुणस्यधर्म्मणाविष्कभितेऽअजरेभूरिरेतसास्वाहा ॥ इदं वरुणाय० ॥ १२ ॥ हस्ते जलमादायाऽनेन होमेन वरुणः प्रीयतामित्युत्सृजेत् ( एतेषां द्वादशमन्त्राणां नववारावृत्त्याऽष्टोत्तरशतसंख्यासम्पूर्तिः ) पुनः ग्रहादिविश्वकर्मान्तहोमः कार्यः ॥ अथानन्तरं सुमुहूर्ते यूपस्थापनं कुर्यात, ( यूपस्थापनं पूर्ववत् ) ततो यजमानः सुलग्ने जलाशयजले कनकशृङ्गादिभूषितां गां यथाशक्ति संपूज्य ॐ इरावतीधेनुमतीहिभूतꣳसूयवसिनीमनवेदशस्या ॥ व्यस्कभ्नारोदसीविष्णवेतेदाधर्त्थपृथिवी मभितोमयूखैः स्वाहा ॥ इति मन्त्रेणावतारयेत् ( वापीकूपोत्सर्गे तु त्रिरुपरि भ्रामयेत् ) तरन्तीं तामनुमन्त्रयेत्तत्र मन्त्रः ॥ ॐ इदं सलिलं पवित्रं कुरुष्व शुद्धाः पूता अमृताः सन्तु नित्यं मां तारयन्ती सर्वतीर्थाभिषेकम् । लोकाल्लोकं तरते तीर्यते च, इति । ततो गुरुणाऽन्वारब्धस्तत्पुच्छे लग्नो जले गच्छन्नेव मन्त्रद्वयं पठेत, तच्च ॐ समुद्रादूर्मिर्म्मधुमाँ उदारदुपाꣳशुनासममृतत्वमानट् ॥ घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ १ ॥ ॐ ये वामी रोचने दिवो ये वा सूर्य्यस्य रश्मिषु ॥ येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः ॥ २ ॥ ततो जल एवैशान्यामुत्तराभिमुख्या गोः पुच्छं गृहीत्वा जले स्थित्वा यजमानो यवकुशादिभिर्देव-मनुष्य-पितृ-तर्पणं स्वशाखोक्तं वेद मन्त्रैः कुर्यात् । अत्र सव्येन प्राङ्मुखो देवान् । कण्ठीकृत्वा उदङ्मुख ऋषीन् । अपसव्येन दक्षिणाभिमुखः पितॄंस्तर्पयेत् । अथ पौराणीयं

तर्पणम् । ( उत्सर्गपद्धतौ ) पिता पितामहश्चैव तथैव प्रपितामहः । स्वस्वपत्नीसमेताश्च प्रीयन्तां जलतर्पणात् ॥ १ ॥ अजातदन्ता ये केचिद्ये च गर्भे व्यवस्थिताः । तेषामुद्धरणार्थाय तडागोदकतर्पणम् ॥ २ ॥ पितृव्यकाश्च येऽस्माकं भ्रातरश्च सहोदराः । गुरवो मातुला पुत्रा आचार्य-सखि-बान्धवाः ॥ ३ ॥ तेषां पुत्राश्च पत्न्यश्च श्वशुरा ये सपुत्रकाः । एतेषां क्रीडनार्थाय तडागोदकतर्पणम् ॥ ४ ॥ बन्धुवर्गाश्च ये केचिद्गोत्रनामाविवर्जिताः । स्वगोत्रा परगोत्राः वा तेभ्यश्चेदं तिलोदकम् ॥ ५ ॥ उद्बन्धेन मृता ये च सिंह-व्याघ्रहताश्च ये । दंष्ट्रिभिः शृङ्गिभिश्चैव तेभ्यश्चैव तिलोदकम् ॥ ६ ॥ असुरा देवपत्न्यश्च मातरश्चण्डिका तथा । दिक्पाला लोकपालाश्च ग्रहदेवाधिदेवताः ॥ ७ ॥ तेषामुद्धरणार्थाय तडागोदकतर्पणम् । अग्निदग्धाश्च ये केचिन्नाग्निदग्धास्तथाऽपरे ॥ ८ ॥ विद्युत्-चोर-हता ये च तेभ्योऽपीदं तिलोदकम् । रौरवे चान्धतामिस्रे कुम्भीपाके च ये गताः ॥९॥ अनेकयातनासंस्थाः प्रेतलोकेषु ये गताः । पच्यन्ते संयमन्यां ये नीता ये यमकिङ्करैः ॥१०॥ असिपत्रवने घोरे तेभ्योऽपीदं तिलोदकम् । विश्वेदेवास्तथा साध्या आदित्याश्च मरुद्गणाः ॥ ११ ॥ क्षेत्रपीठोपपीठानि नद्यश्चैव ससागराः । पाताले नागपत्न्यश्च नगाश्चैव सपर्वताः ॥ १२ ॥ पिशाचा गुह्यकाः प्रेता गणगन्धर्वराक्षसाः । पृथिव्यापश्च तेजश्च वायुराकाशमेव च ॥ ते सर्वे तृप्तिमायान्तु तडागोदकतर्पणात् ॥ १३ ॥ आ ब्रह्मणो ये पितृवंशजाता मातुस्तथा वंशभवा मदीयाः । वंशद्वयेऽस्मिन् मम दासभूता भृत्यास्तथैवाश्रितसेवकाश्च ॥ १४ ॥ मित्राणि सख्युः पशवश्च वृक्षा दृष्टाश्च स्पृष्टाश्च कृतोपकाराः । जन्मान्तरं ये मम सङ्गताश्च तेभ्यस्तडागोदकमेतदस्तु ॥ १५ ॥ ( वापीकूपयोस्तु तडागपदस्थाने तत्पदप्रक्षेपः ) ततस्तर्पणान्ते यजमानः पुच्छलग्न एव आपो अस्मानिति पठन्नीशान्यामुत्तीर्य, ॐ आपोऽअस्मान् मातरं ÷ शुन्धयन्तु घृतेनं नोघृतप्व ÷ पुनन्तु ॥ विश्वᳬहि रिप्रम्प्रवहंन्ति देवीरुदिदाभ्युत्शुचिरापूत एमि इति । ॐ सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम । अद्धि तृणमघ्न्येविश्वदानीं पिबं शुद्धमुदकमाचरन्तीत्यनेन जलान्निष्कास्य ईशान्यां दिशि उत्था

पयेत् । यदि हिंकुर्यात्, तदा हिंकृण्वती वसुमती वसूनां वत्समिच्छन्तीति मनसाऽभ्यागात् । दुहामश्विभ्यां पयो अघ्न्येयं सावर्द्धतां महते सौभगायेत्यनुमन्त्रयेत् ॥ ततः कृतवस्त्रपरिधानो यजमानस्तां संपूज्य सामगाय प्रतिपादयेत् ॥ ततः कुङ्कुमाक्तेन त्रिवृता सूत्रेण जलाशयं वेष्टयित्वा तत्समीपे उपविशेत् । आचार्यस्तु प्रागासादितां कूर्म-मकरादियुतां हेमपात्रीं पञ्चरत्नसहितां दध्यक्षत-महानदीजलयुतामादायोदङ्मुखैश्चतुर्भिर्ऋत्विग्भिः सह स्वयं प्राङ्मुखः स्थित्वाऽगाधे जले सौवर्णौ कूर्ममकरौ प्रागाग्नेयभागयोः । प्रत्यङ्मुखौ राजतौ मत्स्यडुण्डुभौ दक्षिणनैर्ऋत्यभागयोः । उदङ्मुखौ ताम्रौ कुलीरमण्डूकौ पश्चिमवायव्ययोः ॥ प्राङ्मुखमायसं शिशुमारमुत्तरदक्षिणाभिमुखं वारुणैर्मन्त्रैः प्रक्षिपेत् ॥ ततः शन्नो देवीत्यनेन आपो हिष्ठेति त्र्यृचेन चोदङ्मुखस्तां पात्रीं न्युब्जीकुर्यात् । पात्रीस्थपदार्थान् जले प्रक्षिप्य द्विराचामेयुः । ततो यजमानः प्राङ्मुखो जलाशयोत्सर्गं कुर्यात् । तत्र कुश-जल-यव-तिलानादाय देशकालसंकीर्तनान्ते मम सर्वपापक्षयपूर्वकरुद्रालयगमनानन्तरबहुकल्पकालावधिकद्युलोकभोगानुभवपूर्वकपरार्द्धद्वयकालावच्छिन्नमहस्तपःप्रभृतिलोकगमनादिह तल्लोकभोगोत्तरकालसद्योगबलप्राप्यवैष्णवदप्राप्तिकामोऽहमिमं तडागादिजलाशयं वरुणदेवताकं स्नान–पाना–ऽवगाहनाद्यर्थं सर्वेभ्यो भूतेभ्य उत्सृज्ये इत्युक्त्वा जलाशयं निरीक्ष्य जलं भूमौ निक्षिपेत् । सर्वभूतेभ्य उत्सृष्टं मयैतज्जलमूर्जितम् । रमन्तां सर्वभूतानि स्नान-पाना-ऽवगाहनैः ॥ १ ॥ सामान्यं सर्वभूतेभ्यो मया दत्तमिदं जलम् । रमन्तां सर्वभूतानि स्नान-पाना-ऽवगाहनैः ॥ २ ॥ ततो मण्डपमागत्य प्रागादिष्विन्द्रादिभ्यः पूर्ववन्माषभक्तबलिं दद्यात् । अथाचारप्राप्तं नागयष्ट्या रोपणम् । तत्र गुरुरष्टसु चूतपत्रेष्वनन्त-वासुकि-तक्षक-कर्कोटक-पद्म-शङ्ख-महापद्म-कुलिकानां नामानि प्रत्येकं लिखित्वा, प्राक्स्थापिते सजलकलशे प्रक्षिप्याऽऽलोड्य तत्र वरुणं पूजयित्वा एकं चूतपत्रमाकृष्य तत्पत्रलिखितनामानं नागं तीर्थजलाऽऽप्लुतायां यज्ञियवृक्षोद्भवायां जलाशयालपत्वाद्यनुसारतो द्वादश-पञ्चदश-विंशत्यन्यतमायामरत्निमितायां यष्ट्यामसुकनाग

इहाऽऽगच्छ इह तिष्ठेत्यावाह्य स्थापयित्वा, अनेन नागेनास्य जलाशयस्य रक्षा कार्या, इति जनेभ्यः श्रावयित्वा तं नागं यष्टौ अमुकना गाय इति नाममन्त्रेण यथाशक्ति पूजयेत्। ततो यष्टिसम्बन्धि वर्तुलमस्तकोपरि शूले लोहमयं चक्रमारोपयन्ति। ततो जलमध्ये प्रागेव यष्ट्यर्थकृतखातसमीपे अर्चितां यष्टिं नयेत्। ततः खाते दधि-मध्व-क्षत-कुश-तीर्थजल-पञ्चरत्नानि प्रक्षिप्य, ध्रुवा द्यौरिति मन्त्रेण यष्टिं समारोपयेत्। इदं यष्ट्यारोपणं कूपवाप्योर्न कार्यमिति रूपनारायणीये, इति नागयष्टिरोपणम् ॥ ततो यजमानो गङ्गादितीर्थजलं जलाशये प्रक्षिप्य प्राङ्मुख उपविश्य पठेत्। कुरुक्षेत्रं गयां गङ्गां प्रभासं पुष्कराणि च। एतानि पञ्चतीर्थानि तडागे निवसन्तु मे ॥ १ ॥ वितस्ता कौशिकी सिन्धुः सरयू च सरस्वती। एतानि पञ्चतीर्थानि तडागे निवसन्तु मे ॥ २ ॥ दशार्णा मुरला सिन्धू रथावती दृषद्वती। एतानि पञ्चतीर्थानि तडागे निवसन्तु मे ॥ ३ ॥ यमुना नर्मदा रेवा चन्द्रभागा च वेदिका। एतानि पुण्यतीर्थानि तडागे निवसन्तु मे ॥ ४ ॥ गोमती वाङ्मती शोणा गण्डकी सागरस्तथा। एतानि पञ्चतीर्थानि तडागे निवसन्तु मे ॥ ५ ॥ इति पठित्वा जलं स्पृष्ट्वा। आपो हिष्ठेति त्र्यृचं जपन्नविच्छिन्नदुग्धधारया जलाशयं त्रिः प्रदक्षिणीकुर्यात्। तत एकं ब्राह्मणं यथेष्टदुग्धं पाययेत्। गुरुर्दिनत्रयं स्थापितदेवानां पूजनं कृत्वा ऋत्विग्भिः सह स्वे स्वे कुण्डे वरुणप्रभृतिविश्वकर्मान्तं होमं कुर्यात्। तदन्ते उत्तराङ्गं निर्वर्त्य स्वे स्वे कुण्डे सर्वे स्विष्टकृद्धोमं, व्याहृतिहोमं पञ्चवारुणं प्रजापतिहोमं च कृत्वा बलिदानं कुर्यात् ॥ ततः पूर्णाहुतिहोमं कुर्युः। ( दरिद्रो यजमान एकाग्निविधानेन गुरुणैव सर्वं कारयेदिति मदनादयः ) ततश्चतुर्थदिने द्वितीयदिने वा इमं मे वरुणेत्यनेन चतुर्थीकर्माङ्गपूर्णाहुतिं कुर्यात्। ततः संस्रवप्राशनं पवित्राभ्यां मार्जनम् अग्नौ पवित्रप्रतिपत्तिं प्रणीतान्युब्जीकरणं ब्रह्मणे पूर्णपात्रदानं कुर्यात् ॥ ततोऽग्निपूजा त्र्यायुषादिकरणं ततोऽग्निविसर्जनम् ॥ ततो गुर्वृत्विग्भ्यो हिरण्यं दद्याद्यजमानस्याभिषेकः। पुनः पूजनं ग्रहादीनां, यान्तु देवगणा इति विसर्जनम्। ततो यज्ञोपकरणादिकमृत्विग्भ्यो हेमपात्रीं शय्यां च

गुरवे मण्डपं च सर्वेभ्यो विभज्य दद्यात् । ततो ब्राह्मणसहस्रमष्टोत्तरशतं पञ्चाशतं विंशतिं वा शक्त्यनुरूपं भोजयित्वा भूयसीं दत्त्वा यस्य स्मृत्या० प्रमादात् कुर्वतां कर्मेत्युक्त्वा त्रिर्विष्णुं स्मरेत् । (विस्तरेण तु मत्कृते उत्सर्गप्रकाशे द्रष्टव्यम् ) इति जलाशयोत्सर्गः ॥ अथ वाप्यादिशुद्धिः ॥ ( उत्सर्गमयूखे ) वापी-कूप-तडागादिष्वल्पतोयेषु श्व-मार्जार-खर-वानर-सूकरादिमृतकाद्युपघाते सर्वोदकोद्धरणेन शुद्धिः । बहुजलेषु कुम्भशतमुद्धृत्य पञ्चगव्यप्रोक्षणं, क्षुद्रप्राणिपाते षष्ठिकुम्भोद्धारे कृते, पञ्चगव्यप्रक्षेपः । अत्यल्पोपघाते सूर्य-चन्द्र-रश्मिसम्बन्धाद्वायुस्पर्शाच्च शुद्धिः । तथा अतिगम्भीर-वापी-कूप-तडाग-नद्यादिषु चाण्डालाद्यशुचिस्पर्शो यत्रैव स्थले स्पर्शस्तदेव स्थलं परिवर्ज्याऽन्यत्र शुद्धिः । वापी-कूप-तडागेषु मानुषमृतके प्रक्षिप्ते सर्वजलोद्धारात्, शतघटजलोद्धरणपूर्वकपञ्चगव्यप्रक्षेपाद्वा शुद्धिः । वापी-कूप-तडागजले मनुष्यमरणे जलस्याहोरात्रमाशौचं, ततः प्रागुक्ता शुद्धिः । एवं मूत्र-पुरीष-चर्म-रुधिरादि-धातुप्रक्षेपे त्रिंशत्कुम्भजलोद्धारपूर्वकगोमूत्रगङ्गाजलादिप्रक्षेपणात् शुद्धिः ॥ इति वाप्यादिशुद्धिः ॥ अथ सामान्यतो हनुमत्प्रतिमास्थापनविधिः ॥ शुचौ देशे मण्डपस्थण्डिलादिकं कृत्वा, सुमुहूर्ते नित्यकार्यं समाप्य,शिल्पिस्थानादेवं तत्राऽऽनीयाऽऽसने निधाय आचान्तः प्राणानायम्य अद्येत्यादिदेशकालौ संकीर्त्य । मम दीर्घायु-र्लक्ष्मी-सर्वकामसमृद्ध्यर्थम्, अस्यां मूर्तौ देवकलासान्निध्यार्थं हनुमत्प्रतिष्ठां करिष्ये इति । तदङ्गत्वेन गणेशपूजनं स्वस्तिवाचनं नवग्रहपूजनमाचार्यादिवरणं च करिष्ये इति संकल्प्य, ॐ सुमुखश्चेत्यादिना गणेशपूजां विधाय पुण्याहवाचनं, सामान्यतो नवग्रहपूजनमाचार्यादिवरणं च कृत्वा, कुण्डे स्थण्डिले वा पञ्चभूसंस्कारान् कुर्यात् । तत्र अग्निं प्रतिष्ठाप्य परिस्तरणादि कर्म समाप्याऽऽघारावाज्यभागौ हुत्वा ग्रहेभ्यस्तिलहोमं च कृत्वा प्रधानदेवहोमं कुर्यात् । तद्यथा । नमो भगवते रामचन्द्राय स्वाहा ॥ इदं विष्णवे० । ॐ हनुमते स्वाहा ॥ इदं हनुमते० ॥ इत्येताभ्यामष्टोत्तरशतं चरुणा हुत्वा सहस्रशीर्षा इति पुरुषसूक्तेन तिलाहुतीस्तैरेव जुहुयात् । ततः । ॐ अग्नये स्विष्टकृते स्वाहा ॥ इदमग्नये स्विष्टकृते० इति स्विष्टकृतं

व्याहृतिहोमं, पञ्चवारुणप्रजापतिहोमं च हुत्वा दिक्पालेभ्यो बलीन् दद्यात् । ततो देवं नत्वा । स्वागतं देवदेवेश विश्वरूप नमोऽस्तु ते ॥ इति प्रार्थ्य, ॐ उत्तिष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे ॥ उपप्रयन्तुमरुतः सुदानवइन्द्रप्राशूर्भवासचा । इति सर्त्विगाचार्यो देवमुत्थाप्य यज्ञियकाष्ठपीठे निधाय, पञ्चगव्यैः पञ्चामृतैश्च पृथक् पृथक् तत्तन्मन्त्रैः संस्नापयेत् । ततः ॐ शन्नो देवीति शुद्धोदकेन संस्नाप्य घृताभ्यङ्गमुद्वर्तनमुष्णोदकेन क्षालनं च कृत्वा पुनश्चतुर्भिः कलशैर्वारुणमन्त्रैरभिषिच्य ( वारुणमन्त्रा इमं मे इत्याद्याः पूर्वोक्ताः ) पुनः सर्वौषधिजलेन गङ्गोदकेन च ॐ आपो हि ष्ठामयो भुव इति तिसृभिः, पावमानसूक्तेन च संस्नाप्य, वाससी परिधाप्योपवीतं दत्वा गन्ध-पुष्प-धूप-दीपैः संपूज्य नीराजनं च कृत्वा, सुवर्णादिपात्रे मधु घृतं गृहीत्वा हिरण्यशलाकया । ॐ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । इत्यर्धर्चेन । ॐ तेजोऽसि शुक्रमसीति मन्त्रेण च ॥ ॐ नमो भगवते हनुमते नमः ॥ इति दक्षिणसव्ये नेत्रे मन्त्राऽऽवृत्त्या लिखेत् ॥ तत अञ्जनेनाञ्जयित्वा भक्ष्यभोज्या-ऽऽदर्शादि दर्शयेत ॥ ( तदाऽग्रे कोऽपि न तिष्ठेत् ) ॥ ततः पुरुषसूक्तेन स्तुत्वा देवं नीराजयित्वा । ॐ रुद्राय नम इति चतुष्पथे बलिं दद्यात । ततो देवमुत्थाप्य, शय्यायामासने वा निधाय न्यासं कुर्यात् ॥ अथ पुरुषसूक्तन्यासः ॥ ॐ सहस्रशीर्षा० ॥ १ ॥ ॐ पुरुषऽएवे० ॥ २ ॥ इति ( करयोः ) ॥ १ ॥ ॐ एतावानस्य० ॥ ३ ॥ त्रिपादूर्ध्व० ॥ ४ ॥ इति ( जान्वोः ) ॥ २ ॥ ततो विराड० ॥ ५ ॥ तस्माद्यज्ञात्सर्वहुतः० ॥ ६ ॥ इति ( कट्योः ) ॥ ३ ॥ तस्माद्यज्ञात्० ॥ ७ ॥ इति ( नाभौ ) ॥ ४ ॥ तस्मादश्वा० ॥ ८ ॥ इति ( हृदि ) ॥ ५ ॥ तं यज्ञं० ॥ ९ ॥ इति ( कण्ठे ) ॥ ६ ॥ यत्पुरुषं० ॥ १० ॥ ब्राह्मणोस्य० ॥ ११ ॥ इति ( बाह्वोः ) ॥ ७ ॥ चन्द्रमा मनसो० ॥ १२ ॥ नाभ्याऽआसीत्० ॥ १३ ॥ इति ( नासयोः ) ॥ ८ ॥ यत्पुरुषेण० ॥ १४ ॥ सप्तास्या० ॥ १५ ॥ इति ( अक्ष्णोः ) ॥ ९ ॥ यज्ञेन यज्ञ० ॥ १६ ॥ इति ( शिरसि ) ॥ १० ॥ इति न्यासं कृत्वा । ॐ नमो भगवते वासुदेवाय इति शतवारं दशवारं वा जलमभिमन्त्र्य देवशिरसि, अभिषिच्य ॥ ॐ उत्तिष्ठ ब्रह्मणस्पते इत्युत्थाप्य,

सुमुहूर्ते मुख्यमन्दिरे पुरुषसूक्तेन गायत्र्या ध्रुवसूक्तेन वा अर्चां प्रतिष्ठाप्य प्राणप्रतिष्ठां कुर्यात् । यथा । अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्म-विष्णु-रुद्रा ऋषयः ऋग्-यजुः-सामानि छन्दांसि क्रियामयवपुः प्राणाख्या देवता आं बीजं क्रौं शक्तिः प्राणप्रतिष्ठायां विनियोगः । ॐ ब्रह्म-विष्णु-रुद्र-ऋषिभ्यो नमः ( शिरसि ) । ॐ ऋग्-यजुः-साम-छन्दोभ्यो नमः । ( मुखे ) । ॐ प्राणाख्यदेवतायै नमो ( हृदि ) । ॐ आं बीजाय नमो ( गुह्ये ) । ॐ क्रौं शक्त्यै नमः ( पादयोः ) । ॐ कं खं गं घं ङं अं पृथिव्यप्तेजोवाय्वाकाशात्मने आं ( हृदयाय नमः ) । ॐ चं छं जं झं ञं इं शब्द-स्पर्श-रूप-रस-गन्धात्मने ईं ( शिरसे स्वाहा ) । ॐ टं ठं डं ढं णं उँ श्रोत्र-त्वक्-चक्षु-र्जिह्वा-घ्राणात्मने ऊं ( शिखायै वषट् ) । ॐ तं थं दं धं नं एं वाक्-पाणि-पाद-पायू-पस्थात्मने ऐं ( कवचाय हुं ) । ॐ पं फं बं भं मं ओं वचनादानविहरणोत्सर्गानन्दात्मने औं ( नेत्रत्रयाय वौषट् ) । ॐ यं रं लं वं शं षं सं हं क्षं अं मनो-बुद्ध्य-हङ्कार-चित्तात्मने अः ( अस्त्राय फट् ) । एवमात्मनि देवे च कृत्वा, देवं स्पृष्ट्वा जपेत् ॐ आं ह्रीं क्रौं यं रं लं वं शं ष सं हं सः, देवस्य प्राणा इह प्राणाः । ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः देवस्य जीव इह स्थितः । ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः, देवस्य सर्वेन्द्रियाणि ॥ ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः, देवस्य वाङ्-मन-श्चक्षुः-श्रोत्र-घ्राण-प्राणा इहाऽऽगत्य स्वस्तये सुखेन सुचिरं तिष्ठन्तु स्वाहा । ततः प्रतिमायाः हृद्यङ्गुष्ठं दत्त्वा जपेत् । ॐ अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाश्चरन्तु च । अस्यै देवत्वमर्चायै मामहेति च कश्चन ॥१॥ ततो देवस्य कर्णे गायत्रीं जप्त्वा पुरुषसूक्तेन स्तुत्वा पाद-नाभि-शिरः स्पृष्ट्वा प्रार्थयेत् । स्वागतं देवदेवेश मद्भाग्या त्वमिहाऽऽगतः । प्राकृतं त्वमदृष्ट्वा मां बालवत्परिपालय ॥ १ ॥ धर्मार्थकामसिद्ध्यर्थं शिवो भव शिवाय नः । सान्निध्यं तु महावीर स्वार्चायां परिकल्पय ॥ २ ॥ यावच्चन्द्रा-ऽवनी-सूर्यास्तिष्ठन्त्यप्रतिघातिनः । तावत्त्वयाऽत्र देवेश स्थेयं भक्तानुकम्पया ॥ ३ ॥ इति प्रार्थ्य षोडशोपचारैः संपूज्य, सिन्दूरादिना सुशोभितं कृत्वा नारिकेलं समर्प्य रक्तपताकां ध्वजं चोच्छ्रयेत् । ततः पूर्णाहुतिं हुत्वा कर्मशेषं समाप्य देवान् विसृज्य, आचार्यादिभ्यो दक्षिणां दद्यात् । ततो ब्राह्मणभोजनमन्यत् सर्वं पूर्ववत् ॥ इति श्रीहनुमत्प्रतिमास्थापनप्रयोगः समाप्तः ॥ ॥ ७ ॥ ॥

अथ अग्न्यानयनप्रकारः ॥ ( तत्रादावाऽऽहरणपक्षो हरिहरभाष्ये ) यजमानः पत्न्या सहाऽहते वाससी परिधाय, अग्न्याधानदेशे स्थण्डिलमु-
पलिप्य पञ्चभूसंस्कारान् कृत्वा तं देशं वस्त्रेण पिधाय ब्रह्मणा सह समृदं स्थालीमादाय ब्राह्मणैः परिवृतो वेदघोष–मङ्गल–गीत–वाद्यादिभिर्ज-
नितोत्साहो वैश्यस्य बहुपशोर्गृहात् बहुयाजिनो ब्राह्मणस्य गृहाद्, बह्वन्नपाकाद् ब्राह्मणमहानसाद्वा स्थाल्यामग्निम् गृहीत्वा तथैव गृहमागत्य
परिसमूहनादिपञ्चभूसंस्कारसंस्कृते स्थण्डिले प्राङ्मुख उपविश्य आत्माभिमुखमग्निं निदध्यात् । इत्याहरणपक्षः । ( आरणेयपक्षे तु ) यजमानः
पुण्येऽहनि--अश्वत्थो यः शमीगर्भः प्रशस्तोर्वीसमुद्भवः ॥ तस्य या प्राङ्मुखी शाखा उदीची चोर्ध्वगाऽपि वा ॥ १ ॥ अरणिस्तन्मयी ज्ञेया
तन्मध्ये चोत्तरारणिः ॥ सारवद्दारवं चात्र मोविली च प्रशस्यते ॥ २ ॥ संसक्तमूलो यः शम्या स शमीगर्भ उच्यते ॥ अभावे त्वशमी
गर्भादाहरेदविलम्बितः ॥ ३ ॥ चतुर्विंशत्यङ्गुलदीर्घा विस्तारेण षडङ्गुला ॥ चतुरङ्गुलमुत्सेधा अरणिर्याज्ञिकैः स्मृता ॥ ४ ॥ मूलादष्टा
ङ्गुलं त्यक्त्वा अग्राच्च द्वादशाङ्गुलम् ॥ अन्तरं देवयोनिः स्यात्तत्र मथ्यो हुताशनः ॥ ५ ॥ तत्र यो जायते वह्निः स कल्याणकृदुच्यते ॥
गोवालैः शणसंमिश्रैस्त्रिवृद्वृत्तमनंशुकम् ॥ व्यामप्रमाणं नेत्रं स्यात्तेन मथ्यो हुताशनः ॥ ६ ॥ इत्युक्तलक्षणमरण्यादिकं संपाद्य उक्तकाले स्ना
नादिपूर्वकं संकल्पादि--मातृपूजा–ऽऽभ्युदयिकश्राद्ध–ब्रह्मवरणा–ऽहतवासःपरिधानादि कृत्वा शालायां यजमान उपविशति । तस्य दक्षि
णाङ्गे पत्नी । अथ ब्रह्मा अरणीमादाय, अधरारणिं पत्न्यै उत्तरारणिं यजमानाय दद्यात् । ततोऽग्न्याधानदेशे शंकुं द्वादशाङ्गुलं खादिरं
चतुरङ्गुलमस्तकं निखाय तत्र रज्जुपाशं क्षिप्त्वा सार्द्धत्रयोदशाङ्गुलरज्ज्वन्तं शंक्वन्तराले संवेष्ट्य प्रदक्षिणपरिभ्रामणेन परिलिख्य,
तत्र परिसमूहनादिपञ्चसंस्कारान् कृत्वा आच्छाद्य मन्थनमारभेत् । तद्यथा । प्राग्ग्रीवमुत्तरलोमकृष्णाजिनमास्तीर्य तत्रोदगग्रामधरारणिं
निधाय, तत्पूर्वत उत्तरारणिं च अधरारण्यामुक्तलक्षणमन्थनप्रदेशे प्रमन्थमूलं निधाय, चात्राग्रे चोविलीमुदगग्रां च नेत्रेण चात्रं त्रिर्वेष्टयित्वा

गाढं धृत्वा पश्चिमाभिमुखोपविष्टया पत्न्या मन्थयेत्। यावदग्नेरुत्पत्तिः। पत्न्या मन्थनासामर्थ्ये अन्ये ब्राह्मणाः शुचयो मन्थयन्ति । एवं यजमानाऽसामर्थ्ये अन्यो यन्त्रं धारयति । ततो जातमग्निं मृन्मये पात्रे शुष्कगोमयपिण्डचूर्णोपरि निहिततूले सपुरीषं प्रक्षिप्य संधुक्ष्य प्रज्वाल्य पूर्वसंस्कृते देशे आदध्यात । तत्र ब्रह्मोपवेशनादि-देवताभिधान--पर्युक्षणान्तं कृत्वा पूर्ववद्धोमं कुर्यात् । इत्यारणेयपक्षः ॥ अथ शूद्राणां देवस्थापने विचारः ॥ ( कल्पतरौ देवीपुराणे )। वर्णाश्रमविभेदेन देवाः स्थाप्यास्तु नान्यथा । ब्रह्मा तु ब्राह्मणैः स्थाप्यो गायत्री सहितः प्रभुः ॥ १ ॥ चतुर्वर्णैस्तथा विष्णुः प्रतिष्ठाप्यः सुखार्थिभिः । भैरवोऽपि चतुर्वर्णैरन्त्यजानां तथा मतः ॥ २ ॥ मातरः सर्वलोकैस्तु स्थाप्याः पूज्याः सुरोत्तमाः । लिङ्गं गृही यतिर्वापि संस्थाप्य तु सदा यजेत् ॥ ३ ॥ ( त्रिस्थलीसेतौ तु ) स्त्रीणामनुपनीतानां शूद्राणां च नरेश्वर ॥ स्थापने नाधिकारोऽस्ति विष्णोर्वा शङ्करस्य च ॥ १ ॥ ( बृहन्नारदीये स्कान्दे च ) यः शूद्रसंस्कृतं लिङ्गं विष्णुं वाऽपि नमेन्नरः । इहैवात्यन्तदुःखानि पश्यत्यामुष्मिके किमु ॥ १ ॥ शूद्रो वाऽनुपनीतो वा स्त्रियो वा पतितोऽपि वा । केशवं वा शिवं वाऽपि स्पृष्ट्वा नरकमश्नुते ॥ इति ॥ चतुर्वर्णैरिति पूर्ववचनाद्विष्ण्वादिप्रतिष्ठायां शूद्रस्य विकल्प इति तु युक्तम् । अत एव स्पर्शने नाऽधिकारोऽस्तीत्यन्यत्र पाठः । ( व्यासजातूकर्ण्यौ ) । अधिकारी भवेच्छूद्रः पूर्त्ते धर्मे न वैदिके इति ( पूर्तमाहतुः अत्रि--जातूकर्ण्यौ ) वापी-कूप-तडागादिदेवतायतनानि च ॥ अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते । ( स्मृतिसंग्रहे ) नाममन्त्रेण शूद्रस्य कुर्याद्धोमादिकं बुध इति । अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते इति वाराहोक्तेः । ( पाराशरौ ) दक्षिणार्थं तु यो विप्रः शूद्रस्य जुहुयाद्धविः । ब्राह्मणस्तु भवेच्छूद्रः शूद्रस्तु ब्राह्मणो भवेत् । इति । अत्र माधवाचार्यः । यो विप्रः शूद्रदक्षिणामादाय तदीयं हविः शान्ति-पुष्ट्यादिसिद्धये वैदिकैर्मन्त्रैर्जुहोति तत्र विप्रस्यैव दोषः । शूद्रस्तु होमफलं लभेतैवेति व्याचचक्षे ॥ एतच्चास्माभिः सनातनधर्मप्रकाशे सविस्तरमुक्तम् । तेन सर्वत्र शूद्राणां वैदिको निषेधः । अमन्त्रको नाम्ना कार्यः

अथ शूद्रस्य देवपूजायां विशेषः । ( तच्च सर्वस्वे ) यस्तु पूजयते लिङ्गे देवादिं मां जगत्पतिम् । ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा मत्परायणः ॥ तस्य प्रीतः प्रदास्यामि शुभाँल्लोकाननुत्तमान् । ( लैङ्गे ) । अथ रुद्रो महादेवो मण्डलस्थ उवाच ह । पूज्योऽहं ब्राह्मणानां च क्षत्रियाणां विशेषतः ॥ वैश्यानां चैव शूद्राणां शुश्रूष्यः पूजकस्य च । स्त्रीणां चैवाऽधिकारोऽस्ति पूजादिषु न संशयः ॥ ( सूतसंहितायाम् ) नमोऽन्तेन शिवेनैव स्त्रीणां पूजा विधीयते । विरक्तानां च शूद्राणामेवं पूजा प्रकीर्तिता । अन्येषामपि सर्वेषां नराणां मुनिपुङ्गवाः । पूजां देवालयं दृष्ट्वा प्रणामस्तस्य कीर्तितः ॥ एवं पूजा कृता येन सफलं तस्य जीवितम् ॥ ( नारदीये ) ॥ यदा प्रतिष्ठितं लिङ्गं मन्त्रविद्भिर्यथाविधि ॥ तदाप्रभृति शूद्रश्च योषिद् वाऽपि न संस्पृशेत् । नूतनलिंगार्चादौ तु शूद्राद्यैः स्पर्शरहिता पूजा कार्या । ( तदुक्तं स्कान्दे ) स्त्रीणामनुपनीतानां शूद्राणां च जनेश्वर । स्पर्शने नाऽधिकारोऽस्ति विष्णोर्वा शङ्करस्य च । इति ॥ ( वाराहेऽपि ) शालिग्रामं न स्पृशेत्तु हीनवर्णो वसुन्धरे ॥ स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शाधिको मतः ॥ १ ॥ मोहाद्यः संस्पृशेत् शूद्रो योषिद् वापि कदाचन । स पतेन्नरके घोरे यावदाभूतसंप्लवम् ॥ २ ॥ यदि भक्तिर्भवेत्तस्य स्त्रीणां वापि वसुन्धरे । दूरादेवास्पृशन् पूजां कारयेत् सुसमाहितः ॥ ३ ॥ अथ ग्रन्थालङ्कारः ॥ देशे मरूधन्वनके बभूव बीकाजिनामा नृपतिः पुरा हि ॥ तस्यैव नाम्ना खलु राजधानी लोके बिकानेर इति प्रथां गता ॥ १ ॥ तदन्तरे लेखपुरोपमे पुरे श्रीरत्नदुर्गे नृपदुर्गमे शुभे ॥ विद्यासदाचारयुतैश्च विप्रैर्वैश्यैर्धनाढ्यैर्बहुभिश्च मण्डिते ॥ २ ॥ आसीद्वासिष्ठान्वयगौडविप्रो माध्यन्दिनीयो बुधजीवराजः ॥ विवृद्धमानो विदुषां समाजे सुज्ञैर्नरैः सर्वसमृद्धिभाजः ॥ ३ ॥ तस्यात्मजा बाण ५ मितास्तु सद्गुणाः सुवेदविद्याध्ययने सुनैपुणाः ॥ आयातयातद्विजशुद्धचाङ्गणा वीर्येण सन्ताडितवैरिदुर्गणाः ॥ ४ ॥ एतेषु मुख्यः किल रामकृष्णो ज्ञानेन दूरीकृतसर्वतृष्णः ॥ स्वबुद्धितः खण्डितवैरिप्रश्नः सुभक्तिसंतर्पितदेवकृष्णः ॥ ५ ॥ तस्याभवन्नाममिताः सुपुत्राः स्वधर्मरक्ताः सुकलत्रमित्राः ॥ गृहेषु संलेखित

रम्यचित्राः श्रीकान्तपूजानिरताः पवित्राः ॥ ६ ॥ इमानि नामानि भवन्ति तेषां चतुर्भुजाख्यो विबुधोऽग्रजातः ॥ कस्तूरिचन्द्राभिध सज्जनोऽन्योऽपरो गुणी ज्येष्ठमुखस्तु रामः ॥ ७ ॥ तत्रापि मध्या निजवंशपालाः कस्तूरिचन्द्रा हि महासुशीलाः ॥ तेषां सुपुत्रावनवद्यवन्द्यविद्यायुतौ द्वौ सुगुणावभूताम् ॥ ८ ॥ चतुर्थिलाल[1]ाख्यगुरूमुखाख्यौ सुज्ञौ गुणेनार्दितदुष्टदर्पौ ॥ तत्रापि ज्येष्ठः खलु पण्डिताग्र्यः श्रीशम्भुपादाब्जविलग्नचित्तः ॥ ९ ॥ षट्शास्त्रवेत्ता श्रुतिकर्मरक्तः परोपकारी सुनिबन्धकर्ता ॥ दाता मनस्वी द्विजदेवभक्तो हुतावशिष्टान्नसदाऽनुरक्तः ॥ ॥ १० ॥ एतादृशो गौडकुले शताब्द्यां निबन्धकर्ता न बभूव कश्चित् ॥ द्विःषण्निबन्धा रचिता हि येन शिवस्य साम्बस्य वरप्रसादात् ॥ ॥ ११ ॥ ग्रन्थोऽयं बहुसाहस्रश्चातुर्थीलालभास्करः ॥ सुनिबद्धो निबन्धैश्च गौडैर्द्वादशभिर्वृतः ॥ १२ ॥ प्रतिष्ठा[2]-शान्ति[3]-श्राद्धा[4]नां ज्यौतिषो[5]त्सर्ग[6]कर्मणाम् ॥ अनुष्ठान[7]विधेश्चापि संस्कारा[8]णां विधेस्तथा ॥ १३ ॥ प्रायश्चित्ते[9]श्च शुद्धे[10]श्च वैद्य[11]कोद्यापन[12]स्य च ॥ सतो धर्मस्य[13] च ग्रन्था रचिता द्वादश त्विमे ॥ १४ ॥ तत्रायं प्रथमो ग्रंथः पूर्णतामगमच्छुभः ॥ अनेन प्रीयतां शम्भुर्भवान्या सह सर्वदा ॥ १५ ॥ बाणवेदाङ्कचन्द्रे १९४५ ब्दे विक्रमादित्यभूभुजः ॥ माधवे शुक्लपञ्चम्यां ग्रंथः पूर्णोऽभवच्छिवः ॥ १६ ॥ इति श्रीमन्महाराजाधिराजक्षत्रिकुलार्कमरुदेशान्तर्गत--श्रीबीकानेराधिपतिश्रीगंगासिंहवर्म्मणां समाज्ञया श्रीरत्नगढनिवासिना गौडवंशोद्भवेन वासिष्ठगोत्रोत्पन्नश्रीरामकृष्णाऽमरचन्द्रशर्मणां पौत्रेण श्रीकस्तूरिचन्द्रात्मजेन श्रीचतुर्भुजदत्तसूनुना श्रीमहादेवभक्तमाध्यन्दिनवाजसनेयिनानानिबन्धकर्त्रा पण्डितश्रीचतुर्थीलाल ( चौथमल्ल ) शर्म्मणा विरचिते चातुर्थीलालभास्करे महानिबन्धे बहुसाहस्रे सर्वदेव--प्रतिष्ठाप्रकाशाख्यप्रथमग्रन्थेऽष्टमः परिच्छेदः समाप्तः ॥ ८ ॥

१ 'चतुर्थिलाल' इति नाम 'चतुर्थीलाल' इति तु छन्दोऽनुरोधेन। एवं 'गुरु ( रू ) मुख' इत्यपि बोध्यम्। २ प्रतिष्ठाप्रकाशः, ३ शांतिप्रकाशः, ४ श्राद्धप्रकाशः, ५ मुहूर्तप्रकाशः, ६ उत्सर्गप्रकाशः, ७ अनुष्ठानप्रकाशः, ८ संस्कारप्रकाशः, ९ प्रायश्चित्तप्रकाशः, १० शुद्धिप्रकाशः, ११ चिकित्साप्रकाशः, १२ उद्यापनप्रकाशः, १३ सनातनधर्मप्रकाशः।

॥ अथ परिशेषपरिच्छेदः ॥ तत्र तावद्देवालयकरणे माहात्म्यमाह ( प्रतिष्ठातत्त्वे यमः ) । कृत्वा देवगृहं सर्वं प्रतिष्ठाप्य च देवताम् ॥ विधाय विधिवत् पूजां तल्लोकं विन्दते ध्रुवम् ॥ १ ॥ देवस्य प्रतिमायास्तु यावन्तः परमाणवः ॥ तावद्वर्षसहस्राणि विष्णुलोके महीयते ॥ २ ॥ ( नृसिंहपुराणेऽपि ) प्रतिमां लक्षणोपेतां नरसिंहस्य कारयेत ॥ सर्वपापानि संत्यज्य स तु विष्णुपुरं व्रजेत् ॥ ३ ॥ प्रतिष्ठां नरसिंहस्य यः करोति यथाविधि ॥ निष्कामो नरशार्दूल देहबन्धात् प्रमुच्यते ॥ ४ ॥ सकामो नरसिंहस्य पुरं प्राप्य प्रमोदते ॥ ( नरसिंहस्य विष्णोः ) ॥ ( नारदीयेऽपि ) देवतायतनं यस्तु कुरुते कारयत्यपि ॥ शिवस्यापि हरेर्वापि तस्य पुण्यफलं शृणु ॥ ५ ॥ मातृतः पितृतश्चैव लक्षकोटि कुलान्वितः ॥ कल्पत्रयं विष्णुपदे तिष्ठत्येव न संशयः ॥ ६ ॥ मृदैव कुरुते यस्तु देवतायतनं नरः ॥ दिव्यदेहधरो भूत्वा विमानवरमास्थितः ॥ ७ ॥ कल्पत्रयं विष्णुपदे स्थित्वा ब्रह्मपुरं व्रजेत् ॥ कल्पद्वयं स्थितस्तत्र पुनः कल्पं वसेद्दिवि ॥ ८ ॥ ततस्तु योगिनामेव कुले जातो दया न्वितः ॥ वैष्णवं योगमास्थाय मुक्तिं व्रजति शाश्वतीम् ॥ ९ ॥ दारुभिः कुरुते यस्तु तस्य स्याद्द्विगुणं फलम् ॥ त्रिगुणं चेष्टकाभिस्तु शिला भिस्तच्चतुर्गुणम् ॥ १० ॥ स्फाटिकाभिः शिलाभिस्तु ज्ञेयं दशगुणोत्तरम् ॥ दृषद्भिस्तु धनी कुर्यान्मृदा निष्किञ्चनो जनः ॥ ११ ॥ तयोः फलं समानं स्यादित्याह कमलोद्भवः ( वामनपुराणेऽपि ) यः कारयेन्मन्दिरं केशवस्य पुण्याँल्लोकान् स जयेच्छाश्वतान् वै ॥ दत्त्वा वासात्पु ष्पफलाभिपन्नान् भोगान् भुङ्क्ते कामतः श्लाघनीयान् ॥ १२ ॥ आसप्तमं पितृकुलं तथा मातृकुलं नरः ॥ तारयेदात्मना सार्द्धं विष्णोर्मन्दिर कारकः ॥ १३ ॥ इमाश्च पितरो दैत्या गाथा गायन्ति योगिनः ॥ पुरतो यदुसिंहस्य ह्यनघस्य तपस्विनः ॥ १४ ॥ अपि नः स्वकुले कश्चिद्वि ष्णुभक्तो भविष्यति ॥ हरिमन्दिरकर्ता यो भविष्यति शुचिव्रतः ॥ १५ ॥ ( अग्निपुराणेऽपि ) ये ध्यायन्ति सदा बुद्ध्या करिष्यामो हरेर्गृ हम् ॥ तेषां विलीयते पापं पूर्वजन्मशतोद्भवम् ॥ १६ ॥ समतीतं भविष्यं च कुलानामयुतं नरः ॥ विष्णुलोकं नयत्याशु कारयेद्‌ वा हरे

गृहम् ॥ १७ ॥ लक्षेणाऽथ सहस्रेण शतेनार्द्धेन वा हरेः ॥ तुल्यं फलं समाख्यातमिहेश्वरदरिद्रयोः ॥ १८ ॥ ( विष्णुधर्मोत्तरे ) कृत्वा वासगृहं तस्य देवस्य परमेष्ठिनः ॥ राजसूयाश्वमेधाभ्यां फलेन सह युज्यते ॥ १९ ॥ प्रासादे मृन्मये पुण्यं मयैतत् कथितं द्विजा । तस्माद्दारुमये पुण्यं कृते शतगुणं भवेत् ॥ २० ॥ ततो दशगुणं पुण्यं तथा शैलमये भवेत् ॥ ततो दशगुणं लौहे ताम्रे शतगुणं ततः ॥ २१ ॥ सहस्रगुणितं रौप्ये तस्मात् फलमवाश्नुते ॥ ततः शतसहस्रं वै सौवर्णे द्विजसत्तमाः ॥ २२ ॥ अनन्तं फलमाप्नोति रत्नचित्रे मनोहरे ॥ ( स्कान्देऽपि ) आरम्भे कृष्णधिष्ण्यस्य सप्तजन्मनि यत् कृतम् ॥ पापं विलयमाप्नोति नरकादुद्धरेत् पितॄन् ॥ २३ ॥ प्रासादपादे कृष्णस्य यावत्तिष्ठन्ति रेणवः ॥ तावद्वर्षसहस्राणि वसते विष्णुसद्मनि ॥ २४ ॥ प्रासादे कृष्णदेवस्य चित्रकर्म करोति यः ॥ वसते विष्णुलोके तु यावत्तिष्ठन्ति सागराः ॥ २५ ॥ ( मात्स्येऽपि ) घण्टावितानकसतोरणचित्रयुक्तं नित्योत्सवप्रमुदितेन जनेन सार्द्धम् ॥ यः कारयेत् सुरगृहं विविधध्वजाढ्यं श्रीस्तं न मुञ्चति सदा दिवि पूज्यते च ॥ २६ ॥ अथ जीर्णोद्धारकरणे फलम् ॥ ( विष्णुधर्मोत्तरे तृतीयकाण्डे ) यस्य राज्ञस्तु विषये देववेश्म विशीर्य्यते ॥ तस्य सीदति तद्राज्यं देववेश्म यथा तथा ॥ १ ॥ कृत्वा जीर्णस्य संस्कारं तथा देवेशवेश्मनः ॥ द्विगुणं फलमाप्नोति नात्र कार्य्या विचारणा ॥ २ ॥ ( विष्णुरहस्येऽपि ) पतितस्य च यः कर्त्ता पतमानस्य रक्षिता ॥ विष्णोरायतनस्येह स नरो विष्णुलोकभाक् ॥ ३ ॥ ( अग्निपुराणेऽपि ) पतितं पतमानं च तथार्द्धस्फुटितं नरः । समुद्धृत्य हरेर्धाम द्विगुणं फलमाप्नुयात् ॥ ४ ॥ ( देवीपुराणेऽपि ) मूलाच्छतगुणं पुण्यं प्राप्नुयाज्जीर्णकारकः ॥ तस्मात् सर्वप्रयत्नेन जीर्णस्योद्धारमाचरेत् ॥ ५ ॥ ( हयशीर्षपञ्चरात्रे ) वापीकूपतडागानां सुरधाम्नां तथाऽनघ ॥ प्रतिमानां सभानां च संस्कर्ता यो नरो भुवि ॥ पुण्यं शतगुणं तस्य भवेन्मूलान्न संशयः ॥ ६ ॥ ( अथ मन्दिरयोग्यस्थानं देवीपुराणे ) देवो विष्णुस्तथा रुद्रो ब्रह्माद्याः सुरसत्तमाः ॥ प्रतिष्ठाप्याः शुभे स्थाने अन्यथा ते भयावहाः ॥ १ ॥ गर्तादिलक्षणा धात्री गन्धस्वादेन या भवेत् ॥

वर्णेन च सुरश्रेष्ठ सा मही सर्वकामदा ॥ २ ॥ फालकृष्टेऽथ वा देशे सर्वबीजानि रोपयेत् ॥ त्रिपञ्चसप्तरात्रेण यत्र रोहन्ति तान्यपि ॥ ज्येष्ठा मध्या कनिष्ठा भूर्वर्ज्जनीयेतरा सदा ॥ ३ ॥ ( शुक्रनीतिसारे ) यज्जातिपूज्यो यो देवस्तद्विद्यायाश्च यो गुरुः ॥ तदालयानि तज्जातिगृहपंक्तिमुखे न्यसेत् ॥ ४ ॥ शृङ्गाटके ग्राममध्ये विष्णोर्वा शङ्करस्य च ॥ गणेशस्य रवेर्देव्याः प्रासादान् क्रमतो न्यसेत् ॥ ५ ॥ ( अथ मन्दिरद्वारनिर्णयो हयशीर्षपञ्चरात्रे ) ग्राममध्ये च पूर्वे च प्रत्यग्द्वारं प्रकल्पयेत् ॥ विदिशासु च सर्व्वासु तथा प्रत्यङ्मुखं भवेत् ॥ दक्षिणे चोत्तरे चैव पश्चिमे प्राङ्मुखं भवेत् ॥ १ ॥ ( मन्दिरयोग्यस्थानं बृहत्संहितायाम् ) कृत्वा प्रभूतं सलिलमारामान् विनिवेश्य च ॥ देवतायतनं कुर्याद् यशोधर्माभिवृद्धये ॥ १ ॥ इष्टापूर्त्तेन लभ्यन्ते ये लोकास्तान्विभूषता ॥ देवानामालयः कार्यो द्वयमप्यत्र दृश्यते ॥ २ ॥ वनोपान्तनदीशैलनिर्झरोपान्तभूमिषु ॥ रमन्ते देवता नित्यं पुरेषूद्यानवत्सु च ॥ ३ ॥ भूमयो ब्राह्मणादीनां याः प्रोक्ता वास्तुकर्मणि ॥ ता एव तेषां शस्यन्ते देवतायतनेष्वपि ॥ ४ ॥ चतुष्पष्टिपदं कार्यं देवतायतनं सदा ॥ द्वारं च मध्यमं तत्र समदिक्स्थं प्रशस्यते ॥ ५ ॥ ( मन्दिरस्योच्चतापि तत्रैव ) यो विस्तारो भवेद्यस्य द्विगुणा तत्समुन्नतिः ॥ उच्छ्रायाद्यस्तृतीयोंशस्तेन तुल्या कटिर्भवेत् ॥ १ ॥ विस्तारार्द्धं भवेद्गर्भो भित्तयोऽन्याः समन्ततः ॥ गर्भपादेन विस्तीर्णं द्वारं द्विगुणमुच्छ्रितम् ॥ २ ॥ उच्छ्रायात् पादविस्तीर्णा शाखा तद्वदुदुम्बरः ॥ विस्तारपादप्रतिमं बाहुल्यं शाखयोः स्मृतम् ॥ ३ ॥ त्रिपञ्चसप्तनवभिः शाखाभिस्तत् प्रशस्यते ॥ अधः शाखा-चतुर्भागे प्रतिहारौ निवेशयेत् ॥ ४ ॥ शेषं मङ्गल्यविहगैः श्रीवृक्षस्वस्तिकैर्घटैः ॥ मिथुनैः पत्रवल्लीभिः प्रथमैश्चोपशोभयेत् ॥ ५ ॥ द्वारमानाष्टभागोना प्रतिमा स्यात् सपिण्डिका ॥ ( मन्दिरनामानि तल्लक्षणानि च तत्रैव ) ॥ ६ ॥ मेरु[१]-मन्दर[२]-कैलास[३]-विमान[४]च्छन्द-नन्दनाः[५] ॥ समुद्र[६]-पद्म[७]-गरुड[८]-नन्दिवर्धन[९]-कुञ्जराः[१०] ॥ १ ॥ गुहराजो[११] वृषो[१२] हंसः[१३] सर्वतोभद्रको[१४] घटः[१५] ॥ सिंहो[१६] वृत्त[१७]श्चतुष्कोणः[१८]-षोडशा[१९]-ष्टास्रयस्तथा[२०] ॥ २ ॥ इत्येते विंशतिः प्रोक्ताः प्रासादाः संज्ञया मया ॥ यथो

क्रमानुक्रमेणैव लक्षणानि वदाम्यतः ॥ ३ ॥ तत्र षडस्त्रिर्मेरुर्द्वादशभौमो विचित्रकुहरश्च ॥ द्वारैर्युतश्चतुर्भिर्द्वात्रिंशद्धस्तविस्तीर्णः ( १ ) ॥ ४ ॥
त्रिंशद्धस्तायामो दशभौमो मन्दरः शिखरयुक्तः ( २ ) ॥ कैलासोऽपि शिखरवानष्टाविंशोष्ट भौमश्च ( ३ ) ॥ ५ ॥ जालगवाक्षकयुक्तो विमान
संज्ञस्त्रिसप्तकायामः ( ४ ) नन्दन इति षड्भौमो द्वात्रिंशत्षोडशाण्डयुतः ( ५ ) ॥ ६ ॥ वृत्तः समुद्गनामा पद्मः पद्माकृतिः शयानष्टौ ॥ शृंगेणै
केन भवेदेकैव च भूमिका तस्य ( ६ ) ( ७ ) ॥ ७ ॥ गरुडाकृतिश्च गरुडो (८) नन्दीति च षट्चतुष्कविस्तीर्णः ॥ कार्यश्च सप्तभौमो विभूषितोण्डैश्च
विंशत्या ( ९ ) ॥ ८ ॥ कुञ्जर इति गजपृष्ठः षोडशहस्तः समन्ततो मूलात् ( १० ) गुहराजः षोडशकस्त्रिचन्द्रशाला भवेद्वलभी ( ११ ) ॥
॥ ९ ॥ वृष एकभूमिश्रृङ्गो द्वादशहस्तः समन्ततो वृत्तः ( १२ ) ॥ हंसो हंसाकारो ( १३ ) घटोऽष्टहस्तः कलशरूपः ( १४ )
॥ १० ॥ द्वारैर्युतश्चतुर्भिर्बहुशिखरो भवति सर्वतोभद्रः ॥ बहुरुचिरचन्द्रशालः षड्विंशः पञ्चभौमश्च ( १५ ) ॥ ११ ॥ सिंहः सिंहा
क्रान्तो द्वादशकोणोऽष्टहस्तविस्तीर्णः ( १६ ) ॥ चत्वारोऽञ्जनरूपाः पञ्चाण्डयुतस्तु चतुरस्रः ॥ ( १७ । १८ । १९ । २० ) ॥ १२ ॥
( शिखरप्रमाणं शुक्रनीतिसारे ) प्रतिमायास्तृतीयांशमर्द्धांशं वा सुपीठकम् ॥ द्विगुणं त्रिगुणं द्वारं प्रतिमायाश्चतुर्गुणम् ॥ १ ॥
एक-द्वि-त्रि-चतुर्हस्तं पीठं देवालयस्य च ॥ पीठतस्तु समुच्छायो भित्तेर्दशकराधिकः ॥ २ ॥ द्वारात्तु द्विगुणोच्छ्रायः प्रासादस्योर्ध्वभू
मिभाक् । शिखरं चोच्छ्रायसमं द्विगुणं त्रिगुणं तु वा ॥ ३ ॥ एकभूमिं समारभ्य सपादशतभूमिकम् ॥ प्रासादं कारयेच्छक्त्या ह्यष्टास्रं
पद्मसन्निभम् ॥ ४ ॥ चतुर्दिङ्मण्डपं वापि चतुश्शालं समन्ततः ॥ प्रासादे मण्डपे वापि शिखरं यदि कल्पयेत ॥ ५ ॥ स्तम्भा
स्तत्र न कर्त्तव्या भित्तिस्तत्र सुखप्रदा ॥ प्रासादमध्यविस्तारः प्रतिमायाः समन्ततः ॥ ६ ॥ षड्गुणोऽष्टगुणो वापि पुरतो वा सुविस्तरः ॥ वा
हनं मूर्त्तिसदृशं सार्द्धं वा द्विगुणं स्मृतम् ॥ देवतायाश्च पुरतो मण्डपे वाहनं न्यसेत् ॥ ७ ॥ ( विश्वकर्मप्रकाशे ) शिखरस्य चतुर्भागाः कर्तव्या

स्यात् प्रदक्षिणा ॥ प्रदक्षिणायास्तु समस्त्वग्रतो मण्डपो भवेत् ॥ तस्य चार्द्धेन कर्तव्यस्त्वग्रतो मुखमण्डपः ॥ ८ ॥ ( गारुडेऽपि ) पुरतो वाहना
नां च कर्त्तव्या लघुमण्डपाः ॥ नाटचशाला च कर्त्तव्या द्वारदेशसमाश्रया ॥ ९ ॥ प्रासादा देवतानां च कार्या दिक्षु विदिक्ष्वपि ॥ द्वारपालाश्च
कर्त्तव्या मुख्या गत्वा पृथक् पृथक् ॥ १० ॥ किंचिद्विदूरतः कार्य्या मठास्तत्रोपजीविनाम् ॥ प्रावृता जगती कार्य्या फल-पुष्प-जलान्विता ॥११॥
प्रासादेषु सुरान् स्थाप्य पूजाभिः पूजयेन्नरः ॥ वासुदेवं सर्वदेवान् सर्वभाक् तद्गृहादिकृत् ॥ १२ ॥ ( अथ प्रतिमाविचारो मात्स्ये ) सौवर्णी
राजती वापि ताम्री रत्नमयी शुभा ॥ शैलदारुमयी चापि लौहसीसमयी तथा ॥ १ ॥ रीतिकाधातुयुक्ता वा ताम्रा कांस्यमयी तथा ॥ शुभ
दारुमयी वापि देवतार्चा प्रशस्यते ॥ २ ॥ अङ्गुष्ठपर्वादारभ्य वितास्तिर्यावदेव तु ॥ गृहेषु प्रतिमा कार्या नाधिका शस्यते बुधैः ॥ ३ ॥
आषोडशात्तु प्रासादे कर्त्तव्या नाधिका ततः ॥ मध्योत्तमकनिष्ठास्तु कार्य्या वित्तानुसारतः ॥ ४ ॥ द्वारोच्छ्रायस्य यन्मानमष्टधा तं तु कारयेत् ॥
भागद्वयेन प्रतिमा त्रिभागीकृत्य तत् पुनः ॥ पीठिकाभागतः कार्य्या नातिनीचा च चोच्छ्रिता ॥ ५ ॥ ( बृहत्प्रासादे बृहत्प्रतिमा उक्ता
बृहत्संहितायाम् ) सौम्या तु हस्तमात्रा वसुदा हस्तद्वयोच्छ्रिता प्रतिमा ॥ क्षेमसुभिक्षाय भवेत्त्रिचतुर्हस्तप्रमाणा या ॥ १ ॥ ( गौतमीय
तन्त्रे ) काश्मरी ज्ञानदा प्रोक्ता स्वर्णजापि विमुक्तिदा ॥ तेजोदा दारुजा चैव रैतिकी शत्रुनाशिनी ॥ २ ॥ ताम्री धर्मविवृद्धिं च करोति
बहुसौख्यदा ॥ मृदैव मृन्मयी प्रोक्ता प्रतिमा शुभलक्षणा ॥ भोगदा मोक्षदा सा तु प्रतिमा कथिता तव ॥ ३ ॥ ( प्रतिष्ठातत्त्वे तन्त्रान्तरे च )
चिन्मयस्याऽद्वितीयस्य निष्कलस्याऽशरीरिणः ॥ उपासकानां कार्य्यार्थं ब्रह्मणो रूपकल्पना ॥ ४ ॥ ( निषिद्धप्रतिमाफलं मात्स्ये ) न हीना
नाधिकाङ्गी च कर्त्तव्या देवता क्वचित् ॥ स्वामिनं घातयेन्न्यूना करालवदना तथा ॥ १ ॥ अधिका शिल्पिनं हन्यात् कृशा चैवार्थनाशिनी ॥
कृशोदरी तु दुर्भिक्षं निर्मांसा धननाशिनी ॥ २ ॥ वक्रनासा तु दुःखाय संक्षिप्ताङ्गी भयङ्करी ॥ चिपिटा दुःखशोकाय अनेत्रा नेत्रनाशिनी ॥३॥

दुःखदा हीनवक्त्रा तु पाणिपादकृशा तथा ॥ हीनाङ्गा हीनजङ्घा च भ्रमोन्मादकरी नृणाम् ॥ ४ ॥ वक्रवक्त्रा तु राजानं कटिहीना च या भवेत् ॥ पाणिपादविहीनायां जायते नरको महान् ॥ ५ ॥ जङ्घाजानुविहीना च शत्रुकल्याणकारिणी ॥ पुत्रमित्रविनाशाय हीना वक्ष स्थलैस्तु या ॥ ६ ॥ संपूर्णावयवा या तु ह्यायुर्लक्ष्मीप्रदा सदा ॥ एवं लक्षणमासाद्य कर्त्तव्यः परमेश्वरः ॥ ७ ॥ ( शुक्रनीतिसारे ) तिष्ठन्तीं सूपविष्टां वा स्वासने वाहनस्थिताम् ॥ प्रतिमामिष्टदेवस्य कारयेदुक्तलक्षणाम् ॥ ८ ॥ हीनश्मश्रुनिमेषां च सदा षोडशवार्षिकीम् ॥ दिव्याभ रणवस्त्राढ्यां दिव्यवर्णक्रियां सदा ॥ ९ ॥ वस्त्रैरापादगूढां च दिव्यालङ्कारभूषिताम् ॥ लेख्या लेप्या सैकती च मृण्मयी पैष्टिकी तथा ॥ १० ॥ एतासां लक्षणाभावे न कैश्चिद्दोष ईरितः ॥ बाणलिङ्गे स्वयम्भूते चन्द्रकान्तसमुद्भवे ॥ ११ ॥ रत्नजे गण्डकोद्भूते मानदोषो न सर्वथा ॥ पाषाणधातुजायां तु मानदोषान् विचिन्तयेत् ॥ १२ ॥ श्वेत-पीत-रक्त-कृष्ण-पाषाणैर्युगभेदतः ॥ प्रतिमां कल्पयेच्छिल्पी यथारुच्यपरैः स्मृता ॥ १३ ॥ श्वेता स्मृता सात्त्विकी तु पीता रक्ता तु राजसी ॥ तामसी कृष्णवर्णा तु ह्युक्तलक्ष्मयुता यदि ॥ १४ ॥ सौवर्णी राजती ताम्री रैतिकी वा कृतादिषु ॥ शाङ्करी श्वेतवर्णा तु कृष्णवर्णा च वैष्णवी ॥ १५ ॥ सूर्य-शक्ति-गणेशानां ताम्रवर्णा स्मृताऽपि च ॥ लोह-सीसमयी वाऽपि यथोद्दिष्टा स्मृता बुधैः ॥ १६ ॥ चलार्चायां स्थिरार्चायां प्रासादाद्युक्तलक्षणाम् ॥ प्रतिमां स्थापयेन्नान्यां सर्वसौख्यविनाशिनीम् ॥ १७ ॥ सेव्य-सेवकभावेषु प्रतिमालक्षणं स्मृतम् ॥ प्रतिमायाश्च ये दोषा ह्यर्चकस्य तपोबलात् ॥ सर्वत्रेश्वरचित्तस्य नाशं यान्ति क्षणात् किल ॥ १८ ॥ ( अथ गरुडादिवाहनप्रतिमाविचारः—शुक्रनीतिसारे ) द्विबाहुर्गरुडः प्रोक्तः सुचञ्चुः स्वक्षिपक्षयुक् ॥ नराकृतिश्चञ्चुमुखो मुकुटी कवचाङ्गदी ॥ १ ॥ बद्धाञ्जलिर्नम्रशीर्षः सेव्यपादाब्जलोचनः ॥ वाहनत्वं गता ये ये देवतानां च पक्षिणः ॥ २ ॥ कामरूपधरास्ते ते तथा सिंहवृषादयः ॥ स्वनामाकृतयश्चैते कार्य्या दिव्या बुधैः सदा ॥ सुभाषिता देवताग्रमण्डपे ध्यानतत्पराः ॥ ३ ॥ ( मात्स्यपुराणेऽपि ) दक्षिणे प्रणतं

तद्वद्गरुत्मन्तं निवेशयेत् ॥ वामतस्तु भवेल्लक्ष्मीः पद्महस्ता शुभानना ॥ गरुत्मानग्रतो वापि संस्थाप्यो भूतिमिच्छता ॥ १ ॥ ( देवालये वृक्षादिस्थापनविचारोऽपि मात्स्ये ) पूर्वेण फलिनो वृक्षाः क्षीरवृक्षास्तु दक्षिणे ॥ पश्चिमे तु जलं श्रेष्ठं पद्मोत्पलविभूषितम् ॥ १ ॥ उत्तरे सरलैस्तालैः शुभा स्यात् पुष्पवाटिका ॥ सर्वतस्तु जलं श्रेष्ठं स्थिरमस्थिरमेव च ॥ २ ॥ पार्श्वतश्चापि कर्त्तव्यं परिवारादिकालयम् ॥ याम्ये तपोवनस्थानमुत्तरे मातृकागृहम् ॥ ३ ॥ महानसं तथाग्नेये नैर्ऋत्येऽथ विनायकम् ॥ वारुणे श्रीनिवासस्तु वायव्ये गृहमालिका ॥ ४ ॥ उत्तरे यज्ञशाला तु निर्माल्यस्थानमुत्तरे ॥ वारुणे सोमदैवत्ये बलिनिर्वपणं स्मृतम् ॥ ५ ॥ पुरतो वृषभस्थानं शेषे स्यात् कुसुमायुतः ॥ जलं वापि तथैशाने विष्णुस्तु जलशाय्यपि ॥ ६ ॥ एवमायतनं कुर्यात् कुण्डमण्डपसंयुतम् ॥ ७ ॥ ( अथ विष्णोर्निर्माल्यधारिविष्वक्सेनप्रतिमाविचारः कालिकापुराणे ८३ अध्याये ) निर्माल्यधारी विष्णोस्तु विष्वक्सेनश्चतुर्भुजः ॥ शङ्ख-चक्र-गदा-पाणिर्दीर्घश्मश्रुर्जटाधरः ॥ १ ॥ रक्तपिङ्गलवर्णस्तु सितपद्मोपरिस्थितः ॥ यत्तृतीयस्वरान्तेन संयुक्तो बिन्दुनेन्दुना ॥ २ ॥ कीर्तितस्तस्य मन्त्रोऽयं तेन तं परिपूजयेत् ॥ विसर्ज्जनं तथा विष्णोरैशान्यां परिकीर्तितम् ॥ ३ ॥ ( शिवनिर्माल्यधारी चण्डेशस्तस्य प्रतिमाविचारोऽष्टमपरिच्छेदे पूर्वोक्त एव स तत्र द्रष्टव्यः ) ॥ ( सात्त्विकहनुमत्प्रतिमा–मन्त्रमहोदधौ ) दहनतप्तसुवर्णसमप्रभं भयहरं हृदये विहिताञ्जलिम् ॥ श्रवणकुण्डलशोभि मुखाम्बुजं नमत वानरराजमिहाद्भुतम् ॥ १ ॥ ( ब्रह्माण्डेऽपि ) स्फटिकाभं स्वर्णकान्तिं द्विभुजं च कृताञ्जलिम् ॥ कुण्डलद्वयसंशोभि मुखाम्भोजं हरिं भजे ॥ २ ॥ ( राजसप्रतिमातन्त्रसारे ) महाशैलं समुत्पाट्य धावन् हि रावणं प्रति ॥ तिष्ठ तिष्ठ रणे दुष्ट घोररावं समुत्सृजन् ॥ १ ॥ लाक्षारक्तारुणं रौद्रं कालान्तकयमोपमम् ॥ ज्वलदग्निसमं नेत्रं सूर्यकोटिसमप्रभम् ॥ अङ्गदाद्यैर्महावीरैर्वेष्टितं रुद्ररूपिणम् ॥ २ ॥ ( अथोच्छिष्टगणप

तिप्रतिमाध्यानं—मन्त्रमहोदधौ ) चतुर्भुजं रक्ततनुं दधानं पाशाङ्कुशौ मोदकपात्रदन्तौ ॥ करैर्दधानं सरसीरुहस्थमुन्मत्तमुच्छिष्टगणेशमीडे ॥ १ ॥

इति प्रतिमाविचारः ॥ इति श्रीमन्महाराजाधिराजक्षत्रियकुलार्कमरुदेशान्तर्गत-श्रीबीकानेराधिपतिश्रीगंगासिंहवर्मणां समाज्ञया श्रीरत्नगढ निवासिना गौडवंशोद्भवेन वासिष्ठगोत्रोत्पन्नश्रीरामकृष्णाऽमरचन्द्रशर्मणां पौत्रेण श्रीकस्तूरिचन्द्रात्मजेन श्रीचतुर्भुजदत्तसूनुना श्रीमहादेवभक्तमाध्यन्दिनवाजसनेयिनानानिबन्धकर्त्रा पण्डितश्रीचतुर्थीलाल-( चौथमल्ल ) शर्म्मणा विरचिते चातुर्थीलालभास्करे महानिबन्धे बहुसाहस्रे सर्वदेवप्रतिष्ठाप्रकाशाख्ये प्रथमग्रन्थे परिशिष्टपरिच्छेदः समाप्तः ॥ ९ ॥

समाप्तश्चायं सर्वदेवप्रतिष्ठाप्रकाशः ॥

---

इदं पुस्तकं क्षेमराज-श्रीकृष्णदासश्रेष्ठिना मुम्बय्यां स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणयन्त्रालये
स्वीयार्थं मुद्रयित्वात्रैव प्रकाशितम् । संवत् १९९१, शके १८५६.



# क्रय्य पुस्तकें ( कर्मकाण्ड-ग्रन्थाः )।

| नाम. | की० रु० आ० |
|---|---|
| **अष्टशान्ति**-इसमें-१ सूर्यादिग्रह, २ सप्तग्रहीयोग, ३ मघारेवत्यादि, ४ ज्वरादिरोगोत्पत्ति, ५ सर्वनक्षत्र, ६ ग्रहण, ७ काकमैथुन दर्शन और ८ पल्लीसरठपतन ये आठ शान्ति हैं .... | ०-२ |
| **अष्टलिङ्गतोभद्र**-रंगीन .... ... .... | ०-१॥ |
| **अन्त्येष्टीश्राद्धकर्मपद्धति**-पं० चतुर्थीलालजीकृत नूतन छप-कर तैयार है .... .... .... .... | १-० |
| **आह्निकसूत्रावली**-यजुर्वेदी-प्रातःस्मरणसे लेकर शयनपर्यंतके सब कर्मप्रयोग एकत्र किये गये हैं .... .... | २-८ |
| **आश्लेषाशान्ति और ज्येष्ठाशान्ति**-इसमें-आश्लेषा और ज्येष्ठा नक्षत्रमें जननकी शान्तिका प्रयोग है ... .... | ०-२ |

| नाम. | की० रु० आ० |
|---|---|
| **उपाकर्मपद्धति**-अर्थात् ( श्रावण शुक्ल १५ की ) शुक्ल यजुर्वेदि-योंकी श्रावणी, इसमें नूतन यज्ञोपवीत धारण करनेका तथा स्नानविधिसमेत प्रयोग लिखा है. .... ... .... | ०-१० |
| **एकोद्दिष्टश्राद्धप्रयोग** .... .... .... | ०-२ |
| **एकलिङ्गतोभद्र**-रङ्गीन .... .... .... | ०-१॥ |
| **कात्यायनीशान्ति**-अर्थात् कात्यायनसूत्रानुसारी ग्रहशान्तिप्रयोग | ०-२ |
| **कात्यायनीतर्पण**-बडा .... .... .... | ०-२ |
| **कुंडविंशतिसंग्रह**-पं० हरिकृष्ण व्यंकटराम संगृहीत. .... | १-४ |
| **कुशकण्डिकाभाष्य**-इसमें-कुण्ड और स्थण्डिलादिकी विधि, ब्रह्मा-स्थापन आदि विषय हैं ... .... .... | ०-४ |

| नाम. | की० रु० आ० |
|---|---|
| **गयायात्रापद्धति**–( गयाजीमें श्राद्धादि करनेकी विधि है ) .... | ०-४ |
| **ग्रहशान्ति**–( शुक्लयजुर्वेदोक्त ) यह यज्ञोपवीत तथा विवाहादि शुभ कर्ममें बहुत उपयोगी है. ... ... .... | ०-१० |
| **गौडीयश्राद्धप्रकाशमहानिबन्ध**–इसमें–श्राद्धस्वरूप, श्राद्धमें ब्राह्मणलक्षण, महालयादिनिर्णय और श्राद्धप्रयोग,क्षयाहश्राद्ध, संकल्पश्राद्ध, हेमश्राद्ध, एकादशाहादिश्राद्ध, मासिकश्राद्ध, मघादिश्राद्ध तथा नान्दीश्राद्धादि बहुतसे श्राद्ध और विष्णवादिपूजन, पितृतर्पणादि अपूर्व संग्रह है । चारों वर्णोंको उपयोगी है ... | ४-० |
| **गोदानपद्धति**–इसमें–गौदान देनेवालेको गौका पूजन, दान आदि का संकल्प भलीभांति लिखा गया है. .... .... | ०-२ |
| **गोदानव्यवस्था.** .... .... .... .... | ०-१॥ |
| **गोविन्दार्चनचन्द्रिका**-इसमें सम्पूर्ण कर्मकाण्ड और व्रतादिका अपूर्व संग्रह है । यह"गोविन्दार्चनचन्द्रिका" ग्रन्थ अर्चनाग्रन्थोंमें अत्युत्तम संग्रह किया है । यह ग्रन्थ श्रौत और स्मार्तधर्मोंको प्रकाश करता हुआ गोविन्द–भगवान्‌की पूजा–अर्चनको १६ उल्लासोंमें प्रकाशित करता है .... .... .... | ६-० |
| **चतुर्लिङ्गतोभद्र**–रङ्गीन .... .... .... .... | ०-१॥ |
| **जलाशयोत्सर्गप्रकाश–महानिबन्ध**–अर्थात् वापी, कूप, तडागादिकृत्योंकी शान्ति–कलशस्थापनसे लेके होमतक भलीभांति है .... .... .... .... | २-० |
| **जन्मदिनपूजापद्धति**–अर्थात् प्रतिवर्ष अपने २ जन्ममें पूजनीय देवकी पूजनविधि .... .... .... .... | ०-२ |
| **ज्येष्ठाशान्ति**–ज्येष्ठानक्षत्रमें जननादि शान्ति .... .... | ०-२ |
| **तुलसीविवाहविधि**–इसमें कार्तिकशुक्ल ११ एकादशीके रोज तुलसी और भगवान्‌की लग्नविधि लिखी है ... ... | ०-३ |

| नाम. | की० रु० आ० |
|---|---|
| **वृद्धिश्राद्ध**–इसमें वृद्धिश्राद्धादि निर्णय, नान्दीमुखश्राद्ध, आभ्युदयिक श्राद्धादि प्रयोग हैं. .... .... .... | ०–६ |
| **वेदोक्तगृहवास्तुपद्धति.** .... .... ... | ०–८ |
| **वैवाहपद्यावली**–भाषाटीकासमेत। अर्थात् कन्यापक्ष और वरपक्षमें उत्तमोत्तम काव्यसे प्रशंसा विनतीमें वर्णन की है. | ०–१२ |
| **शान्तिप्रकाश**–इसमें–पहिले गणपत्यादिपूजन, पुण्याहवाचन, कलशस्थापनादि और विनायकादि ३० शान्तिप्रयोग तथा वास्तुशान्ति प्रयोगादि समन्त्रक हैं .... .... .... | ३–० |
| **श्राद्धविवेक**–प्रमाणयुक्त सब प्रकारके श्राद्धोंकी विधि है.... ... | १–० |
| **श्राद्धमयूख** ... .... .... ... | ०–८ |
| **शूद्रविवाहविधि**–( नामहीसे समझलेना ) .... .... | ०–२ |
| **शूद्रश्राद्धपद्धति**–( पुराणोक्तमन्त्रोंसे शूद्रोंकी श्राद्धविधि ) .... | ०–१० |

| नाम. | की० रु० आ० |
|---|---|
| **नित्यकर्मपद्धति**–यह छोटासा ग्रन्थ बहुत उपयोगी है ... | ०–२॥ |
| **प्रतिष्ठासंग्रह**–यह ग्रन्थ प्रतिष्ठा करानेके लिये बहुतही उत्तम है। पं० रामलालजीने चार किरणों ( प्रकरणों ) में निर्माण किया है। यह समन्त्रक ग्रन्थ सर्वसंग्रहोपयोगी है. .... | ४–० |
| **पञ्चमहायज्ञ**–सटीक अर्थात् सन्ध्या, तर्पण, नित्यश्राद्ध, बलिवैश्वदेवकर्म, तथा प्रायश्चित्तयज्ञ है .... .... | ०–९ |
| **पञ्चमहायज्ञ**–भाषाटीकासमेत. ... .... .... | ०–४ |
| **पूजापंकजभास्कर**–पाचों देवताओंके वैदिक मन्त्रोंसे यथोपचार पूजाप्रकरण हैं, .... .... .... .... | १–० |
| **यन्त्रचिन्तामणि.** .... .... .... .... | ०–६ |
| **रुद्रविधानपद्धति**–वैदिकमिश्रमन्त्रोंसे पूजाप्रकरण. ... | ०–६ |
| **लम्बोदरीहवनपद्धति,** ... ... .... | ०–५ |

| नाम. | की० रु० आ० |
|---|---|
| तुलसीपूजापद्धति. ... .... | ०–१ |
| तुलसीसन्ध्या–भाषाटीकासहित श्रीस्वामी–विद्याप्रकाश विरचित. .... ... ... | ०–१॥ |
| दशकर्मपद्धति–इसमें–गर्भाधान, पुंसवन, सीमन्तोन्नयन, नामकर्म, निष्क्रमण–अन्नप्राशन, चूडाकर्म, कर्णवेध, उपनयन, वेदारम्भ, समावर्तन, विवाह और चतुर्थीकर्मादि विषय हैं ... .... .... | ०–८ |
| बृहत्कर्मकाण्डसमुच्चय–इसमें–मरणसमयसे लेकर मरणविधान अन्त्येष्टिकर्म तथा शान्तिके विषय वर्णित हैं. .... .... | ०–६ |
| भद्रमार्त्तण्ड–कर्मकाण्डमें आवाहित देवताओंके बैठानेके लिये भद्र बनाये जाते हैं, क्योंकि उनके बिना यज्ञादि बड़े २ अनुष्ठान पूर्ण ही नहीं होत। अतएव उक्त ग्रन्थमें ब्रह्मा, विष्णु, शिव, गौरी, गणेश आदि देवताओंके अनुष्ठानके उपयोगी स्वस्तिक, लिंगतोभद्र, अष्टदल, गौरीतिलक आदि भद्रोंके चित्र और उनके बनानेकी विधि वर्णित है. .... .... .... .... | १–४ |
| भस्मधारणाविधि. .... .... .... .... | ०–१॥ |
| मङ्गलाष्टकशाखोच्चार–विवाहमें नीतियुक्त मधुर वचन बोलनेकी रीति. .... .... .... .... | ०–१॥ |
| मूलशान्ति–मूलनक्षत्रमें जन्मका शान्ति प्रयोग. .... .... | ०–२॥ |
| यज्ञोपवीतपद्धति–मूल–इसमें यज्ञोपवीतका संपूर्ण संस्कार और वेदारंभादि विषय हैं. .... .... .... | ०–३ |
| यज्ञोपवीतपद्धति–भाषाटीकासहित. .... .... | ०–१० |
| यजुर्वेदआह्निक–इसमें–प्रातःकालसे शयनपर्यंतके स्नान, संन्ध्या, तर्पण पूजादि प्रयोग हैं. .... .... | १–० |
| देवऋषितर्पण–नित्योपयोगी है अवश्य संग्रहमें रखिये. ... | ०–॥। |
| द्वादशलिङ्गतोभद्र–रंगीन ... .... .... | ०–१॥ |

| नाम. | की० रु० आ० |
| --- | --- |
| **सकामशिवपूजन-विधान**-भाषाटीकासमेत । वैदिक तान्त्रिक मन्त्रोंसे शिवपूजन. .... .... .... | ०-५ |
| **सर्वतोभद्र चक्र**-रंगीन. ... ... ... | ०-१॥ |
| **सर्वपूजा**-इसमें पुराणोक्त मन्त्रोंसे देवपूजाप्रयोग है. ... | ०-२ |
| **धनिष्ठापञ्चकशान्ति**- धनिष्ठासे रेवती नक्षत्रतक पंचक आते हैं उनकी शान्ति इसमें लिखी गयी है. .... .... | ०-२॥ |
| **नवग्रहकांडी**-( नित्यपूजाविधानपद्धति ) वैदिक मंत्रोंकी संस्कृत-टीका तथा भाषाटीकासहित. .... .... | ०-२ |
| **नवग्रहविधानपद्धति**-मनुष्यको अनिष्ट ग्रह होनेपर प्रत्येक ग्रहके स्तोत्र-पाठादि पढनेको अवश्य लेना चाहिये. ... | ०-६ |
| **नवरत्नविवाहपद्धति**-भाषाटीकासहित । इसमें-विवाहप्रश्न, वैधव्य-योगशान्ति, सावित्री व्रतविधान, पिप्पलविवाह, कुंभविवाह आदि, अच्युतविवाहविधान, मण्डपचित्र, स्वस्तिवाचन, गणपतिपूजन, ग्रह- | |

| नाम. | की० रु० आ० |
| --- | --- |
| शान्ति, प्रतिज्ञासंकल्प,कन्यादानसंकल्प और चतुर्थीकर्मादि बहुतसे विषय हैं. ... .... .... ... | १-८ |
| **नारायणबलिप्रयोग**-इसमें जीर्णव्रतोद्धारके लिये श्राद्ध लिखा गया है | ०-८ |
| **नान्दीमुखश्राद्ध** .... .... .... .... | ०-२॥ |
| **नारदपञ्चरत्न**-अर्थात् **भारद्वाजसंहिता**—संस्कृतटीकासहित | १-४ |
| **पुत्तलविधानपद्धति** .... .... .... .... | ०-३ |
| **वासिष्ठीहवनपद्धति**-इसमें कलशादि स्थापन, गणपतिपूजन, पुण्याहवाचन, मातृकापूजन,नांदीश्राद्ध, ग्रहमखादि सुगमरीतिसे हैं | ०-५ |
| **विष्णुपूजा**-भाषाटीकासहित-जिसमें विष्णुपूजाकी बहुत उत्तम विधि लिखी है .... .... .... ... | ०-२ |
| **विनायकशान्ति**-अर्थात् गणेशपूजन और होमविधि.... .... | ०-२ |
| **विवाहपद्धति**-मूल-कन्यादानादि संकल्प और चतुर्थीकर्मादि विषय हैं | ०-८ |

| नाम. | की० रु० आ० |
|---|---|
| विवाहपद्धति–मूल पं० चतुर्थीलालजी कृत .... .... | ०–६ |
| नित्यकर्मप्रयोगमाला–पं० चतुर्थीलालजी कृत. ... | १–० |
| प्रेतमञ्जरी–भाषाटीकासहित । इसमें–वैतरणीदान, प्रेतका दाहविधि, दशाहादिश्राद्ध, एकादशाहश्राद्ध, वृषोत्सर्ग, शय्यादानादि, सपिंडीश्राद्ध, षोडशमासिकश्राद्धप्रयोग, त्रयोदशाह दशदानादि भली-प्रकार दर्शाया है ... ... ... | ०–८ |
| वरदगणेशपूजा–अर्थात् भाद्रपद शुक्लचतुर्थीका गणेशपूजन-प्रयोग. ... ... ... ... | ०–२ |
| व्रतोद्यापनकौमुदी–यह ग्रन्थ व्रतोंके उद्यापनमें अतिउत्तम है... | १–० |
| व्रतोद्यापनप्रकाश–पं० चतुर्थीलालजीकृत—इसमें चैत्रशुक्ल प्रतिपदासे लेकर वर्षभरके संपूर्णव्रतोंकी अत्युत्तम पद्धति है. | १–१२ |
| वास्तुप्रतिष्ठासङ्ग्रह–पं० श्रीरामचन्द्रकृत--यह ग्रन्थ वास्तुविषयमें अद्वितीय है, इसमें वास्तुप्रतिष्ठाप्रक्रिया, वास्तु शान्तिप्रयोग, भूम्यादिपूजन, विश्वकर्मपूजन, प्रधानमूर्ति–स्थापनादि, कुशकण्डिका, हवन, प्रवेशविधि, दीप, चुल्ली, उलूखल, मुशल, सन्धानभाण्ड, जलस्थानपूजन आदि उपयोगी सभी विषय हैं, कर्मकाण्डियोंको अवश्य संग्रहणीय है .... .... | १–८ |
| वास्तुशान्तिप्रयोग–अर्थात् समस्त नूतन मकानोंका वैदिक मन्त्रोंसे शान्ति तथा प्रयोग लिखा गया है .... .... | ०–७ |

## पुस्तक मिलनेका ठिकाना–

खेमराज श्रीकृष्णदास,
“श्रीवेंकटेश्वर” स्टीम्–प्रेस,
खेतवाडी–बंबई.

गङ्गाविष्णु श्रीकृष्णदास,
“लक्ष्मीवेंकटेश्वर” स्टीम्-प्रेस,
कल्याण–बंबई.

# अत्रेयमभ्यर्थना.

अत्रास्माकं मुद्रणालये ऋगादयो वेदा उपनिषदो वेदान्तग्रन्था महाभारतादीतिहासाः श्रीमद्भागवतादिमहापुराणोपपुराणानि धर्मशास्त्र-कर्मकाण्ड-व्याकरण-न्याय-योग-साङ्ख्य-मीमांसादिशास्त्रीयग्रन्थाः, काव्य-नाटक-चम्पू-प्रभृतयो ग्रन्थाः, सहस्रनामाद्यनेकस्तोत्रग्रन्थाः, विविधभाषाग्रन्थाश्च सीसकोत्तममहल्लघ्वक्षरैर्मनोहरं मुद्रिता योग्यमूल्येन क्रय्याः सन्ति, तांश्च ग्राहका यथापुस्तकसूचीपत्रं मूल्यप्रेषणेन प्राप्नुयुः ।

अधिकमस्मदीयसूचीपत्रेण "श्रीवेङ्कटेश्वरसमाचार" पत्रद्वारा च ज्ञेयमिति शम् ।

खेमराज श्रीकृष्णदासः-"श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणालयाध्यक्षः-मुंबईस्थः ।

